3-4

योगतन्त्र-ग्रन्थमाला

[ एकादशं पुष्पम् ]

ब्रह्मानन्दगिरिविरचिता

# शाक्तानन्दतरङ्गिणी




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

YOGATANTRA-GRANTHAMĀLĀ

[Vol. 11]

# ŚĀKTĀNANDATARAṄGIṆĪ

OF

## BRAHMĀNANDAGIRI

EDITED BY

DR. RĀJANĀTHA TRIPĀTHĪ

Lecturer in the Deptt. of

Sāṁkhya-Yoga-Tantrāgama

Sampurnanand Sanskrit University




VARANASI

1987

Research Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi.



Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer
Sampurnanand Sanskrit University
Varanasi-221002.



Available at—
Sales Department
Sampurnanand Sanskrit University
Varanasi-221002.



First Edition—1100 Copies
Price : Rs. 44.00



Printed by—
Ratna Printing Works
B 21/42 A, Kamachha,
Varanasi-221010.

योगतन्त्र-ग्रन्थमाला

[ एकादशं पुष्पम् ]

ब्रह्मानन्दगिरिविरचिता

# शाक्तानन्दतरङ्गिणी

सम्पादकः
डॉ० राजनाथत्रिपाठी
प्राध्यापकः,
साङ्ख्ययोगतन्त्रागमविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य




वाराणस्याम्

२०४३ तमे वैक्रमाब्दे   १९०८ तमे शकाब्दे   १९८७ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

□

प्राप्तिस्थानम्—
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

□

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि

मूल्यम् —४४-०० रूप्यकाणि

□

मुद्रकः—
रत्ना प्रिंटिंग वर्क्स,
बी० २१/४२ ए०, कमच्छा,
वाराणसी ।

# पुरोवाक्

येनेरिताः प्रवर्तन्ते प्राणिनः स्वेषु कर्मसु ।
तं वन्दे परमात्मानं स्वात्मानं सर्वदेहिनाम् ॥
पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता ।
पवर्गरचितामूर्तिरपवर्गप्रदाऽस्तु वः ॥

तत्राष्टादशोल्लासोल्लसितशाक्तानन्दतरङ्गिणीति नामा ग्रन्थः श्रीब्रह्मानन्दसरस्वतोस्वामिवर्यैः "आब्रह्मानन्दं वेदान्ताः" इति प्रतिष्ठापराकाष्ठां गतै रचितः । वेदान्तशास्त्रतदुपलक्षितसमस्तसच्छास्त्राध्ययनस्य प्रयोजनद्वयम्, ब्रह्मानन्दसरस्वतीप्रणीतग्रन्थनिर्णीतार्थावगाहनम्, तदनुसारिसाधनानुष्ठानद्वारा परमात्मसाक्षात्कारेणानावृत्तपरिपूर्णानन्दानुभवस्थैर्यञ्च । ते एव जगन्मान्या महापुरुषा ग्रन्थस्यास्य निर्मातार इत्यहो परमसौभाग्यमेतदागमशास्त्रविदाम् । महापुरुषा यत्र लिखन्ति सम्मताश्च भवन्ति स भवति सिद्धान्तो मान्यो मानवताम् । अत एव भगवान् पाणिनिः स्वग्रन्थे 'अष्टाध्यायी' इति नामके बह्वोः पूर्वाचार्यसम्मतीः स्वपक्षे निर्दिष्टवान् **'अवङ्स्फोटायनस्य'** **"लोपः शाकल्यस्य"** इत्यादि । अहो ! धन्यमिदं व्याकरणशास्त्रं यत्रैषामाचार्याणामपि सम्मतिर्विद्योततेतमाम् । वेदान्तशास्त्रस्य परमप्रमाणभूते ब्रह्मसूत्रे भगवान् वेदव्यासोऽपि तथैवाचचार । **'अभिव्यक्तेरिति काशकृत्स्नः'** **"धर्मं जैमिनिरत एव"** इत्यादि । ते च श्रीब्रह्मानन्दसरस्तीमहाराजाः सर्वज्ञकल्पा निखिलदर्शनतत्त्ववेत्तार ज्ञानोपासनाविधिविशेषज्ञास्तदन्विताश्चेति तत्कृतिदर्शनादेवावगम्यते । तद्रचितप्रबन्धेष्वन्यतमोऽयं महाप्रबन्धो विविधविषयविलसितो विद्योतते **"शाक्तानन्दतरङ्गिणी"** नामा ।

निगमागमप्रामाण्योपजीवकान्येव वचांसि श्रोतव्यतां मन्तव्यतां निदिध्यासितव्यताञ्च गच्छन्ति । अत एव श्रीरामचरितमानसे तुलसीदासोऽप्याह—

नाना पुराणनिगमागमसम्मतं यद्-
रामायणे निगदितं क्वचिदन्यतोऽपि । इत्यादि ।

अत्रेदं द्रष्टव्यम्—"भिन्नरुचिर्हि लोकः" इत्युक्तेरधिकारिभेदेन प्रस्थान-भेदः। अत एव शिवमहिम्नस्तोत्रे—

रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषाम्।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

इति प्रोक्तम्। श्रीमद्भगवद्गीतायामप्युक्तम्—'न बुद्धिभेदं जनयेत्' इत्यादि। पञ्चदशीग्रन्थे—

अनंशेऽप्यंयशमारोप्य कियदंशे वेति पृच्छतः।
तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी॥ इति।

तद्भाषयेत्यस्य तद्योग्यतानुसारेण तद्भावनामनुपमृद्यैवेति यावत्। यद्वा भाषा कापि भवेत्, किन्तु निरूपणीयविषयस्य निरूपणं समीचीनतया भवेदित्यपि प्रतीमः।

शाक्तानन्दतरङ्गिणी ग्रन्थे निरुक्तानां तत्त्वानां विषये किं वक्तव्यम्। तेषां महत्त्वन्तु लोकोत्तरं वर्तते। पाठकाः स्वयं दृष्ट्वा श्रुत्वा मोदमाना भविष्यन्ति। अस्य ग्रन्थस्य सम्पादकानां कलापि निरीक्षणीया एव। सम्पादकैरायुष्मद्भिस्तन्त्रागमतत्त्वविद्भिः डॉ० राजनाथत्रिपाठिमहाशयैः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयान्तर्गतसाङ्ख्ययोगतन्त्रागमविभागे प्राध्यापकैरत्र या भूमिका रचिता तस्या दर्शनेन विविधा विषया अवगता समाहिताश्च भवन्ति। इदमेव फलं भूमिकायाः।

भूमिका नाम ग्रन्थप्रतिपाद्यविषयाणामवतारणानुकूलो व्यापारः। संक्षेपेण समागतसम्भाव्यानुपपत्तिनिराकरणपूर्वकविषयस्पष्टीकरणपुरःसरमनुक्तान्यत्रोक्तापेक्ष्य विषयनिरूपणमुखेन ग्रन्थसारसमुपस्थापनम्। तत्कार्यं सुदुष्करमापातज्ञानावृजिम्भितं साधारणजनायासासाध्यञ्चेति जानन्ति सहृदयाः कृतश्रमा विद्वांसः। भूमिकायामाचार्यश्रीत्रिपाठिभिः "आगमशब्दार्थनिर्वचनम्, तन्त्रागमयोर्वैशिष्ट्यम्, ग्रन्थपरिचयः, दीक्षारीतिः" इत्यादिविषया नितरां निरूपिताः, यान् दृष्ट्वा मोमोत्ति मे चेतः। तेनानुमीयते यदन्येषामपि जिज्ञासूनामलभ्यलाभसत्त्वात्, तत्त्वविदाञ्च यथार्थनिरूपणेन तत्तत्तत्त्वावबोधानुसारित्वेन प्रमितत्त्वान्मननस्थानापन्नत्वेन मोदहेतुरिदं निरूपणं भवितेति मम दृढः सर्गः।

अहन्तु—"वाग्जन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्" इत्युक्तेः स्वोक्तिमत्र योजयितुं प्रवृत्तः। प्रार्थये च भगवन्तं स्वेष्टं भवानीजानिमस्य ग्रन्थस्य विस्ताराय नानादिग्देशवर्तिव्युत्पन्नव्युत्पित्सुलोकसमवेतज्ञानविषयतालाभाय लेखकानां परमशिष्टानां विशिष्टानां निरन्तरमध्ययनाध्यापनोपासनालेखनपरायणानां यशस्विनां मानवोचितगुणगणालङ्कृतानां येन कर्मणा राज-गुरु-देवताप्रसादो भवति, तदेव कार्यगतमौचित्यमिति परिभाषापरिभाषितार्थमूर्तीनां डॉ॰ राजनाथत्रिपाठिमहोदयानामभ्युदयायादुष्टवैदुष्याय नैरुज्ययुग् दीर्घायुष्याय चेति शम्।

वाराणस्याम्,<br>श्रावणपूर्णिमायाम्,<br>वि॰ सं॰ २०४३

देवस्वरूपमिश्रः<br>कुलपतिः,<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# शुभाशीर्वचांसि

योगतन्त्रग्रन्थमालाया एकादशपुष्परूपेण ब्रह्मानन्दगिरिविरचितायाः शाक्तानन्तरङ्गिण्याः पर्यालोचनात्मकोऽयं खण्डः सम्यगवालोकि। शाक्तानन्तरङ्गिणीग्रन्थस्तन्त्रविषये विश्वकोशात्मकः। अत्र अर्चापद्धतेर्न केवलं विवरणम्, अपि तु युक्तिपूर्वकं तदौचित्यमपि यथास्थानं उपादर्शि। प्रस्तुते खण्डेऽस्य ग्रन्थस्य तन्त्रशास्त्रे किं वैशिष्ट्यम्, कथञ्चात्र तन्त्रागमयोः परस्परं संश्लेषः, तदुभयं संधाय प्रतिपाद्यवस्तुनः कथं निरूपणं कृतमिति सर्वं भूमिकायां विदुषा सम्पादकेन सम्यग् व्यवारि।

ततश्च धर्मसाधनरूपेण मानवशरीरस्य वैशिष्ट्यम्, दीक्षाया गुरोश्च साधनायां महत्त्वम्, निर्गुणसगुणयोरभिन्नत्वम्, ध्यानस्य चोपयोगित्वम्, उपासनाया दैनन्दिनप्रसङ्गे षट्चक्राणां कुण्डलिन्याश्च सम्यगवधारणम्, कलशमुद्रानिरूपणम्, आसननिरूपणम्, बाह्यपूजाया आन्तरपूजायाश्च पृथक् पृथग् वैशिष्ट्यम्, मातृकान्यासविधेरभिप्रायः, जपमालाया जपस्यच विधानम्, मन्त्रस्वरूपनिरूपणम्, सेतुनिरूपणम्, पुरश्चरणविधेर्वर्णनम्, तर्पणविधिः, यन्त्रनिर्माणं तस्य संस्कारश्च, बलिविधेर्निरूपणम्, पूजोपचाराणां क्रमो विधिश्च, शाक्ताचारस्य वैशिष्ट्यम्, प्रमादस्य प्रायश्चित्तम्, मण्डप-कुण्ड-होमविधीनाञ्च क्रमेण यन्मूलग्रन्थे विवृतम्, तद्यथास्थानं यथापेक्षितञ्च स्फुटीकृतम्।

आयुष्मता श्रीराजनाथत्रिपाठिना महता यत्नेन यदुद्धृतानां सन्दर्भाणां प्रसङ्गाश्च संकेतिताः, तद् विदुषां महते तोषाय। मूलग्रन्थे यद् समाहाररूपेण पूजातत्त्वस्य पर्यालोचनं कृतम्, तद् सुधिया सम्पादकेन युक्तिपूर्वकमेकवाक्यतासमानीतम्। अयं खण्डः सम्पादकस्य तन्त्रविषये आगमविषये च सूक्ष्मेक्षिकां गभीरां गवेषणां विस्तृतां ग्रन्थपरिचितिञ्च सन्दर्शयतीति मम प्रमोदाय तृप्तये च।

आशासे अग्रेऽपि स्नेहभाजनं ग्रन्थकारस्तन्त्रागमशास्त्राणि इदृगेव परिशीलयिष्यति, लुप्तान् ग्रन्थाँश्च स्वयमुद्धरिष्यति, साधनामर्माणि च विवरिष्यतीति ।

काश्याम्,
श्रावणशुक्लाष्टम्याम्
वि० सं० २०४३

विद्यानिवासमिश्रः
कुलपतिः,
काशीविद्यापीठस्य,
वाराणसी

# संपादकशुभगुणानुशंसनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये योगतन्त्रविभागस्य संस्थापकैस्तस्य विभागस्य प्रथमाध्यक्षैश्च श्रीमद्भिः पद्मविभूषणमहामहोपाध्यायाद्यनेक-विरुदावलिराजितैः पण्डितगोपीनाथकविराजमहोदयैः षट्खण्डात्मकस्य तन्त्रसंग्रहस्य स्वतन्त्राणाञ्च केषाञ्चन ग्रन्थाणां प्रकाशनयोजना पुरस्कृताऽऽसीत्। तत्र तन्त्रसंग्रहस्य चत्वारः खण्डाः, नित्याषोडशिकार्णव-महार्थमञ्जरी-रुद्रयामलसदृशाश्च केचन स्वतन्त्रा ग्रन्थाः पूर्वमेव प्रकाशिताः। अधुना शाक्तानन्दतरङ्गिणीनामा ब्रह्मानन्दगिरिविरचितो विशिष्टस्तन्त्र-शास्त्रस्य ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीये सांख्ययोगतन्त्रागमविभागे आगमप्राध्यापकेन श्रीमता डॉ० राजनाथत्रिपाठिना सुसंपाद्य भूमिकापरि-शिष्टादिभिश्च संयोज्य योगतन्त्रग्रन्थमालाया एकादशपुष्पत्वेन प्रस्फुटीक्रियत इति तन्त्रशास्त्ररसिकानां कृते परमप्रमोदस्यायमवसरः। शताधिकानि श्रुतिपुराणधर्मशास्त्रतन्त्रशास्त्रवचनानि ग्रन्थकारेणात्र स्वमन्तव्यस्य पुष्ट्यै समुपस्थापितानीति तानि ग्रन्थकारस्य चतुरस्रं वैदुष्यं ख्यापयन्ति। लघुकायेऽप्यस्मिन् ग्रन्थे तन्त्रशास्त्राणां प्रायः सर्वेऽपि विषयाः सप्रमाणं नातिविस्तरेण प्रतिपादिता इति ग्रन्थस्यास्य तान्त्रिके वाङ्मये वर्तते स्वीयं वैशिष्ट्यम्। एतच्च विदुषा सम्पादकेन लिखितायां भूमिकायां विशेषेण ख्यापितमिति तत एवावलोकनीयम्।

सौन्दरीलहरीव्याख्याता लक्ष्मीधरः "शिवः शक्तिः कामः" इति श्लोक-व्याख्यानावसरे साभिमानं भणति—"ये तु मदीयं ग्रन्थं दृष्ट्वा तां कलां जानन्ति, ते मच्छिष्या एवेत्यस्माकमनुग्रहः" इति, "तेषां जिज्ञासूनां वर्तमानानां च वयमेव गुरव इति तेष्वनुग्रहः कृतोऽस्माभिः" इति च। एतादृशो दुर्रभिमानो नैव सम्पादकेन पालनीयः, अथापि सम्पाद्यमानस्य ग्रन्थस्य स्वरूपं तथा तेन परिष्करणीयम्, येन तत्रत्याः सर्वे विषयाः पाठकानां पुरतः करतलामलकवत् प्रस्फुटाः स्युः। गुरुः केवलं स्वसमक्षं स्थितान् शिष्यान् पाठयति, सम्यक् सम्पादितेन ग्रन्थेन तु प्रत्यक्षाः परोक्षाश्च पाठका लाभान्विता भवन्तीति न खलु विस्मरणीयम्। न केवलं ग्रन्थग्रन्थकारयोः, ग्रन्थकारस्यान्येषां ग्रन्थानाम्, तेनोद्धृतानां ग्रन्थ—ग्रन्थकाराणमपि परिचयो

यथामति समुपस्थापयितव्यः, उद्धृतग्रन्थवचनानां स्थलनिर्देशे च प्रयासो विधेयः। एवं हि कृते सति बहवो नूतना विषयाः सम्पादकस्य पुरस्तात् परिस्फुरन्ति, ग्रन्थकाराणां कालनिर्णयादिविषये च साहाय्यमुपलभ्यते। "योगिनीहृदयस्य" कानिचन वचनान्यत्रोद्धृतानि मुद्रिते योगिनीहृदये नोपलभ्यन्त इतीतो भिन्नः कश्चिद् योगिनीहृदयग्रन्थो ग्रन्थकारस्य समक्षं स्यादिति संभावना समुदेति। ईदृशा अन्येऽपि च प्रश्नाः सम्पादकानां पुरतः समुद्भवन्ति। तेषां समाधानमपि सम्पादकस्य कर्तव्यताकोटिमाटीकते।

अस्तु, प्रस्तुतसम्पादकस्य प्रथमोऽयं प्रयासः सर्वथा प्रशंसार्हः। एवमेव स भविष्यति इतोऽप्यधिकेन परिश्रमेण तन्त्रशास्त्रग्रन्थान् सम्यक् संपाद्य जिज्ञासूनां पुरतः समुपस्थापयिष्यतीत्याशासानः—

व्रजवल्लभद्विवेदः
भू० पू० आचार्योऽध्यक्षश्च
सांख्ययोगतन्त्रागमविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

# आमुखभागस्य विषयानुक्रमणिका

**नवमोल्लासे**—जपविधानम्, जपभेदाः, मन्त्रदैवतयोरभेदः, जपात्पूर्वं मन्त्रतत्त्वज्ञानमावश्यकम्, मन्त्राणां नवतत्त्वानि, मन्त्रार्थनिरूपणम्, मन्त्र-स्थानम्, मन्त्रचैतन्यम्, षट्चक्रध्यानं योनिमुद्रा च, अनुलोमविलोमजपः, मन्त्रशिखानिरूपणम्, सूतकम्, तान्त्रिकप्रणवोच्चारणे स्त्रीशूद्राणामप्यधिकारः, जपे गणना आवश्यकी। (४४-५०)

**दशमोल्लासे**—महासेतुनिरूपणम्, सामान्यसेतुनिरूपणम्, विशेषसेतु-निरूपणम्, कवचसेतुनिरूपणम्, कुल्लुकानिरूपणम्। (५०-५२)

**एकादशोल्लासे**—मुखशोधनम्, निद्राभङ्गः, मन्त्रेषु स्त्रीपुंनपुंसकज्ञानम्, दीपज्ञानं योनिमन्त्रश्च। (५३-५५)

**द्वादशोल्लासे**—पुरश्चरणलक्षणम्, पुरश्चरणे पूर्वाह्निककृत्यम्, पुरश्चरण-दिनकृत्यम्, हविष्यान्नम्, होमनियमः, तर्पणद्रव्यं विधिश्च, अङ्गहीने होमाशक्तौ च जपविधानम्, ग्रहणे पुरश्चरणम्, ग्रहणेषु जपादीनामावश्यकता। (५५-६०)

**त्रयोदशोल्लासे**—यन्त्रसंस्कारः, यन्त्रनिर्माणविधिः, यन्त्रसंस्कारः, पञ्चगव्यम्, बलिदाने बलिपदार्थः, नरबलि राज्ञामेव, बलेर्दीपदानम्, बल्यतिरिक्ते हिंसायां दोषः। (६१-६४)

**चतुर्दशोल्लासे**—उपचारविधिः, अष्टादशोपचारविधिः, षोडशोपचार-विधिः, दशोपचाराः, पञ्चोपचारविधिः, पाद्यम्, अर्घ्यम्, आचमनीयम्, मधुपर्कः, गन्धः, पुष्पम्, पुष्पपत्राणि कदा पर्युषितानि, त्याज्यपुष्पाणि, माघमासे विशेषपुष्पाणि, देवविशेषेभ्यः प्रशस्तपुष्पाणि, दूर्वातुलस्योर्वै-शिष्ट्यम्, पुष्पग्रहणे नियमः, धूपम्, दीपः, नैवेद्यम्, प्रदक्षिणम्, प्रणामः, आसनम्, पूजासम्भाराच्छादनम्, नैवेद्यनिवेदनविधिः, द्रव्याणां शुद्धि (निर्माल्यता) कालः। (६५-७४)

**पञ्चदशोल्लासे**—नामस्मरणादिफलम्, कुलवृक्षाः, पीठस्थानकथनम्, विभिन्नपीठेषु जपानुष्ठानफलम्, नित्यसंकेतस्तवः, मन्त्रजपसंख्याफलम्, देव्याः प्रणामफलम्। (७४-७७)

**षोडशोल्लासे**—जपादिफलाभावहेतुत्वनिर्णयः, कर्मशङ्करप्रायश्चित्तम्, पूर्वं धृतकवचस्य नाशे पुनर्धारणे प्रायश्चित्तम्, यन्त्रनाशे प्रायश्चित्तम्,

पूजाकाले यन्त्रादिपतनस्य फलम्, मालापतनस्य प्रायश्चित्तम्, मालाया विनाशे (त्रुटिते) प्रायश्चित्तम्, गुरुक्रोधोपशमनाय प्रायश्चित्तम्, विष्णोरनिवेदितभोजनप्रायश्चित्तम्। (७८-८२)

सप्तदशोल्लासे—कुण्डविधिनिरूपणम्, मण्डपनिर्माणप्रकारः, मण्डपस्थानमाच्छादनम्, कुण्डशरीरम्, कुण्डे खातस्य परिमाणम्, मेखलामानम्, नालस्थापनम्, कुण्डदोषाः, कुण्डाभावे स्थण्डिलविधानम्। (८२-८६)

अष्टादशोल्लासे—होमविधानम्, कुण्डानामष्टादशसंस्काराः, कुण्डानां पञ्चशुद्धयः, कुण्डेऽग्निनयनम्, हवने जिह्वाया मन्त्रः, जिह्वाधिपतयः, शरीरे वह्नेर्न्यासः, कुण्डे अग्निप्रज्वालनमन्त्रः, परिधिलक्षणम्, वह्नेर्ध्यानं पूजनञ्च, होमविधिः, वह्नेर्मुखातिरिक्ते होमे दोषः, होमान्ते शुभाशुभफलज्ञानम्, उपसंहारः, कार्तज्ञ्यज्ञापनम्। (८६-९६)



# ग्रन्थगतविषयाणामनुक्रमणिका

## तृतीयोल्लासः



## चतुर्थोल्लासः



## पञ्चमोल्लासः



## षष्ठोल्लासः

## सप्तमोल्लासः



## अष्टमोल्लासः



## नवमोल्लासः

## दशमोल्लासः



## एकादशोल्लासः



## द्वादशोल्लासः

## त्रयोदशोल्लासः



## चतुर्दशोल्लासः

पञ्चदशोल्लासः



षोडशोल्लासः

## सप्तदशोल्लासः



## अष्टादशोल्लासः

# आमुखम्

भारतीया हि संस्कृतिर्निगमागममूला। निगमो वेदः, आगमश्च वेदौपयिकस्मृत्यनुमोदितो लोककल्याणकरः पन्थाः। आगमस्यैवापरसंज्ञा तन्त्रमिति। अतस्तन्त्रागमयोः परस्पराभेदेन प्रायः सर्वत्र शास्त्रे प्राक्तनो व्यवहारः। शास्त्रेऽस्मिन् विषमप्यमृतायते, भोगोऽपि योगायते। कुतश्चैवमित्याकाङ्क्षायामुच्यते यदस्य साधनाशास्त्रस्योपदेष्टा साक्षाच्छिवः, श्रोत्री च सर्वानुग्राहिका श्रीराजराजेश्वरी पराम्बा त्रिपुरसुन्दरी। क्वचिच्च श्रोता शिवः, उपदेष्ट्री पराम्बा, विषयश्च साक्षाद् वासुदेवः। अत उक्तं विपश्चिद्भिः—'अन्तः शाक्ता बहिः शैवाः सभामध्ये च वैष्णवाः' इति। एवं भूत्वेह परलोके चानायासेन साधनक्षमोऽयं तन्त्रागममार्गः।

### आगमशब्दनिर्वचनम्

आगमशब्देरक्षरत्रयस्य 'आगतं' 'गतं' 'मतं' चैषां सन्निवेशो दृश्यते। तदनुसारेण 'आ समन्ताद् गमयति अभेदेन शिवादिधरण्यन्तं पारमेशं स्वरूपं विमृशति' इत्यागमशब्देन परशक्तेरेव ग्रहणात् परशक्तिरेवागम इति। स चागमो ज्ञानरूपोऽनन्तशास्त्रेषु व्यवहृतो भवति। तदुक्तम्—

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः।
शास्त्रं शब्दात्मकं सर्वम्[1] ........................ ॥ इति।

स चागमो भगवतो महेश्वरस्येशानतत्पुरुषाघोरवामदेवसद्योजातात्मकस्य ज्ञानात्मकस्य पञ्चमुखस्य प्रभावादेवोदेति। निखिलशास्त्रनिष्णाताद् गुरोः शम्भुनाथमुखादागमज्ञानं परम्परातः स्फुटम्। तस्मादत्र शास्त्रे सूक्तिरियं सर्वत्र सिद्धान्तरूपेणोल्लसति—

आगतं शिववक्त्रेभ्यो गतं च गिरिजानने।
मतं हि वासुदेवस्य तस्मादागम उच्यते[2] ॥ इति।

महामतिना भर्तृहरिणाऽपि आगमस्य ज्ञानात्मकत्वं स्फुटं स्वीकृतम्। यथा—

---

१. स्वच्छन्दतन्त्रे (४।३४)।

२. रुद्रयामलवचनम्।

चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।
आगमस्तमुपासीनो हेतुवादैर्न बाध्यते[1] ॥ इति ।

किञ्च, प्रत्यक्षेणाकलितमपि वस्त्वागमप्रामाण्यादेव प्रामाण्यमादधाति । अतस्तुर्यतदतीतदशयोर्यः परः साक्षात्कारः, स एव वस्तुतो मुख्यतया 'आ समन्तादर्थं शिवादिधरण्यन्ततत्त्वजातं गमयति पारमार्थिकस्वरूपतस्तथाविध-स्वभावतश्च बोधयति साक्षात्कारयति इत्यागमोऽन्वर्थनामा । इदमेव मतं श्रीमतामभिनवगुप्तपादानामीश्वरप्रत्यभिज्ञाविमर्शिन्यां विवृत्तिविमर्शिन्यां च क्रियाधिकारे प्रमाणनिरूपणाह्निके प्रतिपादितमुपलभ्यते ।

### आगमस्य ज्ञानापरपर्यायत्वम्

किमिदं ज्ञानं नाम ? कुतश्च तत्प्रवर्तते ? किं च तस्य प्रयोजनम् ? इति प्रश्नानामुत्तररूपेण प्रवर्तते रौरव-स्वायम्भुवागमयोरिदमाद्यं सूत्रम्—

अथात्ममलमायाख्यकर्मबन्धविमुक्तये ।
अव्यक्ते च शिवत्वस्य शिवाज्ज्ञानं प्रवर्तते ॥ इति ।

अत्र सूत्रे ज्ञानपदं शास्त्रापरपर्यायम् । तदुक्तं पौष्करेऽपि—

अदृष्टविभवाच्छान्ताच्छिवात्परमकारणात् ।
नादरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ॥ इति ।

अन्यच्च—

सदाशिवोऽपि भगवान् नादरूपतयाऽऽगतम् ।
षट्पदार्थमयं ज्ञानमित्यादि ॥

कुलमूलावतारेऽपि—

अनादिनिधनाच्छान्ताच्छिवात्परमकारणात् ।
इच्छाशक्तिर्विनिष्क्रान्ता ततो ज्ञानं ततः क्रिया ॥
तयोत्पन्नानि भूतानि भुवनानि चतुर्दश ।
वाङ्मयं चैव यत्किञ्चित् तत्सर्वं मातृकोद्भवम् ॥ इति ।

श्रीकण्ठसंहितायान्तु शिवस्यैव चराचरात्मकस्यास्य जगतः कारणकोटौ गणना । स एव समग्रज्ञानगौरवं स्वेच्छयाऽस्मभ्यं प्रयच्छति । तथा च—

१. वाक्यपदीये (१।४१) ।

अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
ज्ञानरूपं विनिष्क्रान्तमनवच्छदनं महत् ॥ इति ।

स्वच्छन्दतन्त्रेऽपि ज्ञानस्य परमकारणं शिव एवेति निगदितम् । तेनैव-ध्वनितानि नानाशास्त्राणि विलसन्तिततमाम् । तद्धि—

अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ॥

अमूर्ताद् गगनाद्यद्वन्निर्घातो जायते महान् ।
शान्तात् संविन्मयत्वाच्च तद्वच्छन्दाख्यं शास्त्रम् ॥ इति ।

तन्त्रसद्भावे हि—मातृकैव शक्तिरूपिणी, शक्तिश्च मन्त्ररूपिणी, मन्त्राश्च वर्णात्मकाः पदात्मका वेति कृत्वा मातृकायाः शक्तिरूपतायाः सत्त्वेन शिवरूपता सिद्ध्यति । ततश्च सर्वेषां शास्त्राणां ज्ञानानां च मातृका एव कारणानीति विचारयन्नाह—

सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये ।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका[1] ॥ इति ।

तथा च मन्त्रदेवतयोरैक्ये सति शिवशक्त्योरैक्याच्छब्दार्थयोरैक्यं संगच्छते । तद्धि—

चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद् बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशते[2] ॥ इति ।

शब्दानां मूलं परापराम्बा, अर्थानाञ्च मूलं परमेश्वरः शिवः । इममेव सिद्धान्तं 'वागर्थाविव सम्पृक्तौ....पार्वतीपरमेश्वरौ[3]' इति पदेन कविकुलगुरुः कालिदासोऽपि मनुते । तदेव हि मतं वायवीयसंहितायाम्—

शब्दजातमशेषं तु धत्ते शङ्करवल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः[4] ॥ इत्याद्युक्तम् ।

---

१. तन्त्रसद्भाववचनं नित्याषोडशिकार्णवभूमिकायां आचार्यपं० व्रजवल्लभद्विवेदि-संपादितायां ६२ पृष्ठे धृतम् ।
२. ईश्वरप्रत्यभिज्ञायां वचनम् (१।५।७) ।
३. रघुवंशमहाकाव्ये (१।१) ।
४. वायवीयसंहिताया वचनम् ।

महानयप्रकाशेऽपि—

शून्यात्प्रसर उत्पन्नः प्रसरादः समुत्थितः ।
अकाराद् विश्वमुत्पन्नं विश्वं पञ्चात्मकं जगत्[1] ॥ इति सिद्धान्तितम् ।

आचार्याभिनवगुप्तोऽपि श्रीतन्त्रालोके व्याहरति—

निर्मले मुकुरे यद्वद्भान्ति भूमिजलादयः ।
अमिश्रास्तद्वदेकस्मिंश्चिन्नाथे विश्ववृत्तयः[2] ॥ इति ।

परमार्थसारेऽपि—

यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु ।
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा[3] ॥ इत्युक्तम् ।

स्वच्छन्दतन्त्रे च—

दशबाहुश्चतुर्बाहुर्द्विबाहुश्चैकबाहुकः ।
लोकागमादिवक्ताऽसौ देवदेवः सदाशिवः ॥
परापरविभागेन प्रोवाचासंख्यमागमम् ॥ इत्याद्युक्तम् ।

## आगमप्रशंसा

इत्थं ह्यागमो नाम भारतीयसंस्कृतेः कुञ्जिकारूपः । तत्त्वज्ञा जानन्त्येव यदागमज्ञानं विना निगमज्ञानमसम्भवम् । यतो ह्यागमशब्दस्य ज्ञानापरपर्यायत्वात्तस्य वेदैकनिष्ठत्वमवतिष्ठते । वस्तुत आगमनिगमौ परस्परं पूरकौ । साम्प्रतिके युगे प्राणिनां लौकिकपारलौकिकसिद्धयो यादृश्य आगमगम्या न तादृश्योऽन्यसाधनेभ्यः । साधनान्तरादागमस्य वैशिष्ट्यमिदमेव यत्—

यत्रास्ति भोगो न हि तत्र मोक्षो यत्रास्ति मोक्षो न च तत्र भोगः ।
शिवपदाम्भोजयुगार्चकानां भोगश्च मोक्षश्च करस्थ एव[4] ॥

तदेवोक्तं कुलार्णवतन्त्रेऽपि—

कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः ।
द्वापरे तु पुराणोक्तः कलौ ह्यागमसम्मतः ॥ इति ।

---

१. महानयप्रकाशे, प्रथम उदये पृ० ३० ।
२. तन्त्रालोके (२।४) ।
३. वैया० सिद्धा० ल० म०, बौद्ध० नि०, पृ० २८४ ।
४. शाक्ता० (३।५७) ।

निर्वाणतन्त्रे च—

विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये ॥ इत्युक्तम् ।

किञ्च—

इह तावत्समस्तोऽयं व्यवहारः पुरातनः ।
प्रसिद्धिमनुसन्धाय स चागम उच्यते[1] ॥ इत्युक्तम् ।

शास्त्रसम्मेलनाख्ये सम्पूर्णे पञ्चत्रिंशदाह्निके श्रीतन्त्रालोके[2] आगमशब्दस्यार्थो वैशिष्ट्यञ्च स्फोरितं विद्यते । किञ्च, मृगेन्द्रवृत्तौ विद्यापादे आगमलक्षणं वैशिष्ट्यञ्च व्यवस्थापयन्नाह—

प्रसिद्धिमागमः प्राप्तो लोक इत्यभिधीयते[3] ॥ इति ।

आगमानामुपजीव्यता दर्शनान्तरैरप्यवश्यं ग्राह्या । सिद्धान्तमिममादायैव सप्तत्रिंशाह्निके तन्त्रालोके कतिपयानामागमानां वैशिष्ट्यं प्रतिपादितमभिनवगुप्तपादेन—

उक्तं श्रीरत्नमालायामेतच्च परमेशिना ।
अशेषतन्त्रसारं तु वामदक्षिणमाश्रितम् ॥
एकत्र मिश्रितं कौलं श्रीषडर्धकशासने ।
सिद्धान्ते कर्मबहुलं मलमायादिरूषितम् ॥
दक्षिणं रौद्रकर्माढ्यं वामं सिद्धिसमाकुलम् ।
स्वल्पपुण्यं बहुक्लेशं स्वप्रतीतिविवर्जितम् ॥
मोक्षविद्याविहीनञ्च विनयं त्यज दूरतः[4] ॥ इत्यादिभिः ।

## आगमस्य प्रामाण्यम्

साम्प्रतिके युगे लघुनोपायेनाल्पेन प्रयासेन चेष्टसिद्धिः समभिलाषवतां जनानां कृते आगममार्ग एव श्रेयस्कर इति न तिरोहितं प्रेक्षावताम् । वेदानामिवागमानामपि अनादित्वाच्छिवप्रोक्तत्वाच्च तथैव प्रामाण्यम् ।

---

१. तन्त्रालोके (३५।१) ।
२. श्रीतन्त्रालोके ३५ आह्निकम् ।
३. मृगेन्द्रतन्त्रे विद्यापादे (१।१४) ।
४. श्रीतन्त्रालोके (३७।२५....२९) ।

'ऋषयो मन्त्रद्रष्टारः' इति वचनानुसारं ऋषिषु वेदानामनादित्वं सङ्गच्छते । आगमानामपि 'शिवादि-ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इति रीत्या तथैव प्रामाण्यम् । यथा च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति वेदस्य लक्षणं मीमांसकैर्निर्धारितम्, तद्वदेवागमानामपि समन्वितार्थमुपसंगृह्योक्तमाचार्यजयरथेन—

प्रसिद्धिरागमो लोके युक्तिमानथवेतरः ।
विद्यायामप्यविद्यायां प्रमाणमविगानतः ॥
प्रसिद्धिरविगीता हि सत्या वागैश्वरी मता ।
तथा यत्र यथासिद्धं तद् ग्राह्यमविशङ्कितैः[1] ॥ इत्यादयः ।

युक्तिमती अयुक्तिमती वा विद्याविषयिणी अविद्याविषयिणी वा अविगीता विगीता वा प्रसिद्धिरेवागमपदव्यपदेश्या । सा च प्रसिद्धिर्विचार्यमाणा अनादिरेव सिद्ध्यति । एवमेव शैव-शाक्त-वैष्णव-सौर-गाणपत्य-बौद्ध-जैनागमादीनामपि तन्मूलपुरुषैः साक्षादनुभूतत्वादनादित्वमेव पर्यवस्यति । ये तु तन्त्रागमिकमात्मानं मन्वानो यथेच्छमाचरन्ति, तेषामाचाराणां क्रियादीनाञ्चाप्रामाण्यं भवति । वर्णाश्रमधर्मविचाररहिता यथा—कामप्रवृत्ताश्च तेऽधोगतिमवाप्नुवन्ति । तथोक्तं शाक्तानन्दतरङ्गिण्याम्—

वर्णाश्रमोचितं धर्ममविचार्यर्पयन्ति ये ।
भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः[2] ॥ इति ।

## आगमस्य व्यवहारभूमिः

शैवागमे आगमशास्त्रे वा प्रयुज्यमानोऽयमागमशब्दप्रयोगोऽतीव व्यापकः । तस्मात् सर्वेषु शास्त्रेष्वागमशब्दव्यवहारो यथोक्त एव दृश्यते । यद्यपि आगमशब्देन समस्तशास्त्राणां प्रायो ग्रहणं, तथाप्यत्रागमशब्दः रूढार्थे प्रयुक्तः शैव-शाक्तागमपरः । तदुक्तं त्रिपुरारहस्ये 'वेदो ह्यागमभागः स्याच्छब्दराशिरथागमः' इति वचनं समग्रशब्दराशिपरम् । तथा च किमपि शास्त्रं शब्दोच्चारणं विना कथमुपपादयितुं शक्यम् ? तस्मात्सः शब्दराशिः सर्वत्रागमपदाभिलाप्यः । आचार्याभिनवगुप्तपादस्तु—'आगमस्तु अनवच्छिन्नमाहेश्वरप्रकाशपरमार्थः' इत्याद्याकलय्यागमानामनवच्छिन्नप्रामाण्यमुद्घोषयति । कूल्लूकभट्टकृतायां मनुस्मृतेष्टीकायाञ्च 'वैदिकी

१. श्रीतन्त्रालोकटीकायाम्—(१,१८) ।
२. शाक्ता० (२।१३) ।

तान्त्रिकी चेति द्विविधा श्रुतिरुच्यते' इति वचनप्रामाण्यादागमस्यापि श्रुतिसंज्ञात्वं संगच्छते। महर्षिहारीतस्तु—'आगमः पञ्चमो वेदः कौलस्तु पञ्चमाश्रमः' इत्युक्त्या आगमस्य वेदसंज्ञया कौलमार्गस्य च पञ्चमाश्रम-संज्ञया महत्त्वमुररीकरोति। किञ्च—'ज्ञानमिच्छेन्महेश्वरात्[1]' इत्यागम-बोधकं महेश्वरपदमप्यत्रैव पर्यवस्यति।

तथा च श्रीतन्त्रालोके—

इह तावत्समस्तोऽयं व्यवहारः पुरातनः।
प्रसिद्धिमनुसन्धाय सैव चागम उच्यते[2] ॥ इति।

अतो वस्तुत आत्मसाक्षात्कारो येन सुगममार्गेण कर्तुं शक्यः, स एवा-गमसंज्ञक इत्यवधारणीयं सुधीभिः।

तन्त्रशब्दस्योपपत्तयः

यद्यपि प्राक्तनाचार्यपरम्परासु तन्त्रागमशब्दयोरपार्थक्येन प्रायो बोधो भवति, परं साम्प्रतिकेषु कश्चित् तयोर्वर्तते सूक्ष्मो भेदः। तदनुसारेण शिव-परकं शास्त्रमागमः, शक्तिपरकञ्च तन्त्रमिति। अतोऽधुना अन्यागमानां व्यवच्छेदाय शैवशाक्तयोर्द्वयोर्नाम्नोर्ग्रहणमागमपदेनाख्यायते।

तत्र तनादिगणपठितात् 'तनु विस्तारे' इति धातोः औणादिकात् 'सर्वधातुभ्यष्ट्रन्' इति पाणिनिसूत्रात् 'ष्ट्रन्' प्रत्यये कृते सति तन्त्रशब्दो निष्पद्यते। तनोति तन्यते वा अनेनेति तन्त्रम्।

अथवा कुटुम्बधारणपोषणार्थकस्य 'तन्त्रि' (चु०) धातोर्भावादौ घञ् प्रत्यये कृते तन्त्रशब्दसिद्धिः। तन्त्रणं, तन्त्र्यते यत् येन यत्र वेति व्युत्पत्तिः। अतः सृष्टिपरकस्य विश्वविस्तारस्य सूक्ष्मतत्त्वस्य निरूपणं ज्ञानं वा तन्त्रशब्देन व्यपदिश्यते। अमुमेव भावमाश्रित्य अजितागमे उक्तम्—

तनोति विपुलानर्थांस्तत्त्व (तन्त्र) मन्त्रसमाश्रितान्।
त्राणं च कुरुते पुंसां तेन तन्त्रमिति स्मृतम्[3] ॥ इति।

---

१. शिवसूत्राणां भावः।
२. श्रीतन्त्रालोके—(३५।१)।
३. अजितागमे—(१।११५)

कोशकाव्यादिषु तन्त्रशब्दः समस्तशास्त्रपरः। तदुक्तममरकोशे—

तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे[1] ॥ इति।

वाचस्पत्ये च—

सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च।
देवतानां च संस्थानं तीर्थानां चैव वर्णनम् ॥
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च।
संस्थानं चैव भूतानां यन्त्राणां चैत्र निर्णयाः ॥

इत्याद्युक्त्वाऽन्ते—

राजधर्मो दानधर्मो युगधर्मस्तथैव च।
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम्।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते[2] ॥ इत्युक्तम्।

सांख्यशास्त्रे च—

'कृत्स्नस्य षष्टितन्त्रस्य[3]' 'विस्तरत्वात्षष्टितन्त्रस्य—

संक्षिप्तरुचिसत्त्वानुग्रार्थं संज्ञा तमधिगम्यते' इत्युक्तम्।

ज्योतिषशास्त्रे वराहमिहिरस्तु—

स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानात्वसौ[4] ॥ इत्युक्तम्।

आयुर्वेदे सुश्रुतसंहितायाम्—

इत्यष्टाङ्गमिदं तन्त्रमादिदेवप्रकाशितम् ॥ इत्युपदिष्टम्।

शाङ्करभाष्ये भगवत्शङ्करपादेन च—

'स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता' इत्युक्त्या स्मृतेरेव तन्त्रपदेन व्यवहारः कृतः।

पुरा राजनीतावपि तन्त्रपदस्य दृश्यते व्यवहारः, यथा 'पञ्चतन्त्रम्' इति।

शासनव्यवस्थायामपि तन्त्रशब्दो व्यवहारपथमायाति, यथा—प्रजातन्त्रं, लोकतन्त्रं, राजतन्त्रमित्यादयः। एवं हि—

---

१. अमरकोशे—(३।३।१८५)।

२. वाचस्पत्यमिति कोशे तन्त्रशब्दोपरि वचनम्।

३. सांख्यकारिकायाम्—७२।

४. बृहत्संहितायाम्—(१।९)।

लौकिकं वैदिकं सांख्यं योगादिपाञ्चरात्रकम् ।
बौद्धार्हतन्यायशास्त्रं पदार्थक्रमतन्त्रणम् ॥
सिद्धान्तन्त्रं शाक्तादि सर्वं ब्रह्मोद्भवं यतः ।
श्रीस्वच्छन्दादिषु प्रोक्तं सद्योजातादिभेदतः[1] ॥

इत्याद्युक्तं तन्त्रशब्दव्याख्यायाम् ।

एवञ्च नानार्थकोऽपि तन्त्रशब्दः साम्प्रतं शैव-शाक्तदर्शने रूढिमापन्नः तात्पर्यग्राहकश्चेति ।

## तन्त्रमाहात्म्यम्

तन्त्रशास्त्रस्य महत्त्वमाकलय्यैव तत्र तत्र शास्त्रेषु प्रशंसापराणि बहूनि वाक्यानि दृश्यन्ते । तथा हि—

नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः ।
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः ॥
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा ।
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्[2] ॥ इत्यादयः ।

महानिर्वाणतन्त्रे च—

किं तस्य तीर्थभ्रमणैः किं यज्ञैर्जपसाधनैः ।
जानन्नेव महातन्त्रं कर्मपाशैर्विमुच्यते ॥ इति ।

तन्त्रशास्त्रस्य क्षेत्रमत्यन्तं विस्तृतं व्यापकं च । अस्यान्तर्गतं दर्शनं, विज्ञानं, व्यवहारः, कला, साहित्यादिकञ्चानेके विषया आयान्ति । अत्र शास्त्रे सर्वविधभौतिकाध्यात्मिकसम्पदः, अपूर्वसिद्धीनामर्जनस्य चोपायाः सन्ति निर्दिष्टाः, दार्शनिकतत्त्वान्यत्र सूक्ष्मातिसूक्ष्मपद्धत्या षट्त्रिंशत्तत्त्वात्मकानि सन्ति निरूपितानि ।

## तन्त्रागमयोर्वैशिष्ट्यम्

भारतीयसंस्कृतौ तन्त्रागमिकसाधनयोर्विशिष्टतमं स्थानमनादिकालत एव वर्तते । केचन हि आर्यसंस्कृतिमूलके प्राक्तनसांस्कृतिकेतिहासे यावन्तो

१. श्रीतन्त्रालोके—(३५।२६-२७) ।
२. मुण्डमालातन्त्रे प० ८ ।

भेदास्तावतां क्रमविकासेनैव ब्राह्मणसंस्कृतेः हिन्दुसंस्कृतेर्वा प्रारम्भोऽभूदिति मन्यन्ते। आर्यसंस्कृतौ वैदिकभावना इवावैदिकभावनाया अपि स्थानं दृश्यते। किञ्चार्येतरसंस्कृतेरपि प्रभावो तत्र-तत्र समये-समये निपतित इवाभाति। अत एव परवर्तिब्राह्मणसंस्कृतौ वैदिकावैदिकानार्यसंस्कृतीनामपि छाया निपतिता। एतदपि सत्यं यद् विदेशीया संस्कृतिरपि रूपान्तरिता सती विभिन्नकालेषु भारतीयसंस्कृत्यै किमपि स्वांशं प्रायच्छत्। सूक्ष्मेक्षिकया विचारे सति वैदिकधर्मे चिज्जडयोर्मध्ये काचिद् कृत्रिमभेदरेखा नास्ति। उभावपि सम्मिल्य एकस्याखण्डसत्ताया अनुभूतौ सहायकौ भवतः, स चैव चेतनाया लक्ष्यं वरीवर्ति।

योगतन्त्रशास्त्रे अस्या एव साधनायाः पुष्टिर्जाता। योगसाधनायां प्रकृतेः साधारणप्रवृत्तेः कारणादान्तरसाधनया तन्त्रसाधनाया च समन्वयो जातः। अतस्तन्त्रं वस्तुतो योगेनापि व्यापकम्। वेदस्य प्रथमं स्वरूपमलौकिकम्, तच्च सीम्नि एव पुष्टतां याति। द्वितीयं च तद्रूपं लौकिकम्, यस्य प्रभावः समाजस्य प्रतिक्षेत्रेषु व्याप्नोति। अत एव 'श्रुतिः' इति शब्देन वैदिकतान्त्रिकयोरुभयोः श्रुत्योर्ग्रहणम्। उभेऽपि प्रामाणिकत्वमपौरुषेयत्वं च निर्वहतः।

भारतीयसंस्कृतेः साधनायाश्च सम्यगालोचनायेदमावश्यकं यद् वैदिकसाहित्येन तुल्यं पौराणिकं तान्त्रिकं च साहित्यमपि सम्यग् ग्राह्यम्। यद्यप्यत्र केचन दोषान् उद्‌भावयिष्यन्ति परं तन्न युक्तिसहं विवेकपरमिति। पुराणागमानां मूलं वैदिकाधारे एवाश्रितं, तत्र दोषादयो बाह्याः सामयिकाश्च। अतस्तयोर्द्वयोः साधनयोरतिविशिष्टं महत्त्वमवधार्यम्।

## तन्त्रागमयोर्व्यापकत्वम्

वैष्णवशैवशाक्तादिविभिन्नेषु स्थलेषु संहिता-आगम-तन्त्रग्रन्थानां नामानि समुपलभ्यन्ते। तत्र हि 'अहिर्बुध्न्यसंहिता', 'लक्ष्मीतन्त्रम्' इत्यनयोरुपोद्घातयोः, 'पेनारोमा आफ़ पाञ्चरात्र लिटरेचर' इति ग्रन्थे च तानि तानि मतानि सन्ति निरूपितानि।

शैव-शाक्तागमतन्त्राणाञ्च नामानि रौरवागमस्य प्रथमभागे आगमक्रमेण संकलितानि। तत्र हि शिवागमस्य १०, रुद्रागमस्य १८, उपागमानां २०७ नामानि निरूपितानि।

ऊर्ध्व-पूर्व-दक्षिणोत्तर-पश्चिमभेदतः शिवस्य पञ्चवक्त्रेभ्य उपदिष्टानां तन्त्रागमानां विविधनामानि वर्तन्ते। तत्र १० शिवागमाः, १८ रुद्रागमा इति २८ शैवसिद्धान्तागमाः शिवस्योर्ध्वमुखान्निःसृता वर्तन्ते। पूर्वमुखात् २८ संख्याका गारुडागमाः, दक्षिणमुखात् ६४ भैरवागमाः, नानाविधानि भूततन्त्राणि च पश्चिममुखाद् विनिर्गतानि, उत्तरमुखाच्च २४ वामतन्त्राणि सन्ति निर्गतानि। एवं संगृह्य १६४[1] तन्त्राणि भवन्ति। परन्तु प्रतिष्ठा-लक्षणसारसमुच्चये वैरोचनीये दक्षिणास्यविनिर्गतानि एव ३२ भैरवतन्त्राणि परिगणितानीति रीत्या तत्र १३२ तन्त्रनामानि प्रदर्शितानि।

चतुष्षष्टितन्त्राणां गणना तृतीयनामावलीप्रसङ्गे संगच्छते। नित्या-षोडशिकार्णवग्रन्थपठितानि तानि वामकेश्वरीमते, सौन्दर्यलहर्यास्टीकायां लक्ष्मीधरायां, भास्कररायकृते सेतुबन्धे, कुलचूडामणिनिगमे हि चतुष्षष्टि-तन्त्राणां गणना दृश्यते। ६४ भैरवागमानाञ्चोल्लेखो तन्त्रालोकविवेककार-जयरथधृतायां श्रीकण्ठ्यां दृश्यते। सर्वोल्लासधृततोडलतन्त्रेऽपि नामभेदपुरस्स-राणि ६४ तन्त्रग्रन्थनामानि प्रदर्शितानि। तन्त्राभिधानभूमिकायां च सिद्ध-सारतन्त्रानुसारमश्वक्रान्ता-रथक्रान्ता-विष्णुक्रान्ताविभागेषु प्रत्येकं ६४ तन्त्राणां नामावल्यो वर्तन्ते। एतेषां विवरणं तु तान्त्रिकसाहित्यग्रन्थस्य भूमि-कायां म० म० पं० गोपीनाथकविराजप्रतिपादितायाञ्चावलोकनीयम्।

ब्रह्मयामलस्य १९ तमेऽध्याये तन्त्रागमानां स्रोतविभागस्य विवरणं दृश्यते। तत्र दक्षिणस्रोतः शिवस्य दक्षिणमुखाद् विनिर्गतः, वामस्रोतः उत्तरमुखान्निर्गतः, मध्यस्रोतश्च ऊर्ध्वमुखान्निर्गतः। इमे भेदाः शिवस्यैव तिसृणां धाराणाम्। भैरवस्रोतस्यापि तत्रैव चर्चा दृश्यते। कुत्रचिच्च पीठभेदेनापि तन्त्रभेदो दृश्यते। पीठानि हि विद्यापीठ-मन्त्रपीठ-मुद्रापीठ-मण्डलपीठाख्यानि। विद्यापीठे हि अष्टौ भैरवा अष्टौ यामलाश्च वर्णिताः। एवमेवान्येषामपि।

---

१. लुप्तागमतन्त्रसंग्रहे भाग-२ भूमिकायां, पृ० ८५।

आम्नायभेदेनापि तन्त्राणि परस्परं भिद्यन्ते। सम्मोहनतन्त्रे हि तान्त्रिकं वाङ्मयमतीव विस्तरेण निरूपितं विद्यते। अत्रापि अनेकानि पीठस्थलानि निरूपितानि। क्षेत्रभेदेन प्रचलितान्यपि तन्त्राण्यत्र गणितानि। अत्रोक्तं यद् चीनदेशे शत (१००) मूलतन्त्राणि त्रिंशच्चोपतन्त्राणि (३०), द्रविडे २० मूलतन्त्राणि, २५ संख्याकान्युपतन्त्राणि, केरले ६० मूलतन्त्राणि ५०० उपतन्त्राणि, काश्मीरे १०० मूलतन्त्राणि, १० उपतन्त्राणि, गौडदेशे २७ मूलतन्त्राणि, १६ उपतन्त्राणि च वर्णितानि। सम्मोहनतन्त्रस्य षष्ठाध्याये शैव-वैष्णव-गाणपत्य-सौरभेदेन च तन्त्राणां संख्या परिगणिता।

एवं हि तत्र तत्र ग्रन्थेष्वतीव विशालस्य तन्त्रागमसाहित्यस्य वर्णनं संगच्छते। बहुशो ग्रन्थेषु शाखा-प्रशाखा-आम्नायभेदादीन् प्रदर्श्य विवरण-रूपेण तत्र तत्रैव तत्प्रकाशिताः सन्ति। यथा हि विपुलसाहित्यिकसामग्रि-मण्डितमिदन्तन्त्रागमशास्त्रन्तथैव तत्र तत्र सम्प्रदायभेदोऽपि बाहुल्येन दृश्यते तत्र। तमप्याश्रित्य तत्र तत्र बहुप्रपञ्चितमस्ति।

### ग्रन्थकारः

**परिव्राजकाचार्याः** परमहंसतीर्थावधूताः श्रीमन्तो ब्रह्मानन्दगिरिमहाभागा वंगदेशे समुत्पन्नाः स्वजीवने भगवतीं पराम्बामम्बां दुर्गामाराध्य परमहंसतीर्थावधूतपदवीकाः सन्तः परमां प्रसिद्धिमवापुः। एतेषां गुरवः त्रिपुरानन्दा आसन्, येषां यशःकान्तिस्तदानीमनुदिशं बिभ्राजते स्म। शिष्याश्च तेषां स्वनामधन्याः पूर्णानन्दा बभूवुर्येषां यशः पताका तन्त्रागमक्षेत्रे तदानीं सर्वत्र सुशोभन्ती सर्वत्र सचेतसां मोदाय भवति स्म। पूर्णानन्दस्वामिन षोडशख्रीष्टशताब्द्यास्तृतीयचरणे (सन् १५७५ ई०) प्रतिष्ठामलभन्त। अतो ब्रह्मानन्दस्वामिनः स्थितिकालः षोडशतमख्रीष्टशतकस्य मध्ये (सन् १५५० ई०) भवितुमर्हति। यदि नैवं कल्पितुं योग्यन्तदा तेषां स्थितिकालः षोडशख्रीष्टशताब्द्याः प्रथमचरणं (सन् १५२५ ई०) अवश्यं मन्तव्यम्। इदमेव मतं चिन्ताहरणचक्रवर्तिभिः स्व 'दि तन्त्राज स्टडोज़ आन देयर रिलीजन एण्ड लिटरेचर,'[१] नाम्न्याङ्ग्लभाषानिबद्धपुस्तके प्रकाशितमस्ति। कृष्णानन्दस्वामिनस्तन्त्रसार इति ग्रन्थः साम्प्रतमस्माकमक्षिपथि समुल्लसति। 'शाक्तानन्दतरङ्गिण्यां' 'तन्त्रसारः' इति ग्रन्थवचनस्योद्धरणं संगच्छते। तदत्र

१. ग्रन्थसंख्या क्यू २:२३-के० ३; १-पृ० सं० ६७, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयग्रन्थालये द्रष्टव्यम्।

विषये नैवं मन्तव्यं यदयं ग्रन्थो यस्योद्धरणं 'शाक्तानन्दतरङ्गिण्यां' समुल्लसति, तत्कृष्णानन्दरचितग्रन्थस्यैव, महामहेश्वराचार्याभिनवगुप्तपादानामपि वर्तते एकस्तन्त्रसारनामा ग्रन्थस्तदुदाहरणं तद् ग्रन्थोद्धृतमेव स्यात्। किञ्च एकैव ग्रन्थनाम्ना दृश्यन्ते ग्रन्थानां विभिन्नलेखकाः। यथा योगिनीहृदयादिग्रन्थानाम्[१]। एवमेव 'तारारहस्यं'[२] 'मुण्डमालातन्त्र'[३]मि' त्यादीनामपि ग्रन्थभेदो दृश्यते। तन्नूनं विभिन्नलेखकैर्भाव्यम्। 'तन्त्रसारः' इति ग्रन्थान्तरो ब्रह्मानन्दगिरिभिः पूर्वं कैश्चिदन्यैर्विरचितः कृष्णानन्दविरचितग्रन्थाद् भिन्न एव स्यादिति मन्तव्यम्।

केचित्तु 'तन्त्रसारः' ब्रह्मानन्दगिरिविरचित एव इति मन्यन्ते, परमत्र न किमपि तथाविधप्रमाणं येन तत्कर्तृत्वं ब्रह्मानन्दगिरि प्रकल्पितमेव स्यादिति। ब्रह्मानन्दगिरियतयः 'शाक्तानन्दतरङ्गिण्याः' आदावेव मङ्गलाचरणेनाद्यां प्रकृतिं स्तुन्वन्ति[४]।

का नित्या प्रकृतिः ? कश्च तस्याः प्रभाव इति निरूपयन्तस्ते ब्रह्माविष्णुशिवानामपि भावा यया जायन्ते, यस्याञ्च लीयन्ते, सा प्रकृतिरित्याहुः[५], ग्रन्थान्ते 'अथ सर्वमङ्गलादीनामर्थाः' इत्यवसानिके प्रकरणे ग्रन्थकारास्तामेव सर्वमङ्गलामाद्यां स्मरन्ति[६]। किञ्च, सा एव सर्वप्राणिनां परमाश्रयभूता संसारार्णवतारणक्षमा मुक्तिं स्वसाधकेभ्यः प्रयच्छति[७]। एवं ग्रन्थमारभ्यान्तं यावद् दुर्गामाद्यामेव सर्वतो भावेन ग्रन्थकाराः स्मरन्ति शाक्तानन्दतरङ्गिण्याम्। एतेन तेषां शक्तिप्रधानसाधना प्रस्फुटति स्फुटञ्च भवति तेषां 'त्रिपुरा' सम्प्रदायानुरोधेन शक्तेः समर्चनम्।

---

१. द्रष्टव्यम्—तान्त्रिकसाहित्य ( पृ० ५४३-५४४ )।

२. तत्रैव—( पृ० २५७-२५८ )।

३. ,, ( पृ० ११९ )।

४. प्रणम्य प्रकृतिं नित्यां परमात्मस्वरूपिणीम्।
तन्यते भुक्तिमुक्त्यर्थं शाक्तानन्दतरङ्गिणीम्॥ (शा० मङ्गलाचरणे, श्लो० १)

५. ब्रह्मविष्णुशिवादीनां भावो यस्यां निजेच्छया।
पुनः प्रलीयते यस्यां नित्या सा परिकीर्तिता॥ (शा० मङ्गलाचरणे, श्लो० ५)

६. मङ्गलाऽर्हसि सर्वेषां तेन त्वं सर्वमङ्गला।
वरदाऽसि च मर्त्यानां वरदा तेन कीर्त्यसे॥ (शा० १८।१०९ )

७. संसारार्णवमग्नानां सर्वेषां प्राणिनामिह।
दुर्गैका हि परः पोतो नराणां मुक्तये सदा॥ ( शा० १८।१११ )

शाक्तानन्दतरङ्गिण्याः प्रत्युल्लासस्यान्ते 'इति श्रीपरिव्राजकाचार्यपरमहंसतीर्थविधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां' इत्युक्तम् । तत्रैतैः परिव्राजक-आचार्य-परमहंस-तीर्थ-अवधूतवचनैर्ब्रह्मानन्दगिरीणामनन्तमाहात्म्यं विद्योतते । किञ्च ग्रन्थकर्तारः स्वयमेवैभिर्विशेषणवचनैरात्मानं गौरवेण संयोजयन्ति । एतत्सरणिरन्यत्रापि भवभूति-पण्डितराज-जगन्नाथ-नागेशभट्टप्रभृत्युक्तिष्वपि दृश्यते । तदेतेन ब्रह्मानन्दगिरियतीनां महन्महत्त्वमवश्यमङ्गीकरणीयम् ।

ब्रह्मानन्दगिरीणामन्या तन्त्रागमविषयिणी रचना 'तारा रहस्यं' नाम्नी चत्वारिपटलान्विता ताराया उपासनमधिकृत्य विरचिता वर्तते । दशमहाविद्यासु ताराया महत्त्वपूर्णं स्थानं सर्वत्र राजते । तदुक्तं तैर्मङ्गलश्लोकैरादावेव—

तारां संसारसारां त्रिभुवनजननीं सर्वसिद्धिप्रदात्रीम्
सर्वाद्यां सर्वरूपां सकलगुणमयीं वन्दितां देववृन्दैः ।
दिव्ये राजे सरोजे भवभयभयदां राजमानां प्रणम्य
ब्रह्मानन्दाख्यकोऽहं भुवनहितकृते तद्रहस्यं तनोमि[1] ।। इत्युक्तम् ।

तत्रैव तन्मङ्गलाचरणविवरणे—'नानाशास्त्रार्थविलोकनपूर्वकं श्रीमत्तारादेव्या रहस्यं धर्मकामार्थमोक्षाणां तारामन्त्रेण दायकं सकलगुरुमतं प्रातः-कृत्यादिक्रियाज्ञानार्थं देवतामन्त्रनिरूपणादिग्रन्थः साधकहिताय ब्रह्मानन्देन मया यत्नेन वितन्यते[2] ।

अत्रापि ग्रन्थे सर्वत्र पटलान्ते—'इति परमहंसपरिव्राजकाचार्य्यब्रह्मानन्दगिरितीर्थावधूतविरचिते तारारहस्ये सर्वरहस्योत्तमे हरगौरीसंवादे' इत्युक्तम्। अत्रापितान्येत्र विशेषणान्युपन्यस्तानि, यानि शाक्तानन्दतरङ्गिण्यामुपन्यस्तानि । ग्रन्थान्ते च—

यत्रास्ते कमला कृताञ्जलिपरा वीणाधरा शारदा
ताराराध्यमनुस्मरन् प्रियतमं चोमावचः कारणम् ।
ब्रह्मानन्दकृतौ सुसाधनविधौ तारारहस्ये शुभे
योगाचारविधौ चतुर्थपटलः सर्वार्थसिद्धिप्रदः[3] ।। इत्युक्तम् ।'

१. तारारहस्ये ( १।१ )
२. तत्रैव ।
३. तारारहस्ये—(४। अन्तिमः श्लोकः), (प्रकाशको जीवानन्दविद्यासागरभट्टाचार्यः, द्वितीयं संस्करणम्, कलिकाता, सन् १७९६ ईशवीयः) ।

ग्रन्थादौ 'श्रीब्रह्मानन्दपरमहंसपरिव्राजकविरचितम्' इत्युक्तम्। एतेन ग्रन्थकर्तृणां यतिवरत्वं सिद्धयति। यतयश्चैते शक्तेः समर्चनेन लब्धसर्वार्थ-सिद्धयः परमधन्या अभूवन्। अन्यथा 'सर्वसिद्धिप्रदात्रीं', 'ताराहस्यं धर्मार्थ-काममोक्षाणां तारामन्त्रेण दायकं' इति पदं प्रयुक्तं न स्यात्। नाम्ना चापि ते निवृत्तिमार्गावलम्बिन ऐवेति संसूचितं भवति। तस्मादेते पुत्र-कलत्रादि-रहिता सर्वाराध्याया भगवत्याः सर्वथा सिद्धिं विधाय लोकोपकारबुद्धया साधनाप्रधानरचनासु प्रावर्तन्त।

ब्रह्मानन्दगिरिशिष्यः पूर्णानन्दः षोडशशताब्द्यास्तृतीयचरणे (सन् १५७५ ईशवीये) आसन्। अत एतेषां कालः षोडशशताब्द्या मध्यभागः (सन् १५५० ईशवीयः) भवितुमर्हति। पूर्णानन्दः षोडशख्रीष्टशताब्द्याः परमसाधकस्तन्त्रा-गमग्रन्थानां प्रणेता चासीत्। एतेषां रचितेषु ग्रन्थेषु 'शाक्तक्रमः', 'श्रीतत्त्व-चिन्तामणिः', प्रभृतयः प्रमुखतमाः सन्ति ग्रन्थाः। तत्र 'शाक्तक्रमः' १५७१ ख्रीष्ट-ईशवीये 'श्रीतत्त्वचिन्तामणिश्च' १५७७ तमे ईशवीये ग्रन्थाकारता-मागतवन्तौ।

अतो गुरुशिष्य-साधना-रचनापरम्पराभिर्युक्ता ब्रह्मानन्दगिरियति-पतयो नूनं तन्त्रागमशास्त्रे महत्तमं स्थानमलङ्कुर्वन्ति। किञ्च-ग्रन्थोद्धृत प्रायः शतसंख्याकग्रन्थोद्धरणैरेषां महात्मनामतिगभीरं युक्तियुतञ्च तन्त्रा-गमशास्त्रपर्यालोचनं तन्निरूपणविधिश्च नूनं विदुषां जिज्ञासूनाञ्च महदुप-काराय युज्यत इति तन्त्रागमकान्तारचारिभिस्तल्लजैरवश्यमवधेयम्।

अद्वैतसिद्धिरिति व्याख्यानं मधुसूदनसरस्वत्या 'ब्रह्मसूत्रं' अनुसृत्या-नुपमाऽद्वैतदर्शने रचना। तदत्र यथार्थग्रहणेन चान्वग्रहोषुः साधनचतुष्टय-सम्पन्नाः सर्वतन्त्रस्वतन्त्रा ब्रह्मानन्दसरस्वत्यः स्वकृतेन लघुचन्द्रिकाख्येना-द्वैतसिद्धिव्याख्यानेन मृतसंजीवनकल्पः कार्यं कृतवन्तः। एत एव ब्रह्मानन्द-सरस्वत्यस्तन्त्रागमरचनायामप्युपयुज्यन्ते इति केचन वदन्ति।

अत्रेत्थं तत्त्वम्—नारायणतीर्थानां विद्याशिष्या गौडदेशोद्भवाः श्रीब्रह्मानन्दसरस्वतीत्याख्या यतिवरा 'लघुचन्द्रिकां' नाम्नीमद्वैतसिद्धेर्व्याख्यां निर्मापयामासुः। इयमेव टीका 'गौडब्रह्मानन्दी'त्यभिधया सुप्रसिद्धा विद्वज्जनैकवेद्या वर्तते। अनया मधुसूदनसरस्वतीनां वाचामुपरि प्रतिपक्षदत्ता दूषणाभासाः सविस्तरं खण्डिताः। तत्र तत्र च मन्त्रार्था मीमांसाविषयाश्च

स्पष्टीकृताः। एते ब्रह्मानन्दस्वामिनः परमादरेण श्रीमधुसूदनमुनीन्सरस्वतीपदेनैव व्यवहर्रन्ति परिच्छेदसमाप्त्यादौ। अद्वैतमतपरिरक्षणे सुमहत्किल पाण्डित्यमेषां ब्रह्मानन्दसरस्वतीपादानां दरीदृश्यते। एतेषां मङ्गलश्लोका ग्रन्थादौ यथा—

नमो नवघनश्यामकामकान्तिदेहिने।
कमलाकामसौदामकणकामुकगेहिने ॥

श्रीनारायणतीर्थानां गुरूणां चरणस्मृतिः।
भूयान्मे साधिकेष्टानामनिष्टानां च बाधिका ॥

अद्वैतसिद्धिव्याख्यानं ब्रह्मानन्देन भिक्षुणा।
संक्षिप्तचन्द्रिकार्थेन क्रियते लघुचन्द्रिका[1] ॥ इत्युक्तम्।

तत्र प्रथममिथ्यात्वनिरूपणं प्रारभ्यान्तं यावद् ब्रह्मानन्दसरस्वतीपादानां व्याख्यानमद्वैतदर्शनमधिकृत्य जातम्। तत्रैवं केनचित्प्रबलप्रमाणाभावेन लघुचन्द्रिकाकारा एव ब्रह्मानन्दस्वामिनः शाक्तानन्दतरङ्गिण्या अपि ग्रन्थनं विदध्युरित्यशंसयेन न वक्तुं शक्यते।

अत्रेदमप्यवधेयम्—दृश्यते हीदं यद् प्राक्तनाचार्याः स्वजीवनेतिवृत्तविषये क्वचित् किञ्चिदपि प्रायो न लिखन्ति स्म, येन तज्ज्ञाने सर्वत्र प्रायोऽनवस्था एव दृश्यते। श्रीब्रह्मानन्दस्वामिनो वंगदेशीया एवासन् इति वेदान्तसम्प्रदायविदो वदन्ति। तस्मादसावेव स इति युक्त एव प्रतिभाति। अत अद्वैतसिद्धेर्लघुचन्द्रिकाख्यव्याख्याकर्तारो ब्रह्मानन्दगिरय एवासन्निति समर्थने न कोऽपि दोषः।

किञ्च, शाक्तानन्दतरङ्गिणीग्रन्थे ब्रह्मणो मुक्तेश्च नामनी भूयो भूयःसमायाति[2] तथा च विद्या-अविद्ययोः, बन्धमोक्षयोरपि नाम प्रायशः कतिवारं स्मरति ब्रह्मानन्दपरमहंसः[3]। एतेनाद्वैतसिद्धेर्व्याख्याता अयमेवेति कथने न

१. अद्वै० सि० लघुचन्द्रिकायां (१-२-३)।
२. शाक्ता०—पृ० ३६, ३७, ४०, ४१, ४२, ४३, ५४, ५७, ६०, ७८, १५२, १७२, १८८, १९०, २०१, २०३, २२३।
३. तत्रैव—पृ० १४।

कोऽपि संशीतिलेशः। एवं हि लघुचन्द्रिकाया मङ्गलश्लोकसदृश एवैकः श्लोकः शाक्तानन्तरङ्गिणीग्रन्थेऽपि दृश्यते[1]। एतेनाद्वैतवादी ब्रह्मज्ञानी स नूनं ब्रह्मानन्दयतिवर एष एव शाक्तानन्दतरङ्गिणीकारोऽपीति शम्।

### ग्रन्थसम्पादनविषये किञ्चित्

सम्पादनकार्यगौरवं न तिरोहितं प्रेक्षावताम्, तथापि मया यथाकथंचिद् कार्यमेतत्सम्पादितम्। 'शाक्तानन्दतरङ्गिणी' वंगलिप्यां प्रकाशिता विद्यते[2]। एतस्या 'एशियाटिक सोसाइटी' पुस्तकालये वंगलिप्यामेका प्रतिः ६१९४ संख्यया वर्तते। 'राजेन्द्रलालमित्र' पुस्तकालये चापरा प्रतिः वंगलिपिलिखिता प्राप्यते। तस्याः पाण्डुलिपिसंख्या ३१८२ इत्यस्ति। अन्या च वंगालिप्यामेवैका पाण्डुलिपिः 'वंगीयसाहित्य परिषदि' डिस्क्रिप्टिव कैटलाग आफ़ सं० मेनु० इन वंगीयसाहित्य परिषद्', कालिकातायां ९१९ संख्यया विराजते।

मया सरस्वतीभवनस्थवंगलिपिलिखितां पूर्णां पाण्डुलिपिमाश्रित्य म० म० पं० गोपीनाथकविराजमहोदयेन संस्कारितां देवनागरीलिप्यामनूदिताञ्च 'शाक्तानन्दतरङ्गिणीं' आश्रित्य यत्र तत्रावश्यकं संशोधनादिकं विधाय सम्पादनकार्यमाचार्यपं० व्रजवल्लभद्विवेदिनां साहाय्येन संसाधितम्। अस्मिन् ग्रन्थे अष्टादशोल्लासा देव्याराधनायै समग्रोपचारमण्डिता विद्यन्ते। प्रथमन्तावदादौ मङ्गलाचरणं विषयसंक्षेपनिरूपणञ्चादाय ११ श्लोकाः, प्रथमोल्लासे १२३, द्वितीयोल्लासे १८३, तृतीयोल्लासे ५८, चतुर्थोल्लासे २०८, पञ्चमोल्लासे ४३, षष्ठोल्लासे ६८, सप्तमोल्लासे १८९, अष्टमोल्लासे ८०, नवमोल्लासे १४३, दशमोल्लासे ६५, एकादशोल्लासे ५३, द्वादशोल्लासे १५३, त्रयोदशोल्लासे ९६, चतुर्दशोल्लासे १५३, पञ्चदशोल्लासे १११, षोडशोल्लासे १०४, सप्तदशोल्लासे ४८, अष्टादशोल्लासे च ११७ श्लोका विद्यन्ते। तान् संगृह्य समग्रश्लोकसंख्या २००६ संख्याका भवति।

ग्रन्थेऽस्मिन् तन्त्रागमसाधकानां प्रचुरं मार्गदर्शनं संवृत्तम्। समग्ररचनासु स्थूल-सूक्ष्म-बाह्योपचार-मानसोपचारदिभेदपुरस्सरः साधनमार्गः

---

१. शिवाय शक्तिनाथाय विद्यानाथाय सच्चिदे।
कामरूपाय कामाय कामकेलिकलात्मने॥ (शा० ४।१९)

२. तान्त्रिकसाहित्ये—म० म० पं० गोपीनाथकविराजकृते—पृ० ६२१।

सुष्ठूपपादितोऽस्ति। 'येनेष्टं तेन गम्यतामिति' उक्तिश्चारितार्थ्यतां भजतेऽत्र-ग्रन्थे। ग्रन्थान्तर्गतान् कांश्चन विषयानादाय आमुखभाग एव मया ग्रन्थ-स्वारस्यस्थापनाय यतितम्। मन्ये तन्नूनं किल विदुषां मोदाय स्यात्।

प्रकाशनमिदं तन्त्रसंग्रहस्य पञ्चमभागमधिकृत्य जायते। पञ्चमभागे खण्डद्वयं विधाय पूर्वखण्डात्मकोऽयं भागः पूर्वं सम्पाद्य प्राकाश्यतामेति। अवशिष्टभागश्चैतदनन्तरं सम्पाद्य प्राकाश्यं यास्यति। व्यवस्थेयं विभागस्य प्रकाशनकार्यमधिकृत्य कृता विद्यते। शीघ्रं किञ्चित् प्रकाश्यतां यातु इत्य-धिकृत्य सत्वरेण प्रकाशनेनानेन मोमोत्ति मे चेतः।

## ग्रन्थेऽत्र प्रतिपादिता विषयाः

शाक्तानन्दतरङ्गिणीग्रन्थस्य संकलयितारः स्वामिनो ब्रह्मानन्दगिरिमहो-दयाः सन्ति। एते हि महान्तोऽद्वैतदार्शनिकसिद्धान्तस्याद्वैतसिद्धेः लघुचन्द्रिका-परनामधेयाया गौडब्रह्मानन्दीटीकायाः कर्तारः सन्ति। अतस्तया मूलभावनया भाविता इमे 'शाक्तानन्दतरङ्गिणी' ग्रन्थस्य संयोजनं कृतवन्तः। अत्र ग्रन्थेऽष्टादशोल्लासा विभिन्नविषयका विलसन्ति। तत्र प्रत्युल्लासस्य विषयाः प्रतिपाद्यविषयसंक्षेपेणादावेवोक्ताः, यथा—प्रथमोल्लासे कर्मसम्भवा शरीररचना वर्णिता। द्वितीये दीक्षाविधानं, तृतीये योगनिर्णयः, चतुर्थे प्रातः कृत्यं, पञ्चमे आसनं, षष्ठे आन्तरपूजा, सप्तमे नित्यपूजा, मालाविधानमष्टमे, जपविधानन्न-वमे, महासेतु-सेतु-कुल्लुकादि (तत्तद्देवसिद्धिकारकः बीजमन्त्रस्योपदेशः) निरूपणं दशमे, एकादशे मुखशोधनोपायः, पुरश्चरणविधिर्द्वादशे, यन्त्रराजस्य निर्माणं, संस्कारः, बलिश्च त्रयोदशे, तत् सिद्धौ फलञ्च चतुर्दशे, नामस्मरण-पूजादिफलं पञ्चदशे, प्रायश्चित्ताचरणं षोडशे, कुण्डनिर्माणविधिः सप्तदशे, अष्टादशोल्लासे होमविधयश्च निरूपिताः। एवञ्च तन्त्रागमराद्धान्ते साध-नाया आवश्यकतत्त्वानामेकत्रैवात्रग्रन्थे संकलनं महामतिना परमहंसतीर्थाव-धूतब्रह्मानन्दयतिना कृतमिति।

## प्रथमोल्लासे

### शरीरं कर्मसम्भवम्

अत्र प्रथमोल्लासे हि शरीररचनाविवरणप्रसङ्गे ग्रन्थकारः 'शरीरं कर्मसम्भवमि'त्यभिधाय रजवीर्ययोः क्षितिरापस्तेजसां वाय्वाकाशरूपिणोः स्थितिः कुम्भकारस्य चक्रे घटादिवज्जायत इति पर्यालोचयति। ततश्चैक-

रात्रेण गर्भस्य कलनं, पञ्चभिर्दिवसैर्बुद्बुदं, दशरात्रैः शोणितं, चतुर्दशभिर्मासपिण्डं, मासैकेनाङ्कुराकृतिर्भवति। स चाङ्कुरो ब्रह्माण्डाकारतामादौ धत्ते, तदनु मध्ये कङ्कालदण्डाकृतेर्मेरोरुदयो मध्यतो जायते, यस्मिन् किल सर्वेषां चराचराणां देवादीनामालयो भवति। अस्मिन्नेव सर्वजीवानामालये प्रदीपकलिकाकारे मेरौ प्राणापानाभ्यामवस्थितो जीवः सन्तिष्ठते। अस्य जीवस्य परिवारगणा अक्षिणी, नासिका, कर्णौ, जिह्वा, हस्तौ, पादौ, गुह्योपस्थौ, नाभिः, मनः, जाग्रत-स्वप्न-सुषुप्त्यवस्थेत्यादयः सन्ति। समग्रेन्द्रियाणां परमसारथिर्मन एव भवति, आत्मनो बन्धः पापैः पुण्यैश्च भवति। जीवः सङ्गत्या एव सदसत्सर्वं कर्म करोति, परं परमार्थतो जीवः शुद्धसत्त्वात्मकः सदसत्कर्मवर्जितः सन्नपि मनसा संयोगात्सदसत्कर्मकर्ता भवति।

एवं शुद्धसत्त्वमयस्य मेरोर्मध्यस्थितस्य जीवसंवलितस्याङ्कुरस्य द्वितीयमासे मेदसाऽऽच्छादनं, त्रिभिर्मासैर्मज्जास्थीनि, चतुर्थे केशास्त्वचः, पञ्चमे च कर्णाक्षिनासिकावक्त्रकण्ठोदराणि प्रभवन्ति। अस्मिन्नेव मासेऽर्भके शुक्रोत्पत्तिः, शुक्राद्रक्तं, रक्ताद् बिन्दुः, प्राणतो वायुरपानतः कालाग्निः, शुक्रादेव नाड्यः, तस्मादेवाग्नयः समुद्भवन्ति। मांसतो मलानि मज्जा च, वायुना प्राणाः, अपादानादग्निः, शुक्रेण जिह्वा नासिका च, रक्तादक्षिणी, प्राणाच्छून्यं प्राणरन्ध्रद्वयञ्चोत्पद्यन्ते।

एवमेव षष्ठे मासे मुखं पादौ च, सप्तमे सर्वाङ्गानि, अष्टमे मासे च सर्वाः सन्धयः सम्पूर्णतां यान्ति। अस्मिन्नेव मासे शिरसाऽऽरभ्य गुदमूलं यावद् द्वात्रिंशज्ज्ञानग्रन्थयो बर्द्धन्ते। तन्मध्य एवेडापिङ्गलासुषुम्नागान्धारीहस्तिजिह्वापूषायशस्विनी-अलम्बुषा-कुहुः-शंखिनीति दशप्रधाननाड्योऽन्याश्च द्विसप्ततिः सहस्रसंख्याः (७२०००) क्षुद्रनाड्यस्तत्र प्रादुर्भवन्ति। दशप्रधाननाड्यश्च दशद्वारं समावृत्य तिष्ठन्तीति। ताश्च यथा वामभागेडा, दक्षिणे पिङ्गला, ब्रह्मरन्ध्रे सुषुम्ना, वामचक्षुषि गान्धारी, हस्तिजिह्वा दक्षिणचक्षुषि, दक्षिणकर्णे पूषा, वामे च यशस्विनी, मुखे अलम्बुषा, कुहुश्च लिङ्गमूले, शिरसोपरि शंखिनीति। एवञ्च बाह्याभ्यन्तरभेदतः पृथ्वीजलतेजोवाय्वाकाशाख्यानि पञ्चभूतानि स्थैर्यं गतानि च तत्र त त्र तिष्ठन्ति।

### पञ्चभूतेषु शरीरावयवानां स्थितिः

अष्टममास एव गर्भस्थशिशोरस्थिचर्मनाडीलोममांसाख्याः पञ्चगुणाः पार्थिवांशेऽन्तर्भवन्ति। जलीयांशे च मलमूत्रशुक्रश्लेष्माशोणिताख्याः पञ्च-गुणा अन्तर्भवन्ति। क्षुधातृष्णानिद्राप्रमोहकान्तिश्च तेजस्यन्तर्भवन्ति। विबोधाक्षेपणाकुञ्चनधारणतर्पणञ्चैते पञ्चगुणा वायौ अन्तर्भवन्ति। रागद्वेषमोहभयलज्जाश्चैते पञ्चगुणा आकाशेऽन्तर्भवन्ति। एवं हि प्राणापान-समानोदानव्याननागकूर्मकृकरदेवदत्तधनञ्जयाख्यो दशभेदात्मको वायुः प्राणसम एव भवति। तत्र हृदि प्राणः, गुदेऽपानः, नाभिदेशे समानः, कण्ठदेशे उदानः, सर्वशरीरे च व्यानवायुस्तिष्ठति। इम एव प्रधानवायवः।

### यद्ब्रह्माण्डे तदेव पिण्डे

तन्त्रागमस्यायं सिद्धान्तः सर्वत्र विलसति यत् 'यद्ब्रह्माण्डे तदेव पिण्डे' इति। यथा ह्यनेककोटिपिण्डाण्डानि तथैवानेककोटिब्रह्माण्डानीत्यपि न विस्मर्तव्यं सुधीभिः। तत्र ह्येवं स्थितौ ग्रन्थकारः सिद्धान्तममुं विमृशन्नाह—

'ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे'[1] ॥ इति ॥

सर्वदेहिनां पिण्डमध्ये सर्वे लोकाः, आदित्यादिनवग्रहाः, पातालभूधरा-स्तिष्ठन्ति। पादाधस्त्वतलमूर्ध्वं वितलं, जानुनोः सुतलं, सन्धिरन्ध्रयोश्च तलं तिष्ठति। गुल्फमध्ये तलातलं, लिङ्गमूले रसातलम्, कटिसन्ध्योः पातालं, नाभिदेशे भूर्लोकः, हृदि भुवो लोकः, कण्ठे स्वर्लोकः, चक्षुषी मनोलोकः, तदूर्ध्वं जनलोकः, ललाटे तपोलोकः, ब्रह्मरन्ध्रे सत्यलोक इत्येवमत्रोर्ध्वाधः-क्रमेण चतुर्दशभुवनानि शरीरे एव विलसन्ति।

### शरीर एव कुलपर्वतसप्तद्वीपसप्तसागराश्च

समग्राः सृष्टिस्त्रिकोणात्मिका। ऊर्ध्वाधस्त्रिकोणक्रमेण शिवशक्तित्रिकोणानां परस्परमेलनात् श्रीचक्रादीनां निर्मितिः सम्पद्यते। षट्चक्राणां स्थितिस्त्रि-कोणात्मिका, समेषाञ्ज्योतिर्लिङ्गानां शक्तिपीठानाञ्च स्थितिस्त्रिकोणात्मि-कैव। अतोऽण्डपिण्डसिद्धान्ते शरीरमपि त्रिकोणात्मकमेव। शरीरे मेरोः स्थितिस्त्रिकोणे, रुद्रलोके मन्दराचलः, दक्षिणकोणे कैलासः, वामे हिमालयः, तदूर्ध्वे विन्ध्यस्तदुर्ध्वे च विष्णुपर्वत इति पर्वताः। एवमेव सप्तद्वीपा अपि

१. शा० (१-३९)।

शरीरे एव वर्तन्ते। यथा सागराणां (शरीराणां) मध्ये जम्बूद्वीपः, मांसेषु कुशद्वीपः, शिरासु क्रौञ्चद्वीपः, पयोरक्ते सर्वसन्धिषु च शाकद्वीपः, तदूर्ध्वं शाल्मलीद्वीपः, लोमेषु प्लक्षः, नाभौ पुष्करद्वीपास्तिष्ठन्ति। एवमेव सप्तसागरा अपि यथाक्रमं मूत्रे लवणसागरः, शुक्रे क्षीरोदधिः, मज्जायां दधिसागरः, तदूर्ध्वञ्च घृतसागरः, मलोत्सर्गे कच्चरः, कटिशोणिते चेक्षुसागरः, सर्वत्र शोणिते जलं (स्वरः) इति सप्तसागराः निवसन्ति।

## शरीरे ग्रहादीनां स्थितिः

शरीरे नादचक्रे सूर्यस्य स्थितिर्बिन्दुचक्रे च चन्द्रमसः। लोचनयोर्मङ्गलः, बुधो हृदि, उदरे गुरुः, शुक्रे शुक्रः, नाभौ शनिः, मुखे राहुः, पादे नाभौ च केतुः एवमेव सर्वे ग्रहा अस्मिन्नेव शरीरे निवसन्ति। एवमेव नवमे मासि गर्भस्थो जीवः मनसा सर्वं स्मरति। नवद्वारपुरे देही सुखं दुःखं समं कृत्वा भुङ्क्ते। जीवश्च पूर्वजन्मनि कृतं दुष्कृतं सुकृतं स्मरन् ऊर्ध्वपादस्त्वधो मुखो घोरतिमिरे गर्भे स्थितः सन् जनन्या नाभिदेशे मुखं कृत्वा मात्रा भुक्तमन्न-पानादिकं भुङ्क्ते। गर्भकष्टेनासौ जीवो मूर्छितः सन् परिचिन्तयति यदहं जन्म गृहीत्वा संसारार्णवतारकं शिवशास्त्रमभ्यस्यामि, चिराद् योगी भूत्वा च मुक्तो भविष्यामीति। ततश्च पूर्णे काले प्रबलैः सूतिमारुतैर्गर्भस्थं शिशुं निस्सार्यते। तदनु गभीरेण सूतिवातेन योनिरन्ध्रेण च पीडितो जीवो गर्भे चिन्तितं ज्ञानं विस्मरति, वेदनया बुभुक्षया च व्याकुलो मातरमेव स्मरति। पुत्रबालिकयोरुत्पत्तौ किं कारणमिति विश्लेषयन् ग्रन्थकारो ब्रवीति—

रक्ताधिका भवेन्नारी भवेच्छुक्राधिकः पुमान्।
नपुंसकं ततो जातं साम्ये च रजबीजयोः[1] ॥ इति।

एवमेवायु-कर्म वित्त-विद्या-निधनानीति पञ्चैतानि गर्भ एव सृज्यन्ते।

## शरीरावस्थाः

तन्त्रागमशास्त्रदृष्ट्या शरीरिणां बालकः, शिशुः, गण्डः, किशोरः, युवकः प्रौढः, अतिप्रौढः, वृद्धः, अतिवृद्धः, पलितः, मृत इति दशावस्था भवन्ति। एवं हि मनुष्याणामेव शरीरं केवलमातिवाहिकं भवति। मृत्योरनन्तरं वत्सरपर्यन्तं सः प्रेतदेहो भवति, तदनु सपिण्डीकरणान्ते सति कर्मानुसारं हि

---

१. शा० (१-६३)।

स यथालोकमधिगच्छति। जीवः कर्मवशादेव देवत्व-मनुष्यत्व-पशुत्व-पक्षित्व-कृमित्व-स्थावरत्वादयोऽवस्थां प्राप्नोति। मानवदेहः कर्मयोनौ अन्यदेहास्तु भोगयोनौ परिगणिताः। मनुष्यशरीरेण कृतकर्मणैवाष्टचत्वारिंशल्लक्षयोनिषु जीवः फलं भुङ्क्ते, मोक्षं वा प्राप्नोति। अन्यशरीरेण किमपि कर्मविधानं न जायते। तत्र तत्र तु भोगप्रधानैवावस्थाऽवगन्तव्या। अनन्तजन्मार्जितपुण्यप्रसादेन मनुष्यजन्म जीवो लभते। तत्र चाहारनिद्राभयमैथुनं समेषां जीवानां समानानि भवन्ति, किन्तु मनुष्ये ज्ञानसम्पत्तिरधिका, यामाश्रित्य स परमं लक्ष्यमवाप्तुं शक्नोति। महाभाग्यवतो यस्य जीवस्य तत्त्वज्ञाने मनो रमते तत्कृते सम्पदः स्वप्नसङ्काशाः, यौवनं कुसुमसंकाशमायुस्तडित्संकाश इति। संसारः सर्वदुःखानामालयः, महाकालः पृथिव्यादिकं सर्वमत्ति तदा शरीराणां का कथा? ममेति पाशबन्धे बद्धो जीवः नानादारुणदुःखमनुभवन् पौनः पुन्येनायाति याति च। मृत्युः पापपङ्के मानवं निमज्य विषयसर्पिषा चाभिषिच्य रागद्वेषानलैः परिपच्य चाश्नाति। यदा प्राणः स्वदेहमपि परित्यज्य गच्छति, तदा स्वसम्बन्धिनां का कथा? दुःखमूलं जगत् येन त्यक्तं स एव सुखमाप्तुं शक्यते। धन्या सा महामाया यया सम्मोहितं जगत् सामान्यतोऽऽत्मनः कर्म न वेत्ति। तस्यैव प्रभावेण गर्भान्तर्गतो ज्ञानविज्ञानसम्पन्नो जीव उत्पत्तेरनन्तरं तेन रहितो भवति। अतस्तां मायां ज्ञात्वा समयं वृथा नातिवाह्य यो यतते, स मुच्यत इति।

## द्वितीयोल्लासे

### दीक्षाविधानम्

तन्त्रागमसिद्धान्ते दीक्षां विना मोक्षो न सिद्धयति। शिवसंसिद्धिकारके ह्यस्मिन्ननुशासने यन्त्र-मन्त्रादीनामभावे किमपि न प्रतिफलति। यथा तमसाऽऽवृते गेहे घटो दीपेन गोचरतामायाति, तथैव मायावृतो ह्यात्मा मन्त्रसाधनप्रक्रियया प्राप्तुं शक्यते, तदर्थंमन्त्रानुशासने दीक्षा अनिवार्या। दीक्षया युक्तो हि साधनाधिकारी भवति, स चैव शिवत्वं लभते। अन्यथा अदीक्षितोऽनधिकारी सन् सर्वं कुर्वन्नपि सिद्धिफलं न विन्दति। अतः षोडशे वर्षे सम्प्राप्ते समाहितचेतसा दीक्षाग्रहणं कुर्यात्। तदन्वागमोक्तविधानेन गुरोराज्ञया देवान् यजेच्च।

### दीक्षाशब्दार्थस्तस्यावश्यकता च

दिव्यज्ञानं यतो दद्यात् कुर्यात् पापक्षयं यतः।
तेन दीक्षेति लोकेऽस्मिन् कीर्तिता तन्त्रपारगैः॥

उपचारसहस्रैस्तु अर्चितां भक्तिसंयुताम् ।
अदीक्षितार्चनं देवा न गृह्णन्ति कदाचन ॥
कर्माखिलं वृथा यस्मात्तस्माददीक्षितः पशुः[1] ॥ इति ।

दीयते ज्ञानसद्भावः क्षीयते च मलत्रयम् ।
दीयते क्षीयते चेति दीक्षाशब्दो द्विधोच्यते[2] ॥

नेत्रतन्त्रे च—

सा च दीक्षा समुद्दिष्टा दानक्षपणलक्षणा[3] ।

मृगेन्द्रागमे क्रियापादे च—

दीक्षा परमविश्लेषः पाशच्छेदो निरोधनम् ।
पराशुद्धिर्बलं व्यक्तिर्मुक्तिः परमनिष्कृतिः ॥
पर्यायाः शिवगीतेषु तन्त्रेष्वित्यादयो मुने[4] ॥

श्रीतन्त्रालोके च—

सितासितौ दीर्घह्रस्वौ धर्माधर्मौ दिनक्षये ।
क्षीयते यदि तद्दीक्षा व्याप्त्या ध्यानेन योगतः[5] ॥

इत्यादीनि वचनान्यपि संगच्छन्ते । तथा चायं दीक्षाविधिः तन्त्रागमशास्त्रेऽतिविशदेन विचारितः प्रचारितश्चास्ति । एतदर्थं मतङ्गपारमेश्वरे क्रियापादे (५-९ पटलयोः), मृगेन्द्रागमे क्रियापादे ७ पटले, कालोत्तरे ८ पटले, नेत्रतन्त्रे ४ चतुर्थाधिकारे, मालिनीविजये ४-९ अधिकारयोः, तन्त्रसारे (पृ० १४२-१८२), श्रीतन्त्रालोके १५,२६, २९,३० आह्निकेषु स्थलानि द्रष्टव्यानि ।

अतो दीक्षया दिव्यज्ञानपूर्वकः पापक्षयो भवति । पाप एव मलपदेनाऽप्युच्यते । दीक्षया गुरुः शक्तिपातमाचरति । ततश्च साधकः साधनाधिकारी भवति । गुरुकृपां विना काऽपि साधना न प्रतिफलति । गुरौ गकारः सिद्धदः,

---

१. शाक्तानन्दतरङ्गिण्यां द्वितीयोल्लासे (१६, १५-१६ ।२) ।
२. आचार्यपं० व्रजवल्लभद्विवेदिप्रतिपादिते लुप्तागमसंग्रहे भूमिकायाम्—पृ० १५९ ।
३. नेत्रतन्त्रे (१९।१६१) ।
४. मृगेन्द्रतन्त्रे (८।१०१-१०२) ।
५. श्रीतन्त्रालोके (६।७४,७५) ।

रकारः पापदाहकः, उकारश्च शिवात्मक इति त्रितयात्मा गुरुः[१] । दीक्षायाः परं फलं मुक्तिः, सामान्यफलञ्च भुक्तिः । दीक्षितो ब्राह्मणो ब्रह्मलोकम्, क्षत्रिय ऐन्द्रलोकम्, वैश्यो विधिलोकम्, शूद्रश्च गन्धर्वलोकमधिगच्छति ।

### दीक्षादाने स्त्रीणामप्यधिकारः

'कलौ ह्यागमसम्मतः' इति कुलार्णववचनात्कलौ युगे स्त्रीशूद्राणामप्यत्र शास्त्रेऽधिकारः । तन्त्रं युगशास्त्रम्, 'विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये' इति निर्वाणतन्त्रवचनाल्लोकपरलोकसाधनाच्च तन्त्रागममार्गोऽधुना युक्तः । तत्र हि शूद्र-स्त्रीणाञ्चाप्यधिकारः । स्त्रियोऽपि यदि सिद्धास्तर्हि दीक्षादाने प्रशस्ताः । यदि स्त्री दीक्षां प्रयच्छति तदा सा दीक्षा शुभा, मात्रा प्रदत्ता दीक्षा ततोऽप्यष्टगुणा, स्वप्नाल्लब्धदीक्षायान्तु विचार एव नास्ति । अतो विचारसारतत्त्वज्ञा सधवा र्ही स्त्री दीक्षादानेर्हा गुरुयोग्या च[२] ।

### दीक्षादानविधिः

विपुलतन्त्रागमवाङ्मये दीक्षाविधानं बहुशो भेदोपभेदपुरस्सरं प्रतिपादितम् । तदेवानुसृत्य ब्रह्मानन्दयतिनाऽपि गुरुदीक्षामुद्दिश्य वृक्षपत्रेषु दीक्षाविधानं निरूपितम् । पत्ररत्नेषु वकुलाश्वत्थपत्रं प्रशस्यं निगदितम् । वटपत्रे शक्तिमन्त्रं दद्यात्, विष्णुमन्त्रञ्च वटपत्र एव, बकुले शिवमन्त्रम् । शक्तिमन्त्रं रक्तचन्दनेन गोरोचनेन वा लिखेत् । मलयेन विष्णुमन्त्रम्, भस्मना च शिवमन्त्रम् । तत्तन्मन्त्राणि सप्त सप्तपत्रेषु लिखित्वा शिष्याय देयानि । बीजमन्त्रमपि तत्तद्देवानामेवं दत्वा गुरुः प्राङ्मुखो शिष्यश्चोदङ्मुखः सन् त्रिवारं दक्षिणे कर्णे एकवारं च वामे पुरुषेषु, स्त्रीषु च विपर्ययेन त्रिवारं वामे एकवारञ्च दक्षिणकर्णे दद्यात् । ततश्चाचम्य प्राणायामं विधाय ऋष्यादिन्यासपूर्वकमष्टोत्तरशतं मन्त्रजपं दक्षिणकर्णे अष्टवारञ्च वामकर्णे कुर्यात् । तदनु शिष्योऽप्यष्टोत्तरशतं तन्मत्रं जपेत् । अयञ्च विधिस्तान्त्रिको दीक्षायाः, सा च कलौ युगे प्रशस्यते । एवं हि दीक्षा फलति । तथा हि तन्त्रसारवचनमुद्दिश्य ग्रन्थकारो वक्ति—

चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते[३] ॥ इति ।

---

१. शा० (२,२०) ।
२. शा० (२,३२) ।
३ शाक्तानं० (२, ६१ १।२) ।

## ग्रहणे दीक्षाविधानम्

रविसोमयोर्ग्रहणे शरत्काले महातीर्थे च दीक्षायां मुहूर्तविचारो नास्ति। सोमग्रहे विष्णुमन्त्रं, सूर्यग्रहे च शक्तिमन्त्रं जिविषुर्न दद्यात्। गुरोराज्ञया दीक्षायां मुहूर्तविधानन्नास्ति। यस्मिन्नहनि गुरुस्तुष्यति दीक्षादानञ्च वाञ्छति तद्दिनमतीवशोभनम्, तत्र दीक्षाग्रहणे महत्फलं भवति। अतस्तदा दीक्षा अवश्यं ग्राह्या। दीक्षितस्य मन्त्रस्य जपो गोपनेन कार्यं इति।

## अशुचावपि गुरोर्मन्त्रजपे न दोषः

महामन्त्रान् गुरुणा गृहीत्वा यावज्जीवं यत्नेन जपेत्। महागुरोः प्रयाणेऽपि तज्जपो न हेय इति। बाह्यपूजाक्रमेणैवान्तरपूजां सम्पाद्य 'जाग्रत्शयान उत्तिष्ठन् भुञ्जानो गमनेऽपि वा' इति रीत्या सर्वथा सर्वदैव मानसे जपे दोषो न विद्यते। किञ्चाशुचावपि शक्तेराराधनं न कथमपि त्याज्यम्। यतो ह्युक्तम्

तारायाश्चैव काल्याश्च त्रिपुरायाश्च सुव्रते।
सूतके मृतके चैव न त्यजेयुर्जपार्चनम्[1] ॥ इति।

## गुरोर्माहात्म्यम्

गुरुशब्दनिर्वचनम्—गुरुर्नाम ज्ञानापरपर्यायः। 'गुरुरुपायः[2]' इति शिवसूत्रनिर्देशात् सिद्धेरुपायो गुरुरेव। 'गृणाति अज्ञानमिति' गुरुरथवा 'गृणाति प्रकाशयति विश्वव्यवहारमिति' परिभाषया परमशिवभट्टारक एव परमगुरुपदेन व्यपदिश्यते। अतो मालिनीविजये उक्तम्—"रुद्रश्च रुद्रशक्तिश्च गुरुश्चेति त्रयं समम्[3]" इति। रुद्रयामले गुरुशब्दव्याख्यायाम्—

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः।
उकारः शम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः[4] ॥ इत्युक्तम्।

---

१. शाक्ता० (२।९७)।
२. शिवसूत्रे—(२।६)।
३. मालिनीविजये—(३।५६)।
४. शाक्ता० (२।२०)।

आनन्दशासनवचने तु 'यस्माद् दीक्षा मन्त्रशास्त्रं तत्त्वज्ञानं स वै गुरुः'[1] इत्युक्तम्। अत उक्तं शाक्तानन्दतरङ्गिण्याम्—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
अत एव महेशानि साक्षाद् ब्रह्ममयो गुरुः[2] ॥ इति।

## गुरोर्भेदः

तत्त्वतो गुरुरेक एव, व्यवहारतश्च विविधरूपेण व्यवह्रियते। तथा च सः 'परमगुरुर्मानवगुरु'रिति भेदाभ्यां द्विविध इति पं० व्रजवल्लभद्विवेदिन आमनन्ति[3]। परन्तत्रैव 'स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः' इति प्रामाण्येन मन्त्रवीर्यप्रकाशकत्वेन गुरौ महेश्वरत्वं सम्पद्यते, अन्यथा सिद्धिरेव न स्यात्। अतो गुरौ कल्पितभेदे सत्यपि वस्तुतोऽभेद एवेत्युक्तम्। श्रीमद्-ब्रह्मानन्दगिरिभिस्त्वत्र ग्रन्थे—गुरुः, परगुरुः, परापरगुरुरिति भेदैः गुरौ त्रयो भेदा आयान्तीति मन्यते। तदुक्तम्—

स्वगुरुः परमेशानि साक्षाद् ब्रह्म न संशयः॥
तत्पिता परापरगुरुः स्वयं विष्णुः क्षितौ सदा।
तत्पिता परापरगुरुर्महेश्वरसमः सदा[4] ॥ इति।

## गुरोराज्ञयैव सकलकर्म कुर्यात्

अत्रागमशास्त्रे गुरोः शक्तिपातस्य महिमा सर्वत्र महिता वर्तते। तां विना च किमपि कार्यं न भवति। यदि गुरुः प्रसन्नश्चेत्तदा सर्वाणि मनोऽभिलषितानि सिद्ध्यन्ति। तदुक्तं ग्रन्थे—'गृहीत्वाऽऽज्ञां गुरोः कुर्यात्तस्य सिद्धिर्विना जपात्[5]' इति। त्रिसन्ध्यं श्रीगुरोर्ध्यानं कुर्यात् यतश्च परमकारणं गुरुरेवेति। एवमेव स्वगुरोरेवार्चनं सर्वथा सिद्धिसाधकम्। यदि ग्रामे गुरोर्निवासस्तदा त्रिसन्ध्यं, क्रोशमात्रे प्रत्यहम्, अर्धयोजने पञ्चपर्वसु, एकयोजनमारभ्य द्वादशयोजनं यावद्दूरे स्थिते गुरौ तत्तत्संख्यागतेषु च मासेषु प्रणमेत्। यदि

१. आचार्यपं० व्रजवल्लभद्विवेदः—लुप्तागमसंग्रहे भाग २, भूमिकायां पृ० १६३।
२. शाक्तानं० (२।१३९)।
३. द्रष्टव्यम्—लुप्तागमसंग्रहे भाग २, पृ० १६३।
४. शाक्ता० (२।१३७, १३८)।
५. ,, (२।१०१)।

गुरुः सर्वथा दूरे तिष्ठति तदा उभयोरयनयोः काले (वत्सरे द्विवारम्) विधिवदभ्यर्च्य प्रणमेत् । गुरोः सर्वथा वशवर्ती सन् तदनुकूल एवाचरेत्। किञ्च—

गुरुशय्यासनं यानं पादुकोपानहौ तथा ।
स्नानोदकं तथाच्छायां लङ्घयेन्न कदाचन[1] ॥ इति ।

### गुरोरभावे कं पूजयेत्

गुरुवत् गुरुपुत्रेषु गुरुवत् तत्सुतेषु च ।
पूजयेत्प्रत्यहं भक्त्या[2]............... ॥ इति रीत्या गुरोरभावे गुरुपुत्रं तदभावे कन्यकां, तदभावे गुरुस्नुषां, तदभावे तद्गोत्रम्, गुरोर्गोत्राभावे मातुलगोत्रे मातामहं, मातुलं, मातुलानीं वा अर्चयेत् । गुरोरनर्चने साधकः पापभाग् भवति। गुरुगृहं शिष्याय काशीपुरी समं ज्ञेयम् । क्वचिच्छास्त्रेषु गुरोरुच्छिष्टभोजनमपि प्रशस्यम् । यदि गुरुमन्दिरं पर्णकुटीरमेव तदा तत्कैलाससदृशमित्याचार्या आमनन्ति । गुरुः साक्षाच्छिवः, तत्पत्नी देवी स्वरूपिणी, तत्पुत्रश्च गणेशसदृश इति मत्वा सदाचरणेन साधकः सद्यः सिद्धि विन्दति । गुरौ प्रसन्ने देवता प्रीतिमाप्नुयात् । एवं हि समासतो गुरुविषयकविचारा ग्रन्थेऽत्र निरूपिताः ।

## तृतीयोल्लासे

### योगनिर्णयः

'शब्दमात्रं हि देवताः' इति मृगेन्द्रागमवचनात् शब्दा एवाराधकेभ्यः तत्तद्भावपुरस्सरा रूपाकारतया परिणता देवानां रूपमाश्रित्य फलं प्रयच्छन्ति। शब्दात्मका हि मन्त्रमया देवास्तत्त्वतो चिन्मयत्वादद्वितीयत्वाच्च एक एव सन्त अप्युपासकानां भावनेच्छासाधनादिवशाच्च विविधकारणगुणधर्मयुक्ता भवन्ति । अत उक्तं ग्रन्थे—'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'ति । परमेश्वर एव सगुण-निर्गुण-सकल-निष्कल-गुणि-गुणातीतादिपरश्शतैः शब्दैरभिलाप्यः। ब्रह्मणो जन्म-कर्माणि भावीनि न सन्ति। भक्तवत्सलो भगवान् निराकारः सन्नपि अप्रमत्तानां भक्तानां स्नेहवशाद् आकारतामाधत्ते। मूर्तिकल्पनेयं भक्तानां मोक्षदानाय चतुर्वर्गफलप्रदानाय च भवति। यदि कस्यचित्साधकस्य निराकारे ब्रह्मणि चित्तस्थितिर्न भवति, तदा मूर्ताविव चित्तं निवेश्य आराधनं कार्यम्। तस्मिन् स्थूल-सूक्ष्मभेदेन

---

१. शा० (२।११८) ।
२. ,, (२।१५१) ।

द्विविधं ध्यानं निष्पद्येते। तत्र स्थूलरूपे विग्रहचिन्तनमायाति, सूक्ष्मे च मन्त्रमयस्य ध्यानं संपद्यते। देवानां शरीरस्योत्पत्तिः बीजाक्षराज्जायते। अतः सूक्ष्मरूपे तत्तद् बीजात्मकं मन्त्रं जप्त्वा साधको ब्रह्ममयतामाप्नोति। बीजाक्षरजपेनैव स्वेष्टसिद्धिराशु एव भवतीत्यत्र शङ्कालेशावसरो नास्ति। इमे च स्थूल-सूक्ष्मे द्वे रूपे एकस्यैवेश्वरस्याभेदेन तथैव स्तः, यथा एकस्यैव घृतस्य शीतोष्णयोगात् काठिन्यं मृदु च रूपं भवति। आत्मानं ब्रह्मणाभिन्नं मन्वन्तो जना इष्टेश्वरं प्राप्नुवन्ति, अन्यथा तेषां परिश्रमस्तु वृथैव ज्ञेयम्। समाधौ हृत्पद्मकर्णिकामध्ये मनोहरं सिंहं ध्यायेत्। ततश्च सिंहोपरि रक्तपद्मं ध्यात्वा तदुपरि शिवं परिकल्पयेत्। तस्योपरि महादेवी कामरूपिणी सती रमते। इष्टदेवताया यथा रूपं यथा च भूषण-वाहनादिकं तन्निखिलमेव स्वात्मनि भावयेत्। तत्र च स्वगुरुदेवतात्मनां त्रितयानाञ्च सर्वथा ऐक्यं सम्भावयेत्। एतेन तन्मयतया तत्तद्देवानां तान्त्रिकयोगनिष्पादनेन स्वेष्टसिद्धिर्भवति। एतेन हि 'अहं ब्रह्म', 'शिवोऽहम्', 'सोऽहम्' इत्यादिभावानां निष्पत्तिर्भवति। एवमाचरितेन काली-नीला-महादुर्गा-छिन्नमस्तका-वाग्वादिनी-अन्नपूर्णा-प्रत्यङ्गिरा - कामाख्या - बाला - मातङ्गी-विन्ध्यवासिनी चादयः सकला विद्याः पूर्णफलप्रदा भवन्ति। एता एव विद्या उमा-शक्तिर्लक्ष्मी-भारती-गिरिजा-अम्बिका-दुर्गा-भद्रकाली - चण्डी-माहेश्वरी-कौमारी-वैष्णवी-वाराही-ऐन्द्री-ब्राह्मी-विद्या-माया-प्रकृत्यादि पदैरभिलाप्या भवन्ति।

परमेश्वरस्य दशप्रमुखावतारेषु मत्स्य-कूर्म-वाराह-नृसिंह-वामन-परशुराम-राम-बलराम-बुद्ध-कल्की-अवताराः समायान्ति। देवेषु स्त्री-पुंनपुंसकभेदेन त्रयो भेदा वर्तन्ते। साधकैः स्वेष्टसिद्धये यथायथं देवाः पूज्या इति। नपुंसकरूपा देवा गृहस्थैरनुपास्याः। तत्र शिश्नाद्यवयवावच्छिन्नशरीरावच्छिन्नावताराः पुंरूपाः, यथा ब्रह्मविष्णुशिवादयः। स्तनकेशाद्यवयवावच्छिन्नशरीरावच्छिन्नावताराः स्त्रीरूपाः, उभयोरनवच्छिन्नाश्च देवा नपुंसकरूपाः। तथा च नपुंसको देव गृहस्थैरनुपास्य एव फलाजनकत्वात्। तथोक्तं ग्रन्थे—

'गृहस्थानां च सर्वे स्युर्ब्रह्म वै ब्रह्मचारिणाम्'[1] ॥ इति।

कस्यापि देवस्योपासकैरन्यो देवो न निन्दनीयः, निन्दिते सति सर्वेषां देवानां निन्दा सत्वात्तस्यापीष्टस्य निन्दा भवत्येव। अतो येषां केषामपि

१. शाक्तानन्दत० (३, ४६)।

देवानां निन्दा साधकैर्यत्नेन परिवर्जनीया। यथारुचिः प्रवृत्ति-निवृत्तिमार्गी स भवेत्, परं देव्याः कोमलान्तःकरणत्वाद् भुक्तिमुक्तीप्रदातृत्वाच्च पूजा प्रशस्या भवति। शिवविष्णुप्रभृतीनां उपासनासु कायक्लेशेन मुक्तिमात्रमेव फलं भवति। तथोक्तं ग्रन्थे—

कदाचित् कस्य मुक्तिः स्यात् कस्यचिद् भुक्तिरेव च।
एतस्या साधकस्याथ भुक्तिर्मुक्तिः करे स्थिता[1] ॥ इति।

## चतुर्थोल्लासे

### प्रातःकृत्यम्

'देवो भूत्वा देवं यजेत्' इति उपासनागतशास्त्रवचनानुरोधेन उपासनमनुष्ठानादिकार्यात्पूर्वं प्रातःकृत्यमावश्यकं भवति। अन्यथा सर्वानुष्ठानक्रिया विफला भवन्ति। तथोक्तम्—

प्रातः कृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत्।
तस्य पूजा च विफला शौचहीना यथा क्रिया[2] ॥ इति।

एवं हि ब्राह्मे मुहुर्ते उत्थायादौ गुरुं देवतञ्च स्वमूर्ध्नि सहस्रारे शिवबिन्दौ परिचिन्तयेत्। ब्राह्ममुहूर्तञ्च रात्रिशेषे द्वौ दण्डौ भवतः। एतेन १ घं० ४५ मि० पूर्वमुत्थातव्यम्। तदनु साम्बं परगुरुं शिवं ध्यायेत्। ततश्च मानसैः पञ्चभूतमयैस्तत्त्वैः स्वेष्टदेवं यजेत्। पुनश्च गुरुं सम्पूज्य गुरुमन्त्रं जपेत्, तदनु वाग्भवबीजं 'ॐ ऐं' इति (केषाञ्चिन्मते 'क्लीं' इति वा) जपेत्। यद्येवं साधको नाचरति, तदा तस्य कृत्यं वैफल्यं भजते। अन्ते अखण्डमण्डलाकारं ज्ञानपथप्रदर्शकं गुरुं नमेत्। अस्माकं प्रतिशरीरेषु सार्धतिस्रः कोटयो नाड्य वर्तन्ते। तासु मुख्यतमा दश नाड्यो भवन्ति। तास्वपि इडा-पिङ्गला-सुषुम्नेति तिस्र एव नाड्यो मुख्यतमा भवन्ति।

### नाडीनां षटचक्राणां च निरूपणम्

इडापिङ्गलासुषुम्नानाड्यः क्रमशश्चन्द्रसूर्याग्निरूपिण्यो भवन्ति। इडानाडी यया पूरकप्राणायामस्य कार्यं जायते, तथा सा शक्तिरूपिणी साक्षादमृतविग्रहा शुक्ला चन्द्ररूपिणी सती वामे (शरीरस्य वामभागे) स्थिता

१. शा० (३,५५)।
२. शा० (४,१)।

भवति। पिङ्गला पुंरूपिणी सूर्यविग्रहा दाडिमीकुसुमप्रभा शिवाख्या सती रेचकप्राणायामस्याधारभूता दक्षिणे (शरीरस्य दक्षिणभागे) स्थिता विद्यते। अग्निरूपिणी मूलदा ब्रह्मरन्ध्रगा सर्वतेजोमयी सर्वदेवमयी सती पूरकश्वासस्याधारभूता मृणालतन्तुरूपिणी सुषुम्नानाडी ब्रह्मनाडीं स्वक्रोडे आधाय कुण्डलिनीमाश्रित्य वामावर्तक्रमेण विषतन्तुवद् इडापिङ्गलयोः संवेष्ट्य षट्चक्रान् भेदयन्ती सहस्रारपर्यन्तं गच्छति। अत्रैव प्राणवायोः कुम्भकविधिना स्थितिर्भवति। कुण्डलिनी महाशक्तिस्तु सुषुम्नामार्गेण तत्तत्कमलभेदान् कुर्वती यातायातं सम्पादयति। कुण्डलिनीशक्तिश्च प्रसुप्तभुजगाकारा सार्धत्रिवलयान्विता परदेवताभिधाना सती विद्युल्लताकारा ब्रह्मरन्ध्रे शिवं संवेष्ट्य सर्वदा परितिष्ठति। षट्कमलचक्राणां मूलं द्वारं स्वाधीष्ठानाख्यं स्वमुखेनाच्छाद्य सा तिष्ठति। अतस्तस्या मूले मूलाधारः, लिङ्गे स्वाधिष्ठानम्, नाभौ मणिपूरः, हृदये अनाहतम्, कण्ठे विशुद्धाख्यम्, भ्रुवोर्मध्ये आज्ञाचक्रमवस्थितम्। ततश्च सप्तमभूमिकायां कैलासचक्रं सहस्राख्यचक्रापरनामकं स्थितं वरीवर्ति। तत्रापि त्रिवलयाकारा कुण्डलिनी कोटिविद्युत्समप्रभा महाशक्तिस्तिष्ठति। तद्धाम शिवशक्त्यात्मकं भुक्तिमुक्तिफलप्रदं बिन्दुरूपमस्ति। तत्र भवो बिन्दुरूपं तस्य भवनञ्च त्रिकोणात्मकं विलसति। एतस्यैव भवनस्य भवसम्बन्धित्वात् तत एव भुवनत्रयं जायते। अतः सर्वोपरि महेशानी बिन्दुशक्तिरेव तिष्ठति, तत एव बैन्दवी सृष्टिर्जायते।

इदमेव कमलचक्रं कैलासाख्यं शिवलोक इत्यपरनाम्ना तन्त्रागमराद्धान्ते उल्लापितं भवति। स च लोको दिव्यान्नपानैःसज्जितः सदासुखमयस्तिष्ठति। अतः साधकस्तत्रैव जिगमिषति। तस्मिन् हि पुरे नानावर्णदिव्यपुष्पफलैः चतुःशाखैश्चतुर्वेदैश्चान्वितो तदग्रोरत्नवेदिकः कल्पद्रुमस्तिष्ठति। तत्र चतुर्शाखोपरि नानारत्नोपशोभितो मन्दारपुष्परचितो नानागन्धानुमोदितो दिव्यः पर्यङ्को लसति। तत्रोपरि महादेवः सुप्रसन्नवदनः सदा तिष्ठति। तत्रैव सदाशिवं शुद्धस्फटिकसन्निभं बहुरत्नसमकीर्णं दीर्घबाहुं मनोहरं सततं स्मेरास्यं मुखप्रसन्ननयनं श्रवणे कुण्डलोपेतं नानारत्नहारोपशोभितं पद्मदलेक्षणं अष्टबाहुं त्रिनयनं पादयोर्नूपुरं रम्यं शब्दब्रह्ममयं वपुर्देवं ध्यायेत्। इदं हि सूक्ष्मध्यानम्। एवं हि स्थूलरूपस्य शिवस्यापि ध्यानं कुर्यात्।

तथा हि सहस्रदलपद्मे स्थितस्य शब्दरूपमयस्य शिवभट्टारकस्य किञ्चिदपि कृत्यं नास्ति। कुण्डलिनीशक्त्या च तत्तद् पद्मेषु नयोरेन [illegible]

र्नानारूपेण भानं भवति। एवं हि क्रमशो मूलाद् ब्रह्मा-रुद्र-विष्णु-ईश्वर-सदाशिव-परशिवाश्च षट्शिवास्तत्तद् पद्मेष्वत्रस्थिताः सन्ति। सप्तमे हि पद्मे शब्दमयः शिवभट्टारकस्तिष्ठति। शक्तयश्च तथैव षट्पद्मेषु क्रमशा मूलाधारे शाकिनी, स्वाधिष्ठाने काकिनी, मणिपूरे लाकिनी, अनाहते राकिणी, विशुद्धौ डाकिनी, आज्ञायां हाकिनो, ब्रह्मरन्ध्रे चाकिन्यश्च तिष्ठन्ति। एवं हि ऊर्ध्वरूपिणीं विश्वातीतां ज्ञानरूपिणीं सूक्ष्मां सृष्टिस्थिति-लयात्मिकां कुण्डलिनीं महाशक्तिं सर्वत्र सर्वतश्च ध्यायेत्। सैव कुण्डलिनी-महाशक्तिः सुषुम्नावर्त्मना तत्तद् चतुर्दशग्रन्थीन् षट्पद्मचक्राणि च सम्भेद्य ब्रह्मरन्ध्रं यावद् गच्छति। इमामेव सुषुम्नामाध्यमेन प्राणापानद्वारा संसाध्य साधको लक्ष्यं भेत्ति, जरामरणदुःखैस्त्तीर्य परमस्वरूपताञ्चाप्नोति। तथा हि सकलनिष्कल विषये उक्तम्—

> पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्त्तितः।
> रूपबिन्दुरिति ख्यातं रूपातीतं च निष्कलम्[1] ॥ इति।

एवं हि तत्त्वचिन्तनेन सहैव तत्र तत्र पद्मेषु गुरुमपि चिन्तयेत्, गुरु-शिवयोरैक्यात्। एवं कृते सति हृदयग्रन्थिर्भिद्यते सर्वसंशयाः छिद्यन्ते सिद्धिश्च लभ्यते। तथा सति अष्टदलपद्मेषु क्रमशो मूलाधारे भूमेराधारः, स्वाधिष्ठाने जलस्य, मणिपूरे तेजसः, हृदये मरुतः, विशुद्धौ आकाशस्य, आज्ञाचक्रे मनसश्च ध्यानं कुर्यात्। षट्चक्रपर्यन्तं शिवपुरं भवति, तदूर्ध्वं शक्तिपुरं च भवति। एवं हि सदा षोडशवर्षीयां नवयौवनसम्पन्नां सर्वाभरणभूषितां पीनोन्नतपयोधरां पूर्णचन्द्रनिभां नानालङ्कारभूषितां कुण्डलिनीं शिवेन सहितां ध्यात्वा तत्तद्पद्मेषु उपर्युक्तवाग्भवमन्त्रस्य जपं कुर्यात्। एवं हि ध्यात्वा जप्त्वा च साधकः साक्षात्ब्रह्ममयो भवति। एवमारोहावरोहक्रमेण द्वादशधा जप्त्वा साधकः सर्वपापेभ्यो विमुञ्चति मन्त्रसिद्धिश्च प्राप्नोति। एवमन्ते सर्वविधिना देवीं संतोष्य इदं भावयेत् यद् हे देवि! तव कृपया प्रेरितोऽहमद्यामुककर्म करिष्ये। एवं सर्वं कृत्यं शय्यात उत्थाय कृत्वा च प्रयतः सन् गृहान्निर्गत्य आचम्य दन्तधावनमाचरेत्।

आवश्यकं शौचमाचारं विधाय दन्तधावनस्य स्तुतिं कृत्वा ततो निर्वृत्य मुखप्रक्षालनादीनि कृत्वा स्नानं समाचरेत्। एवं हि चतुर्दशाक्षरैर्मन्त्रैः मुखादीन् क्षालयित्वा स्नानं कुर्यात्। स्नानेन हि श्रीपुष्ट्यारोग्यवर्द्धनं

---

१. शाक्ता० (४।८३)।

जायते। अतः स्नानं विधिना समाचरेत्। अरुणोदयेन पूर्वमेव साधकस्तीर्थे विमले जले तडागे वा वैदिकस्नानान्ते तान्त्रिकस्नानमाचरेत्। पुनः पयसि नाभिमात्रोदके निमज्य संकल्पं च कुर्यात्।

तन्त्रमन्त्रप्रकाशमतेनास्त्रेण मृदमाहृत्य त्रिभागञ्च तस्य विधाय पादनाभ्यन्तमनुलिप्य षडङ्गं च तां प्राणायामपुरस्सरं विन्यस्य तीर्थंजलानि 'ॐ गङ्गे चा'दिभिर्मन्त्रैरावाह्य कुम्भमुद्रया सप्तकृत्वा स्नात्वा आचम्य च शुद्धवाससी संधार्य पीठसंस्थितो भवेत्। यदि काम्यभावेन कश्चिद् यजनं कर्तव्यं विद्यते, तदोच्यते वस्त्रविषये—

मोक्षार्थी रक्तवस्त्रे भोगार्थी श्वेतवाससी[1] ॥ इत्युक्तम्।

ततश्च यथारुचियंथा च सम्प्रदायस्तिलकं कुर्यात्। यदि तिलकविहीनो भालस्तदा तस्योपचारास्तथैव वृथा भवन्ति, यथा वन्ध्यास्त्रियः सङ्गमः। ततश्च वैदिकीं तान्त्रिकीं वा सन्ध्यां यथारुचि कुर्यात्। सन्ध्याकार्यात्पूर्वं राजतं सौवर्णं वा अंगुलीयकं कुशनिर्मितां पवित्रीं वा धारयेत्।

तथा च पूर्वोत्तरमुखः सुधीराचमेत्। तदनु प्राणायाममाचरेत्। एवं हि इडा-सुषुम्ना-पिङ्गलामाध्यमेन पूरक-कुम्भक-रेचकविधिना प्राणं संयम्य प्राणायामं विधाय जले चक्रं विलिख्य परदेवतां संतर्पयेत्, ततश्च गुरुं तत्कुलं च संतर्पयेत्। तश्चैकैकेनाञ्जलिना पारिवारिकान् तर्पयेत्। तदनु सूर्यमन्त्रेण गायत्र्या वा अञ्जलित्रयं जलं दद्यात्। तान्त्रिक्यां संध्यायाञ्च 'ॐ ह्रीं हं सः' इति मन्त्रेण सूर्यायार्घ्यं निवेदयेत्। ततश्च गायत्र्याः सूर्यरूपायाः सम्यग् ध्यानं न्यासञ्च कुर्यात्। 'गायन्तं त्रायते यस्मात्तस्मादुच्यते, गायत्रीति'। एवं ह्यष्टोत्तरशतावृत्या गायत्रीं जपेत्। तथा कृते सति सर्वपापनिवृत्तिपूर्वकः साधकोऽनुष्ठाने पूजाधिकारवान् भवति। एवं शक्तिसन्ध्यां सम्पाद्य मौनी सन् आन्तरमनसा यागभूमौ प्रविशेत्। यदि सन्ध्या न क्रियते तदा गायत्र्या दशधा जप एव कार्यः। सन्ध्याविहीनायाञ्च दशायां दीक्षाफलं साधको न लभते। ब्राह्मणेन विधिपूर्विका वैदिकी तान्त्रिकी वा सन्ध्यां त्रिकालेषु कर्तव्या, शूद्रस्तु तन्त्रोक्तविधिनैव सन्ध्यां समाचरेत्। एवं कृते सति प्रातः कृत्यं सम्पद्यते, भवति च साधकः सर्वकर्मानुष्ठानेऽधिकारी।

१. शाक्ता० (४।१६२)।

## पञ्चमोल्लासे

### आसनम्

सर्वत्राराधने आसनमनिवार्यम् । यदि सलिलेऽपि केषाञ्चिद्देवानामाराधनं विधीयते, तदा तदप्यासनपूर्वकमेव कर्तव्यं, नोत्थितः; यदि तत्रासनं न सम्भवति, तदा मनसैवासनं तत्र कल्पयेत्, ततश्च तदुपर्यधिष्टायैवार्चनं कर्तव्यम् ।

### विभिन्नासनानां फलानि

कुश-कम्बल-वस्त्र-सिंह-व्याघ्र-मृगचर्म-शरपत्र-तालपत्राद्यासनानि भवितव्यानि । तत्र कृष्णाजिने ज्ञानसिद्धिः, व्याघ्रचर्मणि सिद्धिमुक्ती च जायेते । कृष्णाजिने गृहस्थानां अधिकारो नास्ति । तत्र हि यतिर्वानप्रस्थो ब्रह्मचारी भिक्षुको वोपविश्य सिद्धिं विन्दति। वस्त्रासने व्याधिनाशः, कम्बलासने च दुःखनाशो भवति । निर्वस्त्रासने जपध्यानतपसां हानिर्भवति । कुशासने आयुर्वर्द्धते। व्याघ्रचर्मणि मोक्षः, मृगचर्मणि पुत्रः, कम्बलासने उत्तमा सिद्धिर्दुःखमोचनं च भवति । श्वेतकम्बले शान्तिः, सर्वार्थान् रक्तकम्बले साधकः प्राप्नोति । पौष्टिककर्मणि कौषेयवस्त्रमिच्छेत् । द्विहस्ततो न दीर्घं सार्द्धहस्तान्न विस्तृतम् कम्बलासनं त्रिपुरापूजने शस्तं भवति । पूजासनं नातिनीचं नाति चोच्छ्रितं कुर्यात्। यदि आसनरहितो धरण्यामेवासीनः पूजां कुर्यात्तदा दुःखवृद्धिः स्यात् । काष्ठासने दौर्भाग्यं, आम्रनिम्बकदम्बासनेषु च सर्वनाशो भवति। बकुल-किंशुकपनसेषु चासनेषु श्रियो नाशः, वंश-इष्टिका-प्रस्तर-भूमि-तृण-बिल्वासनानि दारिद्र्यव्याधिदुःखदानि भवन्ति; किन्तु गाम्भीरीनिर्मितमासनं सर्वथा सर्वविधक्षेमकरं भवति । काष्ठासन तु चतुर्विंशत्यङ्गुलाद्दीर्घं षोडशाङ्गुलाद् विस्तीर्णं चतुरङ्गुलमुच्छ्रायं च कार्यम् ।

महामायायाः कामाख्यायाश्च प्रपूजने कम्बलं, चर्मजं वस्त्रजञ्चासनं शस्तं भवति। त्रिपुरायाः, रुद्रस्य, विष्णोश्च प्रीतये कुशासनं प्रशस्तं भवति । तृणासने यशो हानिः, चित्तविभ्रमश्च पल्लवे जायते । एवं हि यथेष्टासनो न भवेत् । शास्त्रोक्तविधिना आसने कृते पूजा फलवती ज्ञेया। एवञ्च वंशाश्मधरणीदारुतृणपल्लवनिर्मितान्यासनानि धीमता न ग्राह्यानि, यतो हि तानि दारिद्र्यव्याधिदुःखदानि भवन्ति ।

यदि कश्चित् काष्ठासने उपविश्य पूजामाचरति, तदा स रोगी वंशे वंशक्षयश्च भवति । शैलासने वाग्रोधः मतिविभ्रमश्च पल्लवे ज्ञेयः । धरण्यामुपविश्य पूजया शोकावाप्तिः काष्ठे च व्यर्थश्रमो भवेत् ।

### पञ्चासनं महानिशानिरूपणञ्च

पूजासनानि पञ्चसंख्याकानि पद्मासन-स्वस्तिकासन-भद्रासन-वज्रासन-वीरासनानि। नित्यं-नैमित्तिकं-काम्यञ्चेति त्रिविधं पूजनं कथितम्। रात्रौ पूजायां सिद्धिः। रात्रौ महानिशायां शाक्तिको जप आशु एव फलदः। दिवापूजनं यथोक्तं फलदम्, परं महानिशापूजनन्तु लक्षगुणितमाख्यातम्। महानिशा हि समयातन्त्रानुसारं अर्द्धरात्रात्परं मुहूर्तद्वयं भवति। अन्य तन्त्रेषु च प्रथमप्रहरस्यान्तरात्तृतीयप्रहरावधौ निशा महानिशेत्युच्यते। पशोरग्रे कृता पूजा निष्फला, स्त्रीसमीपे च कृता सा कामरूपाच्छतगुणा भवतीति।

## षष्ठोल्लासे

### अन्तर्यागविधिः

तन्त्रसाधनायामान्तरपूजाया जपस्य च महन्महत्त्वं वर्तते। तत्र हि यः खलु अन्तर्यागमपहृत्य बहिर्यागमाचरति, स करस्थं कौस्तुभं त्यक्त्वा काचतृष्णया भ्रमते। अन्तर्यागप्रसङ्गे हि हृदये बहिस्थां देवतां हृत्पटले उपवेश्य यथाभूषणवाहनां पूजयेत्। आदौ प्राङ्मुख उदङ्मुखो वा सुखासने समाविष्टः स्वहृदये उत्तमं सुधासागरं ध्यायेत्। तत्र हि हृदये सुवर्णबालुकामयं मन्दारपारिजाताद्यैः सुपुष्पितैः कल्पवृक्षैर्दिव्यैर्नित्यपुष्पफलद्रुमैश्चालङ्कृतं नानासुगन्धकुसुमगन्धामोदितदिङ्मुखम्, कूजत्कोकिलभृङ्गसङ्कुलं सर्वतोऽलङ्कृत-काञ्चनपङ्कज-मौक्तिककुसुमस्रग्भिर्दुकूलैः स्वर्णतोमरैश्च लसत् रत्नद्वीपं कल्पयेत्। तन्मध्ये चतुःशाखश्चतुर्वेदं गुणत्रयसमन्वितं नानापुष्पविराजितं कोकिलभ्रमरादिभिर्बहुपक्षिभिः शोभितं अधोरत्नवेदिकं कल्पवृक्षं ध्यात्वा तत्रोपर्यतीव विस्तृतं उद्यदादित्यसंकाशं रत्नसोपानमण्डितं ध्वजावलीसमाकीर्णं चतुर्द्वारसमन्वितं रत्नप्राकारमण्डितं स्वस्वस्थानस्थितैर्लोकपालैरधिष्ठितं सिद्धचारणगन्धर्वविद्याधरमहोरगैः संसेवितं क्रीडद्भिः किन्नरैरप्सरोभिश्च परिदिङ्मुखम् अमरस्त्रीभिर्नृत्यवाद्यैश्च निरतं किङ्किणीजालसन्नद्धं पताकाभिरलङ्कृतं महामाणिक्यवैदूर्यरत्नचामरभूषितं लम्बमानैः स्थूलमुक्ताफलोद्दामैरलङ्कृतं चन्दनागुरुकस्तूरीमृगमदविलेपितञ्च भवनं ध्यात्वा तत्र मध्ये उद्यदर्केन्दुकिरणैश्चतुष्कोणप्रशोभितां महामाणिक्यवेदिकां कल्पयेत्। तत्र हि ब्रह्मविष्णुशिवात्मकं सिंहासनं मनसा ध्यायेत्। तस्मिन् हि सिंहासने प्रसूनतूलिकां न्यस्य पीठपूजनञ्च मनसा परिकल्प्य संकल्पोक्तक्रमेण पद्मासने सकलजगदाधारमयीं परमेश्वरीं परिचिन्तयेत्।

## मानसपूजा

एवं मनसा सर्वं प्रकल्प्य भगवत्यै श्रीरत्नपादुके दत्त्वा तां स्नानमन्दिरे च नीत्वा सिंहासनोपविष्टायाञ्च तस्यां करोद्वर्तनं कुर्यात् कर्पूरागुरुकस्तूरिकारोचनाकुङ्कुममृगमदादिभिर्नानागन्धसमन्वितैश्च करोद्वर्तनकैर्विनिवृत्य देव्याः शिरसि गन्धतैलं विलेपयेत्। ततश्च स्वर्णकुम्भशतसहस्रैरानीतैः सर्वतोर्थमयैर्जलैःस्नानं प्रकल्प्य तदनु दुकूलैर्मार्जितं गात्रं दुकूले च परिधे धारिते कङ्कत्या केशान् संस्कृत्य विधिवद् वेणीबन्धनं विधाय पट्टगुच्छं दिव्य-पुष्पगुच्छं वा केशपाशे संयोज्य नानारत्नोपशोभिताया दिव्यवस्त्रावृतायाश्च देव्या ललाटे तिलकं केशमध्यगं सिन्दूरं च प्रकल्पयेत्। ततश्च नागेन्द्रदन्त-रचितं मनोहरं शङ्खं, कङ्कणं, कटकं, नानारत्नोपशोभितं हस्तपादाङ्गु-लीयकम्, हस्तकेयूरकं, पादयोर्नुपूरं, नासाग्रे गजमौक्तिकं च दद्यात्। एवमेव यथाशक्त्या दिव्यानि पुष्पमाल्यादीन्याभूषणानि च मानसानि देव्यै दद्यात्। ततश्च सर्वाङ्गे गन्धचन्दनसिल्लकैश्चन्दनैर्विलेपनं कुर्यात्। हृदये काञ्च-नाञ्चितकञ्चूलिकां भूषयेत्। एवमेव भूतशुद्ध्यादिकं विधाय न्यासादीन् विरच्य समाहितेन चेतसा षोडशोपचारैः सम्पूज्य देव्या ध्यानं कुर्यात्। तदनु रत्नसिंहासनं समर्प्य स्वागतं कुशलञ्च वदेत्। ततश्च पादयोः पाद्यं, शिरस्यर्घ्यं, मुखपङ्कजे परामृतत्रिधाऽऽचमनीयं तथैव मधुपर्कं दद्यात्। ततो हेमपात्रपरिवेशितं कपिलाघृतसंयुक्तं व्यञ्जनसंयुक्तं च परमान्नं, मांसशैलं, मत्स्यराशिं, फलानि, भक्ष्य-भोज्य-लेह्य-चर्व्य-चोष्यांश्च दिव्यपदार्थान् यथा-विधिः समर्प्य सुधाम्बुधिं च निवेद्य सकर्पूरमेलालवङ्गादियुतं ताम्बूलं मानसं परितः प्रकल्प्य निवेदयेत्।

एतदन्ते मानसेनैव विधिना देव्या आवरणान् सम्पूज्य मनसैवाभीष्ट-मन्त्रं यथाशक्तिकं जपेत्। ततश्च देव्यै मोदकं समर्प्य तस्यै शयनाय पर्यङ्कं कल्पयेत्। ननु देव्याः पर्यङ्कः कीदृशः स्यादित्याकाङ्क्षायामुच्यते—

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एतदेव महादेव्याः पर्यङ्कं समुदाहृतम्[1] ॥ इति।

पर्यङ्को हि देव्याः पयः फेननिभो नानापुष्पोपशोभितः स्यात्, यत्र परमेश्वरी देवी स्वपिति। तत्रैव शयानां नानासुखविलासिनीं देवीं ध्यात्वा साधको नृत्य-गीत-वाद्यैश्च तां तोषयेत्।

---

१. शाक्ता० (६-३८)।

## मानसो होमः

एतदनन्तरं साधको मानसपूजायाः सार्थक्याय होमं प्रकुर्वीत । होमश्चायं मानस एव स्यात् । हृदि ह्याधारमये अन्तरात्म-परमात्म-ज्ञानात्ममये च चतुरस्त्रे आनन्दमेखलामये बिन्दुत्रिवलयाङ्किते अर्द्धमात्रे योनिरूपे च चित्कुण्डे इडा-पिङ्गला-सुषुम्ना माध्यमेन यथाविधिर्होमं कुर्यात् । तत्र हि साधकेन्द्रो धर्माधर्मविव हविरितिरूपेणावधार्य ज्ञानप्रदीपिते नाभिचैतन्य-रूपाग्नौ नित्यमक्षवृत्तिर्जुहोम्यहमिति संकल्प्य मनसा स्रुचा मूलमन्त्रं समुच्चार्य वह्निजायान्तमन्त्रेण प्रथमाहुतिं दद्यात्, द्वितीयाऽऽहुतिं च धर्माधर्मौ हविरूपेण अवधार्य प्रदीपितेऽऽत्माग्नौ मनसा स्रुचा सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जु-होम्यहमिति संकल्प्य मूलमन्त्र समुच्चार्य वह्निजायान्तमन्त्रेण प्रदद्यात् । एवं हि तृतीयाऽऽहुतिं च प्रकाशाकाशहस्ताभ्यां आत्मना स्रुचा चावलम्ब्य ज्ञानप्रदीपितेऽग्नौ नित्यमक्षवृत्तिर्जुहोम्यहमिति संकल्प्य मूलमन्त्रं समुच्चार्य वह्निजायान्तमन्त्रेणाचरेत् ।

एवमेव मायान्धकारनाशिने आन्तरप्रकाशे चोत्पन्ने अद्भुतमरीचि-विकासभूमौ संविदग्नौ मूलमन्त्रं समुच्चार्य वसुधादिशि वावसाने विश्वं जुहोमीत्यन्तेन चतुर्थाहुतिं प्रकल्प्य तदनु पूर्णाहुतिप्रकल्पनं कुर्यात् । तत्र हि इदं पात्रभरितं महत्तापपरामृतं पात्रं पूर्णाहुतिमयेऽग्नौ मूलमन्त्रं समुच्चार्य वह्निजायान्तमन्त्रेण पूर्णहोमं जुहोमिति संकल्पेन पूर्णाहुतिं प्रकल्प्य पञ्चाहुतीन् दद्यात् ।

इत्थं ह्यन्तर्यजनं विधाय साधकेन्द्रो साक्षाद् ब्रह्ममयो भवति । शिवः, योगिनः, मुनयश्चैवमेव परमेश्वरीं सदा पूजयन्ति ।

## गृहस्थानां बाह्यपूजापोच्यते

गृहस्थाः संसारयात्रायां मूलरूपेण वर्तमानाः संततिद्वाराऽनवच्छिन्नाञ्च सर्वाश्रम-वर्णव्यवस्थां लोकयात्रां च परिचालयन्ति । अतस्तेषामखिलकार्य-जातं मानसमेव न स्यात्, बाह्यमपि तत् स्याल्लोकपरम्पराप्रतिष्ठापनायेति कृत्वोच्यते मूले—

केवलं मानसेनैव नैव सिद्धो भवेद् गृही ।
स बाह्येन तु तत्त्वेन सिद्धो भवति तद् गृही[1] ॥ इति ।

१. शाक्ता०—(६, ५६) ।

भूतशुद्धितन्त्रेऽपि आन्तरपूजया बाह्यपूजा कोटिगुणफलप्रदेति प्रतिपाद्यापि उपचारादिभिर्गृहस्थैर्वा बाह्यपूजा कर्तव्येवेति निर्दिष्टम् । तेषामान्तरपूजनानन्तरं बाह्यपूजा प्रशस्या । गान्धर्वेऽपि तन्त्रे तथैव । एवमेवान्तरपूजा सदा तत्त्वज्ञैः कार्येति ।

## सप्तमोल्लासे

### नित्यपूजा

नित्यपूजायां साधकेन्द्रः स्नानाद्यन्ते पूजागृहे प्रविश्योत्तरमुखः पादप्रक्षालनञ्च विधाय[1] प्रणवमुच्चार्य स्वविद्यां संस्मरेत् । तदनु यज्ञस्थानशोधनमाचरेत् । तत्र धर्मबीजेन शोधनम्, अस्त्रमन्त्रेण प्रोक्षणं च कृत्वा मधुकैटभयोर्मेद एव मेदिनी, सा सुरपूजासु सर्वदा शुद्धा; तथापि ज्ञाताज्ञातदोषपरिशमनाय यज्ञभूमौ कालबीजं विलिख्य हृदाम्बुजे परमेश्वरीं ध्यायन् पञ्चासनेषु किमप्यासनेनासने उपविशेत् । ततो पूजाद्रव्याणि पुरतः स्थाप्य निरीक्ष्य च तानि स्वदक्षिणे स्थापनीयानि । अर्घ्यपात्रं तैलदीपञ्च वामे निधाय पुरो भागे गन्धपुष्पाणि भूषणादीनि च स्वाभीष्टदेवतायै निवेदयेत् । करयोः क्षालनार्थाय एकस्मिन् पात्रे जलं पृष्ठे रक्षेत् । एवमेव स्वशक्त्यनुसारेण यत्नतः सर्वं सम्पाद्य यावत्परामावाहयेत्, तावत्सर्वमाच्छादयेत् । निराच्छादनके तद् वस्तु राक्षसा गृह्णन्ति ।

### शान्तिकः कुम्भस्तस्य प्रमाणञ्च

पूजायां प्राथम्येन कुम्भस्यावश्यकता भवति । स हि कुम्भः कीदृशः स्यादित्युच्यते मूले—

हैमं रौप्यं तथा ताम्रं मार्त्तिकं वा स्वशक्तितः ।
वित्तशाठ्यं न कर्तव्यं कृते निष्फलमाप्नुयात्[2] ।। इति ।

### कुम्भप्रमाणम्

कुम्भस्य विस्तारः षट्त्रिंशदङ्गुलात्मकः स्यात् । अथवा षोडशद्वादशाङ्गुलो वा स्यान्न ततो न्यूनः । सर्वप्रामाण्येन च दैर्घ्यं विंशत्यङ्गुलं, ग्रीवा चतुरङ्गुलं, अर्द्धाङ्गुलं कण्ठः, अष्टाङ्गुलं मुखमित्येवं दृढं समतलञ्च

---

१. दिवा पूर्वमुखो भूत्वा रात्रौ कुर्यादुदङ्मुखः ।
देवीपूजां शिवस्यैव सदा कुर्यादुदङ्मुखः ।। (शाक्ता० ७, ४) ।

२. शाक्ता० (७, २३) ।

घटमानं विधाय स्वर्णताम्रादिनिर्मितं तदैशान्यामादौ स्थापयेत् । ततश्चास्त्रा-म्बुभिः प्रोक्षणीपात्रं सम्प्रोक्ष्य स्वदक्षिणे च संस्थाप्य शुद्धोदकेन तं संपूज्य मूलमन्त्रं संजप्य तेन पात्रजलेन सकलान् पूजासम्भारान् प्रोक्षयेत् ।

अधुना गन्धर्वतन्त्रानुसारेण ग्रन्थे आधारस्थजलशोधनमुच्यते । तत्र हि वामतो जलेन पूजामण्डलं विधाय वषट्काराद्यमिति मन्त्रेण मण्डले घटं स्थापयेत् । एवमेव चन्द्र-सूर्याग्नि-आनन्दभैरव-आनन्दभैरवीप्रभृतयो देवा मण्डले आवाह्य पूज्याः । घटतोयेषु अर्घ्यपात्रेषु च यद् दूषणं स्यात् तद्यत्नेन परिमार्जयेत् । अर्घ्यपात्रमादौ अस्त्रेण प्रक्षाल्य हृन्मन्त्रेण तत्र जलं पूरयेत् तं च जलं प्रणवेन दशधाभिमन्त्रयेत् । एतद्धि सामान्यार्घ्यं निगदितम् । फडिति मन्त्रेण मण्डलस्य चतुर्द्वारान् संप्रोक्ष्य आवाहितान् देवान् बीजमन्त्रेणाभ्यर्चयेत् । तत्र 'गां वां क्षां यां' च बीजाक्षराण्युक्तानि । तत्र चतुर्द्वारेषु क्रमशो गणेशबटुकक्षेत्रपालयोगिनीश्च यजेत् । गणेशादीननादृत्य कापि पूजा न सिद्धयति । ततश्चोत्तरोत्तरक्रमेण द्वारपालान् ब्राह्मणान् वास्तु-देवांश्च मण्डलमध्येऽऽवाह्य पूजयेत् । ततश्च देशिकेन्द्रो गुरुर्वाक्कायचित्तभूमीः 'ॐ पवित्रवज्रभूमे हुं फट् स्वाहे'ति मन्त्रेण सम्यग् विशोधयेत् । ततश्च देशिकेन्द्रो दिव्यदृष्ट्यावलोकनैरूर्ध्वोर्ध्वमप्यधस्ताद् अन्तरिक्षगानपि दिव्यान् विघ्नान् त्रिभिः पार्ष्णिघातैः 'ॐ हुं फट् स्वाहे'ति मन्त्रेण निवारयेत् । ननु, का दिव्यदृष्टिरित्याकांक्षायामुच्यते—

'अनिमेषचक्षुषा दृष्टिर्दिव्यदृष्टिः प्रकीर्त्तिता'[1] ॥ इति ।

ततश्च करशुद्धिप्रसङ्गे प्रागुदीचीमुखः सुपुष्पैः करं मार्जयेत् । मूलमन्त्र-ञ्चोच्चार्य तत्पुष्पं वामतस्त्यजेत् । एतेन 'ॐ ऐं रः अस्त्राय फडि'ति मन्त्रेण करशुद्धिर्भवति । एवमेव कामबीजेन करयो रक्तपुष्पमर्दनं वाग्भवबीजमन्त्रेण गन्धग्रहणं ऐशान्यां दिशि शिवबीजद्वारा तत् त्यागेन करशुद्धिं कुर्यात् । एवं करशुद्धिं निर्वर्त्य तालत्रयं कुर्यात् । ततश्च देशिक ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धनं कुर्यात् । तदनु विघ्नोत्सारणपुरस्सरं गुरुं परगुरुं परापरगुरुत्रयञ्च वामभागे प्रणमेत्, गणेशं देवीञ्च नमेत् । एवमेव भूतशुद्धिं, ऋषिन्यासं, पीठन्यासं, कराङ्गन्यासं, मातृकान्यासं, विद्यादिन्यासञ्च विधाय 'देवो भूत्वा देवं यजेदि'ति न्यायेन सर्वं समाहितेन कुर्यात् । यादृशानां देवतानां विष्णु-रुद्र-शक्ति-सूर्य-गणेशादीनां चार्चनं कर्तव्यं स्यात्तादृगेव सर्वं न्यासादिकमाचरितव्यम्, येन

१. शाक्ता० (७, ३७, ११२) ।

तद्रूपतावाप्तिः स्यात्, अन्यथा सिद्धिर्न स्यात् । प्रचुरैश्च प्राणायाम-ध्यान-न्यासादिभिः फलेष्वपि प्रचुरता समायाति ।

### पञ्चभूतशुद्धिः

पञ्चभूतात्मकोऽयं वपुः सदा शुद्धं भवति परन्तत्र मलमूत्रादिवशादशुद्धिरायाति । अतस्तस्य वाय्वग्निशलिलाक्षरैर्विशुद्धिर्विधेयम् । सर्वशुद्धिर्हि प्राणायामेन भवति । शरीराकारभूतानां मलानाञ्चाव्यक्तब्रह्मसंस्पर्शाद् भूतशुद्धिरियं संपद्यते ।

### न्यासाः

उपर्युक्तक्रमेण भूतशुद्धिं निर्वर्त्य अर्घ्यादीनां स्थापनं कुर्यात् । ततो मातृकान्यासं,मन्त्रन्यासं,प्राणायामं, करन्यासं, ऋषिन्यासादिकं विन्यस्य आत्मानं भगवत्याः स्वरूपमिति मत्वा त्रिःप्राणायामं कुर्यात् । विधानतश्च यथान्यासं साधकोत्तमोऽर्घ्यं संस्थाप्य त्रिकोण-षट्कोण-वृत्त-चतुरस्राणि चाधारस्थानानि निर्माय 'मं वह्निमण्डलाय दशकलात्मने' इति मन्त्रेण पुष्पैरभ्यर्च्य तत्रैवार्घ्यपात्रं स्थापयेत् । तमर्घ्यपात्रं 'ॐसोममण्डलाय षोडशकलात्मने नमः' इति मन्त्रेण विमलेन जलेन मूलेनापूर्य तं च पूज्य साधकसत्तमः षडङ्गानि तत्र न्यसेत् । तस्मिन् पात्रे अक्षतपुष्पदूर्वादीनि विनिःक्षिप्य स्पृष्ट्वा मूलमन्त्रं जप्त्वा च तत्राङ्गमन्त्रं प्रविन्यसेत्, तं च हृन्मत्रेणाभिसंपूज्य मत्स्यमुद्रया अर्घ्यपात्रं छादयेच्च । तं जलमस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठयेत् । धेनुमुद्रां प्रदर्श्य चक्रमुद्रया च बोधयेत् । इदं हि जलममृतमिति विचिन्त्य तत्र द्रव्यसंप्रोक्षणं चरेत् । शिवपूजायां गृहिणो दूर्वाङ्कुरान्न न्यसेयुः । एवञ्च द्रव्याणि यत्नेन संस्कृत्य पश्चात्तन्त्रोदितान् न्यासानाचरेत् । तत्र मातृकान्यासः परापराभेदेन द्विधा भवति । तच्च मूलग्रन्थादेवावगन्तव्यम् ।

तन्त्रागमराद्धान्ते मातृकान्यासोऽत्यन्तः सूक्ष्मतरः कल्याणप्रदश्च कार्यः । अतस्तद्विषये महता यत्नेन भवितव्यम् । यतो ह्यत्र मातृका एव सर्वस्वभूता निगदिता । मातृकान्यासी साधकोत्तमः श्रीसदाशिवस्वरूप एव भवति ।

मातृकान्यासं ग्रन्थोक्तविधानेन सम्पाद्य अनुलोमविलोमक्रमेण पुनः पुनः प्राणायामं कुर्यात् । प्राणायामं विना पूजने साधकोऽधिकारी न भवति । ततश्च ऋषिन्यासाः, अङ्गन्यासादि नित्यन्यासाः सम्पादनीयाः ।

एतदनन्तरं षोढान्यासानाचरेत्। षोढान्यासी हि साक्षाच्छिव एव भवति। एवं षोढान्यासान् विन्यस्य देव्या ध्यानं (स्वाभीष्टदेवस्य देव्या वा ध्यानं) समाचरेत्। ध्यात्वा च देवीमावाह्य आवाहनादिपञ्चमुद्राः प्रदर्शयेत्। तथा च—

शालग्रामे मणौ चाप्सु वह्नौ मनसि पुष्पके।
एषु चावाहनं नास्ति अत्र देवाः सदा स्थिताः[1] ॥ इत्युक्तम्।

एवं स्व-स्वकल्पोक्तक्रमेण तत्तद्देवान् सम्पूज्य पञ्चाञ्जलीन् प्रसूनैर्दत्वा देव्याः पदाम्बुजे त्रिभिः पुष्पाञ्जलीन् क्षिपेत्। देवपूजायामिदं हि विशेषतोऽवधेयं यत्तेषां पूजा नैकहस्तेन न वा नखप्रदर्शनपुरस्सरेण[2] कार्येति।

एतदन्ते श्रीदेव्याः पादुकापूजनं, तर्पणं, षडङ्गपूजनञ्च, मूलतः प्रारभ्य वायव्यदिशिपर्यन्तं गुरुपङ्क्ते पूजनं, सर्वेषां देवानां स्व-स्वस्थानस्थितानां पूजनं हस्तलाचनवर्जितञ्च कृत्वा आवरणं पूजयेत्। एवं स्वपूजनैर्दिव्यगन्ध-पुष्पाक्षतैर्देवीं सन्तोष्य विशेषार्घ्येण संजर्प्य कामकलां देहे ध्यात्वा मन्त्रार्थस्मृतिपूर्वकं सहस्रादि विद्याजपं चरेत्। त्रिंशता न्यूनं जपः साधकेन नैव कार्यः। तथा चोक्तं ग्रन्थे—

सहस्रं वा शतं वापि दश वापि जपं तथा।
कुर्यादस्याधिकं तेषामिति जपविधिः स्मृतः[3] ॥ इति।

तदनु गन्धपुष्पार्घ्यवारिभिः तेजोमयं जपं देव्या वामहस्ते 'गुह्याति' मन्त्रेण निवेदयेत्। ततश्च दशवारं दीपेन निराजनं कुर्यात्। प्रदक्षिणां विधाय दण्डवद् भुवि निपतेत् आत्मार्पणञ्च कुर्यात्, मदर्पणं देव्या गृहीतमिति भावयेच्च। अन्तेऽपराधक्षमायाचनं कुर्यात्, संहारमुद्रया विसर्जनञ्च कुर्यात्। आराधनस्य माल्यादीनि गन्धानुलेपनानि च यथाङ्गे धारयेत्। नैवेद्यादिकं भक्तिमद्भ्यो वितीर्य स्वयञ्चाश्नीयात्। एवं ह्याभ्यन्तर-बाह्यक्रमेणोभयोः पूजयोरत्र विचारः समजनि। नूनं ह्यत्र ध्येयं यत् कर्मयोगं विना ज्ञानयोगं न सिद्ध्यति, उभयोरभावे किमपि न सिद्ध्यति। तस्मान्मानवजीवने ज्ञानकर्मणो-रुभयो आवश्यकता वरीवर्ति इति।

---

१. शाक्ता० (७, १३३)।
२. शा० (७, १३५)।
३. ,, (७, १६२)।

## अष्टमोल्लासे

### मालाविधानम्

'मल धारणे' (भ्वा० आ० से०) इत्यस्माद्धातोर्मां लातीति मालाशब्दो निष्पद्यते। अतो 'माला तु पङ्क्तौ पुष्पादिदामनी'त्यादयः कोशव्यवहारा अपि संगच्छन्ते। साधनाशास्त्रे ह्यत्र तन्त्रागमे मालां विना किमपि कार्यं न सिद्ध्यति। अतो मालाविधानविषये अष्टमोल्लासविषयमादाय विविच्यते किञ्चिद्—

तन्त्रागमे हि शास्त्रे जपार्थं माला आवश्यकी। अतो नित्यो जपः कर-मालया सत्येऽपि काम्यकर्मणि माला प्रशस्यते। तत्रापि मालाया अभावे कर-मालया कार्यं निर्वाह्यम्; परं यदि माला चेल्लभ्यते तदा तद्युक्तम्।

### करमालाविधानम्

मालाया अभावे करमालाया विधानं तन्त्रशास्त्रे प्रशस्यते। तद्धि अनामायास्त्रयंपर्वं कनिष्ठायाश्च त्रयं पर्व, मध्यमायास्त्रयं पर्व, तर्जन्याश्च मूलपर्वं इत्येवं प्रादक्षिण्यक्रमेण दशसु पर्वसु जपेन करमाला संगच्छते। अत्र तर्जन्या मूलाग्रं द्वयं मेरुरिति मत्वा तस्योल्लङ्घनं न कार्यम्। इदन्तु शक्तिमालाया विधानम्। तर्जन्या अग्रे तथा तर्जन्या मध्ये च पर्वणी यो जपेत्, तस्य आयु-र्विद्यायशोबलानि नश्यन्ति। अयं क्रमः यामलतन्त्रोक्तः।

श्रीविद्यायाः क्रमेण च अनामामध्यमयोश्च द्वयं द्वयं मूलाग्रं, कनिष्ठाया-स्तर्जन्याश्च त्रयं त्रयं पर्वं सम्मिलय गणनायां दशसंख्याकानि पर्वाणि भवन्ति। तान्येव प्रादक्षिण्यक्रमेण संजप्येष्टसाधकानि भवन्ति। अत्रानामाया मध्यमाया-श्चाग्रपर्वणी मेरुसंज्ञके भवतः। जपकर्मणि तयोर्लङ्घनेन उपर्युक्ता एव दोषाः समापतन्ति।

### करमालाजपे साधकस्य स्थितिः

करमालाजपे दक्षिणहस्तं हृदये आरोप्य कराङ्गुलीस्तिर्यङ् कृत्वा वाससाऽऽच्छाद्य जपः कार्यः। कदाचिदाकुञ्चितेऽपि करतले अङ्गुलीं न वियुञ्जीत। अङ्गुलीनां वियोगाच्छिद्रे सति जपो निष्फलायते। एवमेवाङ्-गुल्यग्रेषु, मेरुलङ्घनेषु, पर्वसन्धिषु च यज्जप्तम्, तन्निष्फलं भवति। एवमेव करमालाविधानमुक्तं ग्रन्थे।

## विभिन्नमालानां फलानि विधानानि च

अष्टोत्तरशतमणिभिर्निर्मिता मालिका इह राज्यं प्रदायान्ते मोक्षसाधिका। पञ्चविंशतिभिर्मणिभिर्निर्मिता सा मोक्षं, त्रिंशद्भिर्धनं, चतुर्दशमयी मोक्षदायिनी भोगवर्द्धिनी च, सप्तविंशतिभिः सर्वानर्थान्, अभिचारके पञ्चविंशतिभिर्निर्मिता सा प्रशस्या भवति। एवं हि पञ्चाशद्भिर्मणिभिः चतुःपञ्चाशद्भिर्वा निर्मिता हि सा कार्यसाधिका, अष्टोत्तरशतसंख्याका सा सर्वसिद्धिदायिका भवतीति यामलवचनप्रमाणेनैतद् फलमुक्तम्। त्रिपुराया जपे रुद्राक्षचन्दनमालयोः प्रशस्तिरपि तत्रोक्ता।

वाराहीतन्त्रोक्तविधानेन च सुवर्ण-मणि-स्फटिक-शङ्ख-प्रवालैर्निर्मिता मालाः पुत्रजीवं विवर्जिताश्च प्रशस्ता भवन्ति। धूमावत्या जपे श्मशानधुस्तुरैर्निर्मिता माला इष्टसाधिका निगदिता। बालाया आराधने रक्तचन्दनमाला, कालिकाया आराधने दन्तमाला, उग्रताराया जपे महाशङ्खमाला, उन्मुख्या जपेऽपि तथैव, शक्तेर्जपे स्फटिकमाला रक्तचन्दनमाला वा, रुद्राक्षमाला चतुर्वर्गफलप्रदा, रूप्यमणिभिर्निर्मिताश्च माला ईप्सितफलदा भवन्ति। स्वर्णमाला सर्वकामफलप्रदा, प्रवालमणिमाला विपुलधनसाधिका च। स्फटिकमुक्ताशङ्खमाला अव्ययकीर्तिसाधिकाः। ईप्सिताप्तये एताः सर्वा अपि माला सुगोप्या इति।

मुण्डमालातन्त्ररीत्या रुद्राक्षेन्द्राक्षस्फटिकमालाः पुत्रजीवं वर्जिता भुक्तिमुक्तिदा भवन्ति; परं मध्ये मध्ये पुत्रजीवेन सहितास्ता विनाशिका भवन्ति।

रुद्रयामलवचनप्रामाण्येन शक्तिमन्त्रे रुद्राक्षमाला न प्रशस्या, किञ्च, कालिकाच्छिन्नमस्तात्रिपुरातारिण्य एताः सर्वा अपि रुद्राक्षमालया न जप्याः। पुरश्चरणातिरिक्ते रुद्राक्षमालया दिवा न जप्तव्यम्। एवमेव वैदिकं तान्त्रिकं किमपि जपहोमादिकं कर्म नाचरितव्यम्, तथाकृते सति सर्वकर्माणि निष्फलतां भजन्ते।

एवञ्च करमालया जप्तमष्टगुणं, पुत्रजीवैरष्टादशगुणं, शङ्खमालाभिः शतगुणं, प्रवालैः सहस्रगुणं, स्फाटिकैर्दशसहस्रगुणं, मौक्तिकैर्लक्षगुणं, पद्माक्षैर्दशलक्षगुणं, सौवर्णमालया कोटिगुणं, कुशग्रन्थ्या रुद्राक्षमालया चानन्तगुणं, श्वेतपद्माक्षमालया अमितगुणञ्च फलं भवति।

## रुद्राक्षमालानिर्माणविधानम्

अथ सूत्ररूपेणाक्षमालाग्रथनविधानमग्रे निरूप्यते। तत्र यथा प्राप्तानि यथा बुद्धिः शुद्धानि च समानि कीटादिभिरदूषितानि रुद्राक्षाण्यादाय पञ्च-पञ्चसंख्याभिः प्रविगणय्य पृथक् पृथक् च प्रक्षाल्य द्विजस्त्रीनिर्मितं कार्पासिकं क्षौमं वा रक्तसूत्रं ग्रन्थिविवर्जितमादाय त्रिगुणं त्रिगुणीकृत्य विधिना ग्रन्थयेत्। प्रत्येकमक्षं पुनः प्रक्षाल्य मूलास्त्रं च पठनक्षं प्रक्षालयन् एकैकमणि-मादाय सूत्रे मुखेन मुखं पुच्छेन पुच्छञ्च योजयेत्। एवं मध्ये मध्ये ब्रह्मग्रन्थीन् विधाय गोपुच्छसदृशीं मालां विरच्य तत्सजातीयमेकाक्षमादाय मेरोर्ग्रथनं सावधानेन तदेव मन्त्रस्मरणपूर्वकं कुर्यात्। अष्टोत्तरशतसं-ख्यापरिपूर्त्यनन्तरं ब्रह्मग्रन्थिद्वारा मेरुबन्धनं कुर्यात्। अत्रायं विशेषः—कालिका-त्वरिता-तोडला-वनवासिनी-वाराही-चण्डिकानाञ्चाक्षमाला मध्ये मध्ये ग्रन्थिहीनैव कार्या। एवं मालां निर्माय तस्याः शोधनं कर्तव्यम्। तथा कृते सति मालायां प्राणप्रतिष्ठां कुर्यात्।

## मालायाः प्राणप्रतिष्ठा

शुभे लग्ने शुभे वारे सुभर्क्षे शुभे च तिथौ नित्यं कर्म विधाय सामान्या-र्घ्यं च प्रदायादौ गुरुं प्रणम्य जपमालिकां संस्कुर्यात्। यतश्च स्वयं गुरुणा वा ग्रथितामक्षमालामादाय शिवमन्त्रेण[1] पञ्चगव्ये क्षिपेत्। शीतलेन तीर्थजलेन तां ततः प्रक्षाल्य पुनः सद्योजातेन[2] मन्त्रेण मार्जयेत्। एवं हि ईशसूक्तेन प्रक्षालनं, पुरुषसूक्तेन लेपनं, अघोरसूक्तेन धूपनं, पुनरनेनैव सूक्तेन शतादन्यूनं मन्त्रणं, वामदेवेन च मन्त्रेण समीकरणं साधकोत्तमः कुर्यात्। ततश्च नवकैरश्वत्थपत्रैः पद्माकारं पुटं प्रकल्पयेत्। तन्मध्ये मालां स्थाप्य तत्तद्देवानां मन्त्रं पठन्नेवं संस्कृत्य परिवारगणैः सह तत्र देवीं सम्पूज्यानुलोमविलोमक्रमेण मातृकार्णेन मन्त्रयित्वा मेरुं 'हे सौं' इति प्रेतबीजेन संमन्त्र्य मालायां देवतात्मकत्वं भावयेत्। ततश्च संस्कारपूर्वकं वह्निं संस्थाप्य अष्टोत्तरशतं तत्तद् देवतामन्त्रेण जुहुयात्। होमकर्मण्यशक्तश्चेत् तद् द्विगुणं जपमाचरेत्। ततश्च 'अक्षमालाधिपतये सुसिद्धिं देहि देहि सर्व-

---

१. शान्तं शत्रुस्वरारूढं नादबिन्दुविभूषितम्।
कथितं शिवमन्त्रं च साधकानां हिताय च॥ ( शा० ८, ४९ )।

२. साद्योजातं प्रपद्यामि सद्योजाताय वै नमः।
भवे भवे अनादिभवे भवोद्भवाय वै नमः॥ ( शा० ८, ५१ )।

मन्त्रार्थसाधिनि साधय साधय सर्वसिद्धिं परिकल्पय परिकल्पय मे स्वाहा' इत्युच्चार्य मालां प्रार्थयेत्।

इत्थं सुसंस्कृता माला सर्वकामफलप्रदा भवति। ततश्च गुरुं सम्पूज्य तद्धस्तादक्षमालिकां गृह्णीयात्। नित्यजपादौ तोयैरभ्युक्ष्य 'ऐं-द्रीं अक्षमालिकायै नमः' इति हृन्मन्त्रेण मालां सम्पूज्य दक्षिणे हस्ते गृह्णीयात्।

### मालाभिजपे विधिः

दक्षिणहस्तगामक्षमालां हृत्समीपे समानीय वामेन करेण चासंस्पृशन् मध्यमाया मध्यभागे समाहितेन स्थाप्य अङ्गुष्ठस्थामक्षमालां मध्यमाग्रभागतश्चालयेत्, (न त्वङ्गुष्ठेन चालयेत्, तथा कृते सति तज्जपो निष्फलायते)। अशुचिश्चेन्मालां न स्पृशेत्। तस्याः करभ्रंशनमपि न योग्यम्। गोपनीयेयं माला तां जपकाले गुरुमपि न दर्शयेत् न च तर्जन्या अपि स्पृशेत्। भुक्ति-मुक्ती-पुष्ट्यर्थं मध्यमायामेव जपेत्, प्रत्येकमक्षं जपान्ते चालयेच्च। एवञ्चाखिलां मालां संजप्य भ्रामयेत्, पुनः प्रदक्षिणं कृत्वा मेरोरनुलङ्घनक्रमेण पुनः पुनश्च जपेत्। कोऽपि जपो वृद्धिक्रमेण सूक्ष्मावधिक्रमेण च कार्यः। तत्र सूक्ष्मावधिक्रमः सूक्ष्मावधिः-स्थूल्यन्तं जपः संहार इत्युच्यते। एवं जपान्ते मालां शुद्धस्थाने रक्षेत्। जीर्णे शीर्णे चाक्षमालासूत्रे पुनस्तेनैव विधिना ग्रथित्वा जपेत्। अदीक्षितद्विजेनापि स्पृष्टा चेदक्षमाला पुनः संस्कारमर्हति। एवमेव करे-कण्ठे-मूर्ध्नि-उरु-पादाधरादीनि स्पृष्ट्वा, अपसव्यप्रचालिता, चालिता, अगुप्ता चापि माला पुनः संस्कृत्यैव जपयोग्या भवति।

एवमेव सूक्ष्मक्रमे अ-क-च-ट-त-प-य-शादिवर्गाणामष्टक्रमेणाष्टवारजपेन च वर्णमालाविधिना सर्वमन्त्रार्थसाधनमपि तत्त्वज्ञैः क्रियते इति शम्।

## नवमोल्लासे

### जपविधानम्

'जपनं जपः', 'जपः स्यादक्षरावृत्तिः' इत्यादि व्युत्पत्तिबलेन 'जप मानसे च' (भ्वा० प० से०) 'व्यधजपोः'—इति सूत्रेणाप् कृते जपशब्दस्य सिद्धिविधीयते। तथा चात्र नवमोल्लासे जपविधौ विचारा अत्र संकलिताः। तन्त्रागमे साधनशास्त्रे जपस्य सर्वतो वैशिष्ट्यमुपदिष्टम्। जपादेव देवाः प्रसीदन्ति। साधकोत्तमस्य सर्वेऽभीष्टार्था जपेनैव सिद्ध्यन्ति। अतो जपो जीवने आवश्यकः। उक्तमपि—'पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम्' इति।

मन्त्राणां स्थितिर्जपे एव जायते। तत्रादौ सर्वमन्त्राणां लिपिमाध्यमेन विन्यासं कुर्यात्, अन्यथा निष्फलता समधिगच्छति। अतो जपादौ जपान्ते च प्राणायामं विधाय वर्णविन्यासं चाश्रित्य जपो विधेयः। जपविधिमाश्रित्य तन्त्रागमे बहवो ग्रन्थाः प्रतिष्ठिताः सन्ति। तथात्र विषये ग्रन्थस्वारस्यमादाय विविच्यते किञ्चित्—

### जपभेदाः

जपस्त्रिविधो मानसोपांशुवाचिकभेदात्। तत्र विशुद्धेश्वरतन्त्रप्रामाण्येन निजकर्णागोचरो यो जपः, स मानसः। उपांशुश्च—निजकर्णगोचरः सन्नपि परकर्णगोचरविषयाभावः। सर्वजनैर्वेद्यश्च जपो वाचिकः।

एवं नीचोच्चस्पष्टशब्दाक्षरैर्यत्र मन्त्रोच्चारः, स वाचिको जपयज्ञः। किञ्चिदोष्ठौ प्रचालयन्नीषदुच्चारयंश्च मन्त्रजप उपांशुरित्यभिधीयते। वर्णात् वर्णं पदात् परं या अक्षरश्रेणिः, तस्या धिया यत् शब्दानुचिन्तनं स मानसजप इति।

एषु त्रिष्वपि जपविधिषु मानसो जपो वाचिकजपविधिना सहस्रगुणात्मको विशिष्टतरश्च। अस्यां हि स्थितौ मन्त्रघटकीभूतस्वरव्यञ्जनवर्णज्ञानक्रमेण स्थिरचित्तो देवतां चित्तगां कृत्वा, ओष्ठौ पिधाय, जिह्वाञ्च निरोध्य, शिरो ग्रीवाञ्चाप्रकम्प्य, दन्तानप्रकाश्य, स्थिरेन्द्रियेण च कृतो जपः सिद्धिदायको ज्ञेयः। तथा च मनसा स्तोत्रपाठः, वचसा मन्त्रजप इत्युभौ नैरर्थक्यमेव भजेते। तथा च देवताकारं मन्त्रेऽनुचिन्तयन् आद्यन्तक्रमयोगतो वर्णाननुस्मरन् शनैः शनैरविस्पृष्टं न द्रुतं न च विलम्बितं जप कुर्यादिति प्रतिफलति[1]। मन्त्रार्थमज्ञानिनः फलं न लभन्ते। तस्मान्मन्त्रदेवतयोरभेदज्ञानमावश्यकम्।

### मन्त्रदैवतयोरभेदः

ननु मन्त्रदैवतयोरभेदः कथं संगच्छत इत्युच्यमाने समाधीयते। मन्त्रार्थं देवतारूपं, चिन्तनं परमेश्वरी, तत्र मन्त्रदेवयोर्वाच्यवाचकभावेनाभेदः संगच्छते। तत्र देवता वाच्या, तन्मन्त्रो वाचकः। तस्माद् वाच्यवाचकयोरभेदे सति मन्त्रदैवतयोरभेद एव। इदन्तु यामलग्रन्थानुसारम्।

---

१. तन्निष्ठतद्गतप्राणस्तच्चित्तस्तत्परायणः।
तत्पदार्थानुसंधानं कुर्वन्मन्त्रं जपेत् प्रिये॥ (शा० ९, १७)।

भूतशुद्धितन्त्रपद्धत्या अपि मन्त्रदैवतयोरैक्यं समुल्लसति। तदनुसारं ह्यादौ गुरुः स्फटिकसन्निभां विद्यां मूलाधारपद्मे चिन्तयेत्, स्वाधिष्ठानाख्ये लिङ्गपद्मे बन्धूकसदृशां, मणिपुरे (नाभौ) स्फटिकरूपां, अनाहते (हृदि) मरकतश्यामां, विशुद्धौ (भृकुटौ) हरिद्वर्णां, आज्ञाचक्रे (ललाटे) चतुर्वर्णानुरञ्जितां च विद्यां चिन्तयेत्। एवं ततद् पद्मेषु मन्त्रद्वारा तत्तद्देवा ध्यातव्याः। एतेन मन्त्रदैवतयोरैक्यं किं न सिद्ध्यति ?

## जपात्पूर्वं मन्त्रतत्त्वज्ञानमावश्यकम्

साधकोत्तमेनादौ गुरोर्भक्तितस्तत्पार्श्वे गत्वा मन्त्रस्य श्रोत्रास्यनेत्रप्राणान् कीलकादीश्च ज्ञातव्यम्, ततश्च पुरश्चरणे प्रवर्तितव्यम्। न च पुरश्चरणे एवैतद् ध्येयम्; अपितु सर्वत्र सामान्यजपेऽप्ये तच्चिन्त्यम्। मन्त्राणां श्रोत्रादीनामज्ञाते सति यो जपमाचरति, तस्य सर्वेऽभीष्टा नश्यन्ति, विपत्तयः समागच्छन्ति, नरके चाऽसौ निपतति। मन्त्रतत्त्वज्ञानपुरस्सरं जपेन साधकः सर्वविद्यासिद्धिपूर्वंकोऽन्ते शिवतामाप्नोति। ततश्चास्मिन् प्रसङ्गेऽग्रे तत्तद् देवानां कालीश्यामादीनां श्रोत्रास्यनेत्रप्राणानामुपदेशाः सम्पन्नाः, ते तु ग्रन्थत एवावलोकनीयाः[1]।

## मन्त्राणां नवतत्त्वानि

विद्यामन्त्रौ सृष्टेरादावेव साक्षाच्छिवेन रचितौ। आभ्यामेव द्वाभ्यां मानवानां पन्नगादीनाञ्च रक्षा भवति। मन्त्रविद्ययोः रहस्यमज्ञानाद्राक्षसाः क्षयं गताः। अतो मन्त्राणां तत्त्वमविज्ञाय तज्जपे कथं प्रवृत्तिः स्यात् ? सत्यामपि प्रवृत्तौ कथं च सिद्धिः स्यादित्यादयः प्रश्नाः समायान्ति पुरतः। तदर्थं महामतिभिर्ब्रह्मानन्दयतिभिः स्वसङ्कलितेऽस्मिन् ग्रन्थे मन्त्राणां नवतत्त्वानि निरूपितानि। तानि हि—१. देवतत्त्वं, २. प्राणतत्त्वं, ३. बिन्दुतत्त्वं, ४. ज्ञानतत्त्वं, ५. शक्तितत्त्वं, ६. योनितत्त्वमित्यादीनि। इमानि तत्त्वानि कामधेनुतन्त्रोक्तानि। एवं हि विद्यामन्त्रौ कीलनाभावात् सिद्धिदौ न भवतः। देवता-मातृका-माया सृष्टिस्थित्यन्तरूपाः सत्यः सिद्धिदाः, तत्रैकाक्षरविहीनेऽपि सिद्धिर्न स्यात्; अपितु हानिरेव ज्ञेया। एवं ह्यक्षरश्रेणीमाध्यमेन भावना करणाद् देवी साक्षात्सिद्धिदा भवति, साधकश्च ब्रह्मसमो भवति। क्वचिद् दूषणे सति हृदये तत्प्रायश्चित्तस्वरूपं भावमाकलय्य देव्या ध्यानपुरस्सरं क्षमायाचनं भावयेत्।

१. शाक्ता० (९, २९ तः ४० श्लोकाः)।

## मन्त्रार्थनिरूपणम्

साधकानामियं रीतिर्यन्मन्त्रार्थमविज्ञाय सिद्धिर्नोदेति। एतदर्थं मन्त्रार्थज्ञानमावश्यकम्। देवतायाः शरीरं बीजाक्षरैरुत्पद्यते। ततश्च ध्यानेन यद्रूपं समुपस्थितम्, स एव मन्त्रार्थ इति बोद्धव्यः[1]। ततश्च स्वस्थाने स्थिता मन्त्रा वरदाः, ध्यानस्थानस्थिताश्च फलदा भवन्ति। ध्यानस्थानहीना मन्त्राः सिद्धिं न दिशन्ति।

## मन्त्रस्थानम्

शिवेन मन्त्राणां षट् स्थानानि प्रख्यातानि। तानि च सकल-निष्कल-सूक्ष्म-सकलनिष्कल-कलाभिन्न-कलातीतानि। षट् ध्यानस्थानानि च सकलं ब्रह्मरन्ध्रस्थं, तदधो निष्कलः, मानसः सूक्ष्मः, हृत्स्थः सकलनिष्कलः, कलाभिन्नो बिन्दुस्थितः, तदूर्ध्वस्थः कलातीतश्च। तथा च कला, कुण्डलिनी, नादः, शक्तिः, शिवाख्यानि च मन्त्राणां षट् स्थानानीत्याख्यायन्ते। ध्यानन्तु स्वरव्यञ्जनभेदेन मन्त्रघटकीभूतवर्णचिन्तनमेव। मन्त्राश्च चैतन्यरहिता असिद्धिदाश्चैतन्यसहिताश्च सिद्धिदा भवन्ति[2]।

## मन्त्रचैतन्यम्

शैवे, शाक्ते वैष्णवेषु चाराधनादिषु मन्त्रचैतन्यं यत्नतः परिचिन्तयेत्। किञ्च, तन्मन्त्रचैतन्यमित्याकाङ्क्षायामुच्यते—शहस्रारं वर्तते किल मनुष्यशरीरेषु शिरोभागे शिखाया अधस्तने। तद्धि सहस्रारं साक्षाच्छिवपुरमेव। तच्च कल्पवृक्षमिव मनोहरं, चतुर्वेदचतुःशाखं, नित्यं पुष्पफलान्वितं, पीत-रक्त-कृष्ण-हरितादिभिर्मण्डितं, बहुपुष्पोपशोभितं, भ्रमरकोकिलादिभिर्निनादितं विराजते।

इत्थं सहस्रारे कल्पवृक्षं ध्यात्वा तदधो रत्नवेदिकां ध्यायेत्। वेदिकोपरि नानापुष्पसंयुतं मणिमालादिभिः खचितं सुमनोहरं पर्यङ्कं ध्यायेत्। पर्यङ्कोपरि महाकुण्डलिनी (शक्तिः) युतं शिवं ध्यायेत्। एवं ध्यात्वा मन्त्रजपे त्रिवर्गावाप्तिः स्यात्। साधकस्यावस्था तदानीं आनन्दाश्रुमण्डिता पुलकिता

---

१. शाक्ता० (९।९७)।

२. चैतन्यरहितं मन्त्रं यो जपेत् स च पापकृत्।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ (शा० ९, १०३)।

देहावेशरहिता गद्‌गदोक्तियुता च जायते। इयमेव चैतन्यावस्था। सत्याम-स्यामवस्थायां मन्त्रजपेऽवश्यं सिद्धिः स्यात्।

### षट्चक्रध्यानं योनिमुद्रा च

एवं हि मन्त्री प्राङ्मुख उदङ्मुखो वा आसने उपविश्य प्राणायाम-पुरस्सरं षट्चक्रं ध्यायेत्। मूलाधारकमले चतुर्दलम्, स्वाधिष्ठाने तु षड्दलम्, नाभौ (मणिपुरे) दशदलं पद्मम्, हृदये (अनाहते) अनन्तदलं पद्मम्, कण्ठे (विशुद्धौ) षोडशदलम्, भ्रूमध्ये (आज्ञायां) द्विदलम्, महापथे ब्रह्मरन्ध्रे सहस्रदलपद्मं क्रमशो ध्यायेत्।

कन्दमध्यस्थे आधारपद्मे अतिकमनीयं त्रिकोणं ध्यात्वा तन्मध्ये सुलक्षणं कामबीजं ध्यायेत्। ततश्च तत्रैव कामबीजोद्भवमुत्तमं स्वयम्भुलिङ्गं ध्यायेत्। तदुपर्येव 'हं सः' इत्याश्रितां चित्कलां ध्यायेत्। एवं कुण्डलितां चित्कलां तेजोरूपां जगन्मयीं स्वयम्भुलिङ्गवेष्टितां कुण्डलिनीं महाशक्ति ध्यायेत्। तथा चाधार-स्वाधिष्ठानादीनि पद्मानि भित्त्वा 'हं सः' इति मन्त्रैर्युक्तां तेजःसमन्वितां ब्रह्मरन्ध्रपर्यन्तगां कुण्डलिनीं ध्यायेत्। सदाशिवसंयोगात् क्षणमात्रं तत्र रम-यित्वा लाक्षारससमोपेतन्तत्रामृतमास्वाद्य तेन च परदेवतां संतर्प्य अन्याश्च षट्चक्रस्थितदेवतास्तदमृतेनैव संतर्प्य तेनैव वर्त्मना सहस्रारमारभ्य पुनर्ध्या-नस्थिति मूलाधारे आनयेत्।

इत्थं विधाय पुनर्मन्त्री अक्षमालां (अकारमारभ्य क्षकारपर्यन्तमक्षर-समाम्नायं) चिन्तयेत्। एषा चाक्षमाला चित्रिणी सती विसतत्वाभा, ब्रह्मनाडीगतान्तरा, साक्षाज्जाग्रत्स्वपिणी मन्त्रवर्णविभेदतोऽनुलोमविलोम-क्रमेण मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितं मन्त्रमिति कृत्वा सर्वमन्त्र-प्रकाशिनी भवति। तत्र चान्तिमो वर्ण मेरुरूपो भवति। अतो न तस्य लङ्घनं कार्यम्। पुनश्च सबिन्दुवर्णमुच्चार्य पश्चात् साधको मन्त्रं जपेत्।

### अनुलोमविलोमजपः

ननु को हि अनुलोमविलोमक्रम इति शङ्कामाश्रित्य ग्रन्थकारो वक्ति—'अकारमारभ्य लकारान्तो जपोऽनुलोमः। लकारमारभ्य हकारान्तो जपश्च विलोमः। क्षकारस्य जपस्तु उभयाश्रितः। अतः क्षकारस्य जपः स्वातन्त्र्येण कार्यः'[1]। अष्टवर्गा हि परा कुण्डलिनी शक्तिः। ते च वर्गा अ-क-च-ट-त-प-य-शाख्याः। एवं हि वर्गाणामष्टवर्गेण पुनरष्टवारजपेन चानुलोम-विलोमजपो

---

१. शाक्ता० (९, १२६-१२७)।

पूर्णतामेति। पुनरष्टवर्गेणाष्टोत्तरशतं मूलमन्त्रं जपेत्। एषा एव साधकेषु योनिमुद्रा निगदिता। तथा च मन्त्रार्थं मन्त्रस्थानं मन्त्रचैतन्यं योनिमुद्राञ्च यो न वेत्ति, साधकः स शतकोटिजपैरपि सिद्धिं नाप्नोति।

## मन्त्रशिखानिरूपणम्

यामलशास्त्रमाश्रित्य ब्रह्मानन्दगिरियतिः प्रतिपादयति 'मन्त्रशिखा' विधिः। यथा तमसाच्छन्ने गृहे प्रकाशं विना वस्तुप्रापणं न जायते, तद्वदेव मन्त्रशिखादीपशिखा इव ज्ञाते सति मन्त्रार्थं प्रापयति। तां विना मन्त्रार्थ-प्रकाशनं न जायते। अत एव सिद्धेषु मन्त्रशिखोपदेशो गोपित एवास्ति।

मन्त्रशिखोपदेशेन मन्त्रोदिता देवता क्षिप्रं प्रसीदति। मूलकन्दे मूलाधारपद्मे या हि भुजगाकाररूपिणी कुण्डलिनीमहाशक्तिस्तस्या यो हि भ्रमावर्तो वातः, स एव प्राण इत्युच्यते। जागृतायाञ्च कुण्डलिन्यां क्रमशः पद्मभेदनेन ब्रह्मरन्ध्रपर्यन्तगा स्थितिः समुदेति। तत्र यदा कुण्डलिनी शक्तिरारोहावरोहक्रमेण सततमुत्थिता सती झिल्लीवाऽव्यक्तमधुरा कूजन्ती स्वनिकेतनं ब्रह्मरन्ध्रेण प्रविशन्ती भवति, तदैव साधकस्य मनोलयः कुण्ड-लिन्यामेव भवितव्यः। एतेन कुण्डलिन्या मनोलयेन हि मन्त्रशिखायाः सर्व-मन्त्रप्रदीपिका स्थितिः सम्पद्यते। दशामिमां विना मन्त्रशिखाया असिद्धया मन्त्रा न सिद्धयन्ति। तस्मान्मत्रशिखाज्ञानं नूनं साधकेन कर्तव्यमेवेत्याशयः।

## सूतकम्

यथा हि मन्त्रसाधने दीक्षा-संकल्प-विनियोगाङ्गन्यास-भूतोत्सरण-शापोद्धार-ध्यानादीनामावश्यता सिद्धयेऽभिहिता, तथैव सूतकनिवृत्तिरपि कर्तव्या। तच्च सूतकं जात-मृतभेदाभ्यां द्विविधम्। एतेन सूतकद्वयेन युक्तो मन्त्रः सिद्धिदायको न भवति। तस्मात् सूतकद्वयस्य मुक्तये मन्त्रिणे मन्त्रस्या-दावन्ते च ब्रह्मबीजं प्रणवं दत्वा जपादौ सप्तवारं जपान्ते च सप्तवारं जपेन सूतकनिवृत्तिः स्यात्[1]। प्रणवश्च चतुर्दशस्वरोपेतो नादबिन्दुयुक्तः सन् दीर्घप्रणव इत्युच्यते। एतस्यैव प्रणवस्य जपे उपयोगः।

---

१. ब्रह्मबीजं मनोर्दत्वा चाद्यन्ते परमेश्वरि।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये॥ इति॥ ( शाक्ता ९,१३७ )।

### तान्त्रिकप्रणवोच्चारणे स्त्रीशूद्राणामप्यधिकारः

तन्त्रं युगशास्त्रम्। अत्र हि शास्त्रे स्त्रीशूद्राणाञ्च समेषां समानाधिकारः। अतो जपसाधनादिषु स्त्रीशूद्राणामधिकारसत्वादेव ॐकारस्य दीर्घोच्चारणे न क्वापि दोषः[१]।

### जपे गणना आवश्यकी

गणनाहीनो जपो निष्फलः। अक्षतैर्हस्तपर्वैर्धान्यैः पुष्पकैश्चन्दनैर्मृत्तिकादिभिश्च जपसंख्या न गणनीया, तथा कृते सति तन्निष्फलतामेति। परं लाक्षाकुशीरसिन्दूरगोमयकरीषकादीनां गुटिकां विधाय तेनैव जपसंख्या गण्या। एवं कृते हि साधकः सिद्धिं विन्दति, नान्यथा।

## दशमोल्लासे

### महासेतुनिरूपणम्

महासेतुपदेनात्र शास्त्रे बीजाक्षराण्युच्यन्ते। बीजाक्षरं विना मन्त्रजपे सिद्धिर्नोदेति। आदौ महासेतुं ततश्च सेतुं प्रजप्य मन्त्रजपेन सम्प्रदायानुसारं सिद्धिर्भवति। अन्यथा सर्वार्थहानिर्नरकप्राप्तिश्च स्यात्[२]।

सुन्दरी-भुवनेश्वरी-कालिका-तारादीनाञ्च कूर्चबीजं महासेतुमुच्यते, अन्यदेवानाञ्च वधूबीजं प्रशस्यमुक्तम्। किञ्च, तद् वधूबीजमिति रुद्रयामलस्य स्वारस्यमादाय उक्तम्[३]। ततश्च काशाद्यं शकारः, चतुर्थाद्यं तकारः, यकारान्तं रेफः, संहृतमेतत्त्रितयसंयुक्तम्। लक्ष्मीः ईकारः, बिन्दुरनुस्वारः, ताभ्यां युतम्। एतेन सत्रं संहृतेन 'स्त्रीं' इति वधूबीजमुद्धीयते। एवं हि महासेतुं ( बीजमन्त्रं ) विना शतकोटिजपेनापि साधकस्य सिद्धिर्नोदेति। इयं हि सेतुविद्या साक्षाद् ब्रह्मस्वरूपिणी भवति। आदावन्ते च सेतुविद्यां प्रजप्य मन्त्रः सिद्धो भवति। यथा निःसेतुः महासलिलं लङ्घितुं न शक्यते, तद्वदेव महामन्त्राब्धिमपि सेतुविद्यां विना तर्तुं नैव शक्यते।

---

१. तन्त्रोक्तः प्रणवः सोऽपि स्त्रीशूद्राणां प्रशस्यते।
तस्मात् स्त्रीणां च शूद्राणां स एव परिकीर्तितः॥
तन्त्रोक्तं प्रणवं देवि! वह्निजायां सुरेश्वरि।
प्रजपेत् सततं शूद्रो नात्र कार्या विचारणा॥ (शाक्ता० ९,१३९-१४०)।

२. यो जपेत् परमेशानि! विना सेतुं महामनुम्।
तस्य सर्वार्थहानिः स्यात् मृते च नरकं व्रजेत्॥ (शा० १०,२)।

३. आकाशाद्यं चतुर्थाद्यं यकारान्तं च संहृतम्।
लक्ष्मीबिन्दुयुतं देवि! वधूबीजमुदाहृतम्॥ (शा० १०,४)।

## सामान्यसेतुनिरूपणम्

अथ सामान्यसेतुः क इति जिज्ञासिते ब्रह्मानन्दयतिराह शास्त्रस्वारस्यम् । विप्रक्षत्रियाभ्यां प्रणव आदावन्ते संयोजनीयः । वैश्यानां कृते 'फडि'ति सामान्यसेतुः संयोजनीयः, शूद्राणां कृते च माया 'ह्रीं' इति सामान्यसेतुः संयोजनीयः । एवं विशेषबीजेन सह सामान्यबीजमिति सर्वथा संयोज्य मन्त्रजपः प्रशस्यः ।

## विशेषसेतुनिरूपणम्

सुन्दरीदेव्या विशेषसेतुं प्रवदन्नाह—आदौ मायाबीजं समुद्धृत्य सौभाग्यबीजं तदन्ते, पुनर्मायाबीजञ्च संयोज्य त्र्यक्षरीविद्यां सम्पाद्य सुन्दर्या आराधनं कुर्यात् । सा च त्र्यक्षरी विद्या 'ॐ ह्रीं सौः ह्रीं' इति सम्पद्यते । एवमेव भैरवीदेव्या बीजमुद्धारो यथा—हरिप्रियामादौ समुद्धृत्य ततः सुरसां समुद्धरेत् । औदार्य-बिन्द्वर्धं च संयुतं कृत्वा 'ॐ ह्रौं सः' इति सेतुविद्या संगच्छते ।

तारायाश्च बीजमन्त्रसमुद्धारे पूर्वं प्रणवमुद्धृत्य तदनन्तरं हृल्लेखां समुद्धरेत् । तथा सति त्र्यक्षरी 'ॐ ह्रीं' इति सेतुविद्याया निष्पत्तिः संगच्छते ।

श्यामायाश्च—पूर्वमैश्वर्यबीजं ततश्च कूर्चबीजं पुनरैश्वर्यबीजं बिन्द्वर्धसंयुतं कृत्वा सेतुबीजसमुद्धारेण 'ॐ ऐं हूँ ऐं' इति बीजमन्त्रं समधिगच्छति । एवमेव भुवनेश्याः, अन्नदायाः, महिषमर्दिन्याः, विष्णोः, श्रीकृष्णस्य, श्रीरामस्य, शिवस्य च सेतुविद्योद्धारो ग्रन्थे निरूपितः । अन्येषां देवदेवीनाञ्चोङ्कार एव सेतुः ( बीजम् ) इत्युक्तम् । शूद्राणाञ्चोङ्कार एव सर्वत्र सेतुरुक्त इति सुधीभिरुह्य म् ।

## कवचसेतुनिरूपणम्

यथा हि वीराणां रक्षणं कवचेन भवति, तद्वदेव कवचपाठपुरस्सरमनुष्ठानं प्रतिफलति । अतो यस्य कस्यापि देवीदेवस्यानुष्ठानं कवचपूर्वकमेवारम्भणीयम् । तथा सति कवचमपि सेतुमन्त्रपुरस्सरमेव स्यात् । यस्य देवस्य यो हि बीज-( सेतु ) मन्त्रस्तेन मन्त्रेणादावन्ते त्रिगुणं कृत्वा कवचपाठेन सिद्धिरुदेति । यस्यानुष्ठानं सेतुमन्त्रकवचपाठं विना भवति योगिन्य-

स्तस्य सर्वं फलं नाशयन्ति[1] । अतः शैवे, शाक्ते, वैष्णवे, गाणपत्ये सर्वत्रैव साधनासु च कवचस्याप्यादावन्ते महासेतुं प्रजप्य जपेनाशुसिद्धिरिति कवच-सेतोराशयः ।

## कुल्लुकानिरूपणम्

कुल्लुका अपि सेतुवदेव मन्त्रस्यादावन्ते जपनीया । कुल्लुकाज्ञानाभावे जपे सति जापकस्यायुर्विद्यायशोबलानि क्षीयन्ते । किञ्च, साधकस्य सिद्धिस्तु दूरे एवापास्ता, तस्य पञ्चत्वप्राप्तिरपि सम्भवा[2] । तस्मात्कुल्लुकाज्ञानं साधकस्यावश्यकम् । स च कुल्लुकाजपो मूर्ध्नि कार्यः । पूजा जपं च समाप्य कुल्लुकाद्यं प्रजप्यान्तेऽपि कुल्लुकाजपं कुर्यादिति[3] भावः ।

तथा चाग्रे तत्तद् देवीनां देवानाञ्च कुल्लुका निरूपिताः । यथा तारायाः कुल्लुका महानीलसरस्वती वरीवर्ति । तस्या जपो यथा—'ह्रीं स्त्रीं हूँ' इति । कालिकायाश्चाराधनायां पञ्चाक्षरी कुल्लुका प्रयोक्तव्या । तस्यां काली-कूर्च-वधू-माया-फडिति वर्णाः संयोजनीयाः । ते च संहृत्य 'क्रीं हूँ स्त्रीं ह्रीं फट्' इति भवन्ति । एवमेव छिन्नमस्तायाः, शिवस्य, भुवनेश्याः, भैरव्याः, त्रिपुरसुन्दर्याः, सरस्वत्याः, मातङ्ग्याः, बगलायाः, धनदादीनां च कुल्लुकाबीजानां प्रयोगा ग्रन्थे निरूपिताः ।

सर्वे मन्त्रस्थिता वर्णा आदौ पशुभावमापन्नाः सन्तः निष्क्रियाः निष्फलाश्च भवन्ति; परं महासेतु सेतु कुल्लुकादिमन्त्रयुक्तास्ते सफलाः सिद्धिदाश्च भवन्ति[4] । अतः साधकानां कृते एतत्प्रयोगाणामर्हता अवश्यं संसाधनीया । गुह्यातिगुह्यमस्मिन् शास्त्रे सर्वमेतद् गुह्यतत्त्वं सम्यग् विज्ञायैव प्रवर्तितव्यमित्याशयः ।

---

१. सेतुं विना महेशानि ! कवचं यः पठेन्नरः ।
स भक्ष्यो जायते देवि ! योगिनीनां शुचिस्मिते ।। (शा० १०, ३३) ।

२. अज्ञात्वा कुल्लुकामेतां जपेत् योऽधमः प्रिये ।
पञ्चत्वमाशु लभते सिद्धिहानिश्च जायते ।। (शा० १०, ३७) ।

३. जपं समारभेन्मन्त्री कुल्लुकाद्यं यथाविधिः ।
पूजां जपं समाप्यैव स्तुत्वा च कवचं पठेत् ।। (शा० १०, ३९) ।

४. पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
एवं कृते महेशानि ! प्रभुत्वं प्राप्नुवन्ति ते ।
अन्यथा पशुवद् देवि ! न जपस्तु कदाचन ।। (शा० १०, ६५) ।

## एकादशोल्लासे

### मुखशोधनम्

बाह्यशुद्धिरान्तरशुद्धौ कारणं भवतीति सिद्धान्तानुरोधेन अनुष्ठानादिषु शरीरशुद्धिरपेक्षते। शरीरे मुखमुत्तमाङ्गत्वेनोपवर्णितम्। तस्य च शोधनं यथा स्यात्तथाऽऽचरणीयमिति कृत्वा शाक्तानन्दतरङ्गिणीग्रन्थस्यैकादशेऽध्याये वर्णनमुपपन्नम्। तथा च जपपूजादिषु मुखशोधनं विना न प्रवर्तितव्यम्, प्रवृत्ते सति हानिः स्यात्, अतोऽशुद्धमुखेन जिह्वया च नानुष्ठानं प्रारम्भणीयम्।

इदञ्च मुखशोधनं दन्तधावनादिसहकृतस्तत्तद् देवानां मन्त्रपूर्वकं भवति। तथा च स्थूलसूक्ष्मोभयरीत्या एकैकमादाय ग्रन्थानुसारेण विव्रियते किञ्चिद्—

महात्रिपुरसुन्दर्या मुखशोधने श्रीबीजमादौ निधाय तदनन्तरं प्रणवं पुनश्च लक्ष्मीबीजं पुनस्तारं ( प्रणवं ) ततः श्रीः ततः प्रणवं इति कृत्वा 'श्रीं ॐ श्रीं ॐ श्री ॐ' इति षडक्षरं मुखशोधनमन्त्रं संपद्यते। बाह्यरीत्या मुखशोधनं विधाय मन्त्रञ्च दशधा प्रजप्य मुखशोधनं सम्पद्यते। ततश्चानुष्ठानं प्रारम्भणीयम्।

एवमेव बालाया मुखशोधने वाग्भवं बीजमादौ ततो भुवनेशीं ततः पुनर्वाग्भवं मन्त्रं संयोज्य त्र्यक्षरीविद्या 'ऐं ह्रीं ऐं' इति सम्पद्यते। एभिर्मुखशोधनं विधायैवानुष्ठानमाचरेदिति सिद्धान्तः।

एवमेव भैरव्याः, श्यामायाः, तारायाः, भुवनेश्वर्याः, दुर्गायाः, बगलायाः, मातङ्ग्याः, लक्ष्म्याः, धूमावत्याः, भुवनायाः, अन्नदायाः, उच्छिष्टचाण्डाल्याः, भद्रकाल्याः, चाण्डाल्याः, शिवादीनाञ्च मुखशोधनमुक्तं ग्रन्थे। मन्त्रस्तु तत एवावगन्तव्यम्। अन्येषां देवीदेवानाञ्च मुखशोधनं दशधा प्रणवं प्रजप्य संपद्यते[१]।

मुखशोधनेन जिह्वाऽमृतमयी भवति, तदभावे च सा विषसंयुक्ता सती मन्त्रफलविनाशिनी स्यात्। जिह्वा अभक्ष्यभक्षणेन, मिथ्याभाषणेन, कलहैर्नानादोषैश्च दूषिता भवति। साधकेन तान् दोषान् अपाकृत्य मन्त्रजपे

---

१. अन्येषु सर्वदेवेषु देवीषु च वरानने।
दशधा प्रणवेनैव मुखशोधनमाचरेत्॥ (शा० त० ११, ३०)।

प्रवर्तितव्यम् । अतः शाक्तवैष्णवगाणपत्यसौरशैवादिषु मुखशोधनमावश्यकम् । अतः प्रयत्नतो जिह्वामुखयोः शोधनं प्रकर्तव्यम् ।

## निद्राभङ्गः

यः खलु साधको मन्त्रजपसाधनादिषु निद्रालुः स्यात, तस्य सिद्धिर्न स्यात् । इडापिङ्गलयोर्नाड्योरनन्तरे प्राणवायोरवधारणनिःसारणयोर्यदा शक्त्यादिमन्त्राणां जपः स्यात्तदा सर्वं जप्तं अरण्यरोदनमिव भवेत् । तस्माद् निद्रां परित्यज्य जपपरायणो भवेत् । यदि निद्रा कथमपि अपाकृता न स्यात्तदा कामकलाबीजं (क्लीं) इति मन्त्रमादौ मन्त्रान्ते च जपेत् । तथा कृते सति निद्रादोषो विनश्यति[1] ।

## मन्त्रेषु स्त्रीपुंनपुंसकज्ञानम्

सर्वे हि मन्त्राः पुंदैवता आख्याताः । तथा च मन्त्राः पुंरूपाः सन्तस्तथैव सिद्धिदा भवन्ति । तत्तद् मन्त्राणां विद्याश्च स्त्रीदैवता ज्ञेयाः । पुंमन्त्रा 'हुं फट्' इत्यन्ताः, 'द्वि ठः' इत्यन्ताश्च स्त्रीमन्त्रा निर्दिष्टाः । 'नमोऽन्ताः' मन्त्रा नपुंसकसंज्ञाख्याः शास्त्रकारैरुक्ता इति तत्र तत्रोह्यम् ।

## दीपनीज्ञानं योनिमन्त्रश्च

जपानुष्ठानक्रमे दीपन्या ज्ञानमप्यावश्यकमिति ब्रह्मानन्दस्वामिन आमनन्ति । 'ईं' इति कामकलाबीजम् । तस्यैव योनिरूपेण निर्देशो ग्रन्थे सूपपन्नः । तन्मन्त्रेणात्मना सह तादात्म्यमास्थाय मन्त्रदैवतयोरैक्यं विधायादौ तज्जपेनाशु सिद्धिरुदियात्[2] । योनिमन्त्रस्यादावन्ते च जपः प्रशस्यः । तन्मन्त्रेण देव्याः सकलावयवानि विभावयेत् । एतदेव कामकलाबीजमिति निगद्यते । कथञ्च तदित्युच्यते—ऊर्ध्वं बिन्द्वात्मकं मुखं '॰' इति, अधस्तने बिन्दुद्वयस्तनौ 'ः' इति, हकारार्द्धं हृल्लेखा ( विस्तारक्रमो योन्यादीन्यवयवानि ) इति

---

१. आदौ कामकलाबीजं स्वमन्त्रान्तेऽपि तद् जपेत् ।
प्रायश्चित्तमिदं देवि ! कृत्वा मन्त्रं जपेद् यदि ।
किं तस्य दक्षिणो वायुस्तस्य निद्रातुरेण किम् ॥ (शा० ११, ४४-४५) ।

२. तुर्यस्वरो विन्दुयुक्तो नादेन परिभूषितः ।
कामकलामहामन्त्रो महाकालेन कीर्तितः ॥
तस्मात्स्वकीयमात्मानं ध्यायेद् देव्याः स्वरूपकम् ॥ (शा० ११, ५३) ।

देव्याः समग्रस्वरूपं ध्यात्वा तद्योगेनात्मानमपि तथैव विभाव्य[1] मन्त्रानुष्ठाने प्रवर्तितव्यम् ।

एतत्कामकलाया ध्यानमतीव गुह्यमस्ति । एतदशिष्याय अभक्ताय च न कदापि देयम् । यदि कश्चिल्लोभाद् मोहाद् वा एतदनुपयुक्ताय प्रयोजये-त्तदा सः शस्त्रघातविषादिभिर्मृत्युमाप्नोति । अतो योनिज्ञानं दीपनी-सहितञ्चावश्यं कर्तव्यमित्याशयः ।

## द्वादशोल्लासे

### पुरश्चरणलक्षणम्

साधनाप्रधानमिदं तन्त्रागमशास्त्रम् । साधना कथं कर्तव्येति विषयमुद्दिश्य प्रारब्धमिदं पुस्तकं 'शाक्तानन्दतरङ्गिणी' नाम । इतः पूर्वप्रकरणेषु यथा तथा सम्बद्धविषया निरूपिताः । साम्प्रतं पुरश्चरणानि निरूप्यन्ते ।

पुरश्चरणं हि पञ्चाङ्गोपासनम् । किं च तत्पञ्चाङ्गोपासनमित्युच्यते— जपहोमस्तर्पणमभिषेकब्राह्मणभोजनानि पञ्चाङ्गोपासनमुच्यते लोके[2] । काचिदपि साधना, कश्चन अपि मन्त्रः पुरश्चरणं विना तथैव न सिद्ध्यति, यथा जीवहीनः शरीरः कर्मसु क्षमो न भवति । अतः स्वयं गुरुणा वा पुरश्चरणं कुर्यात् । एवं हि पुरश्चरणसम्पन्नो मन्त्रः फलदायकः सर्वकर्मसु युज्यते । तत्कर्म अस्माभिरवश्यमनुष्ठेयमिति ।

### पुरश्चरणे पूर्वाह्निककृत्यम्

पुरश्चरणस्य पूर्वदिने देहविशोधनं विधाय दैनन्दिनं सर्वं कृत्यञ्च सम्पाद्य पञ्चसहस्रकं गायत्रीं प्रजप्य एकभुक्तेन हविष्यान्नं गृह्णीयात् । स च जपस्त्रिसहस्रमेकसहस्रमष्टोत्तरशतं वा यथाशक्तिकं ज्ञाताज्ञातानां पापानां क्षयार्थं कुर्यात् । तदनु भोजनाच्छादनादिभिर्ब्राह्मणास्तर्पणीयाः । ततश्च अनुष्ठानाय भूमिं संकल्पपूर्वां यथायोग्यपरिमाणां गृह्णीयात् । तच्च स्थानं ग्रामे क्रोशमितं, नद्यादौ तीर्थे वा स्वेच्छया यथायोग्यं, नगरादौ चार्धक्रोशं क्रोशपरिमितं वा आहारविहाराद्यर्थं तावतीं भूमिमाश्रयेत् । ततश्च

---

१. ऊर्ध्वबिन्द्वात्मकं वक्त्रमधोबिन्दुस्तनद्वयम् ।
हकारार्द्धं कामपुरं तथात्मानं विचिन्तयेत् ॥ (शा० ११, ५०) ।

२. जपो होमस्तर्पणं च सेको ब्राह्मणभोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते ॥ (शा० १२, ३) ।

दीपस्थानं स्वकर्मसिद्धये तत्र प्रकल्पयेत् । पुनस्तत्र कूर्मचक्रं लिखेत् । तत्र च चतुरस्रां भुवं भित्त्वा नवकोष्ठानि लिखेत् । तत्र च पूर्वकोष्ठादिषु सप्तवर्गाननुक्रमांल्लिखेत् । पुनस्तत्र मध्यकोष्ठं नवधा प्रविभज्य पूर्वादिकोष्ठक्रमेण युग्मक्रमात्स्वरांल्लिखेत् । तत्र कोष्ठेषु पूर्वादिक्रमेण ग्रामस्याद्याक्षरं भवति, तदेव तच्चक्रस्य मुखं ज्ञेयम् । उभयतो हस्तौ ज्ञेयौ । मध्ये नाभिः, पादावधस्तनौ, शेषं च पुच्छ इत्युच्यते ।

साधको मुखत्वेन प्रकल्पिते कोष्ठे तिष्ठन्नेव साधनं (पुरश्चरणं) आरभेत् । मुखस्थः सिद्धि लभते, करस्थः स्वाल्पायुः, कुक्षिसंस्थः उदासीनः, पादस्थो दुःखभाक्, पुच्छस्थश्च पीडायुक्तो भवति साधकः । तस्मान्मुखस्थेनैव पुरश्चरणमारभेत् । तच्च पुरश्चरणमुत्तरायणे, चन्द्र-ग्रह-तारानुकूले, शुभेऽह्नि प्रारभेत् । उत्तरायणकालो वैष्णवाराधनपरः, न तच्छाक्तानां[1] शैवानां वा कृते युक्तः ।

## पुरश्चरणदिनकृत्यम्

आदौ विशेषवस्त्रभूषाभिर्गुरुं सम्पूज्य तदाज्ञया सर्वमाह्निकं कृत्यं निर्वर्त्य अश्वत्थोदुम्बरप्लक्षवटान् क्षिरिवृक्षोद्भवान् कीलानस्त्रमन्त्रादिभिर्मन्त्रितानादायकुटीनिकट-(पुरश्चरणस्थलं) मागत्य तन्त्रोदितां क्रियामाश्रयन् मण्डपस्य दशदिग्भागेषु अस्त्रं निखनेत् । तथाऽऽचरितेन मन्त्री विघ्नैर्न परिभूयते । पुनश्च क्षेत्रपालान् पूजयित्वा तेभ्यो दिक्पतिभ्यश्च बलिं दद्यात्, क्षेत्रपालबलिं च 'ॐ क्षौं क्षेत्रपालाय नमः' इति मन्त्रेण दद्यात् । ततश्चानुज्ञां लब्ध्वा इन्द्रादिदिक्पालान् पूजयित्वा माषभक्तबलिमर्पयेत् । पुनः कुटीस्थानमागत्य सामान्यार्घ्यं प्रदाय द्वारपूजां च सम्पाद्य जपस्थानं विशोधयेत् । मूलमन्त्रेण वीक्षणं, शरेण प्रोक्षणं, तेनैव दर्भाणां ताडनं, वर्मणाऽभ्युक्षणं च कुर्यात् ।

ततः पुरश्चरणसंकल्पं, भूतशुद्धिं, प्राणायामं, न्यासं, पूजां च विधाय महासेतुप्रभृतिसहितं जपमाचरेत् । स च जपः शनैः शनैरविस्पष्टो न विलम्बितः न च द्रुतः कुर्यात् । आद्यन्तक्रमयोगतो मन्त्रस्थान् वर्णान् क्रमेणोच्चारयेत् । हृदयं स्थिरं कृत्वा मन्त्रस्थां देवतां चित्तगां च कुर्यात् । जपश्च प्रातःकालं समारभ्य मध्यन्दिनावधि जपेत् । यावदनुष्ठानसमाप्तिर्न स्यात्ता-

१. शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्मिन् पक्षे विशेषेण पुरश्चरणमाचरेत् ॥ (शा० त० १३, २१) ।

वन्न्यूनाधिको जपो न प्रशस्यः। यश्च जपो न्यूनाधिकः, स फलदायको न भवति। अनुष्ठानावधौ त्रिकालस्नानं, अशक्तौ च द्विकालमेककालं वा समाचरेत्, प्रत्यहं देवतां यथोपचारैर्पूजयेच्च। जपो यत्नपरो हिक्काजृम्भणादि-रहितः स्यात्। यदि जृम्भणादिकं स्यादेव, तदाऽऽचम्य प्राणायामन्यासा-दीन्विधाय पुनर्यत्नपरो भूत्वा शेषं जपं कुर्यात्। अथवा सूर्यदर्शनं वा विधाय तज्जपमाचरेत्।

जपकाले दर्भासने काष्ठासने वा शयीत, वसनं च प्रत्यहं क्षालयेत्। दिवाशयनं, शुनः स्पर्शः, स्त्रियं, मधुं मांसं च न स्पृशेत्। ततश्च तथाचरिते साधकः सिद्धिं विन्दति, नान्यथा।

भोजने शाकं, हविष्यान्नं तच्च यावकं, पयः, मूलं, फलं वा गृह्णीयात्। भिक्षाशी वा स्यात्, कृच्छ्रचान्द्रायणव्रतार्थी वा साधको भवेत्। फलेषु आम्रमामलकं, रम्भातिन्तिडीकं, कमला-नारङ्गकमेव गृह्णीयान्नान्यानि[1]।

## हविष्यान्नम्

पूर्वमुक्तं हनिष्यान्नं कीदृक् स्यादित्युच्यते। हैमान्तिकं शाल्यन्नं, सिता-स्विन्नं-शर्करापक्वमन्नं, मुद्गास्तिलाः, यवाः, धान्यानि, प्रियङ्गुः (टाङ्गुन इति भाषायां), नीवारः, वास्तूकं, हिलमोचिका, यष्टिका (इक्षुः), ऋतुभवानि शाकानि, मूलानि, सैन्धवसामुद्रे लवणे, दधिसर्पिषी गव्ये, पयः, पनसाम्रहरी-तक्यः, पिप्पली, जीरकं, नारङ्गं, तिन्तिडी(इमली इति भाषायां), कदलीफलं, लवली, धात्री (आमलकी), फलानि एतानि सर्वाण्यतैलपक्वानि हविष्यान्नान्युक्तानि। मूलेषु केमुककेन्द्वौ त्याज्यौ। घृतं, दधि, फलं, नारिकेलं चापि हनिष्यान्नेष्वेव गृह्यते। किं च, यवसक्तुकमपि ग्रहीतुं शक्यते। साधकः स्वेच्छया किञ्चिदपि वस्तु नान्यं गृह्णीयात्।

ब्राह्मणेषु गृहस्थेषु भिक्षाजीविषु च येषु केष्वपि साधकेषु गृहीतपुरश्च-रणसंकल्पेषु पुरश्चरणमध्ये यदि मृत्सूतकं स्यात्, तथापि साधको जपं न परित्यजेत्। स च जपः स्वकल्पोक्तक्रमेणैव सम्पाद्य तद्दशांशेन होमयेत्,

---

१. आम्रमामलकं चैव फलं केशरिसम्भवम्।
रम्भाफलं तिन्तिडीकं कमला नागरङ्गकम्॥
फलान्येतानि भोज्यानि तदन्यानि विवर्जयेत्॥ (शा० त० १२, ५५-५६)।

तद्दशांशेन तर्पयेत्, तद्दशांशेन मार्जयेत्, तद्दशांशेन च ब्राह्मणान् भोजयेत्। ततश्च गुरवे प्रभूततरां दक्षिणां दत्वा दीनान्धकृपणान्, ज्ञातीन्, परांश्च यथेप्सितं भोजयेत्। एवं कृतायां पुरश्चर्यायां साधकः सिद्धिं विन्दति।

## होमनियमः

यज्ञोऽनुष्ठानं वा अभिषेकात्मको जपात्मको होमात्मकश्च भवति। तत्र होमः कदा केन विधिना कर्तव्य इति जिज्ञासायामुच्यतेऽत्रप्रकरणे ग्रन्थे। प्रत्यहं जपान्ते तद्दशांशेन मन्त्री होमयेत्। तर्पणमार्जनब्राह्मणभोजनानि च तथैवाचरेत्। अथवा संकल्पोक्तं जपं परिपूर्य होमकर्म कुर्यात्। अथवा हेमपत्रादौ उपास्यदेवताया यन्त्रं प्रकल्प्य तत्र तत्परिवारगणं पूजयेत्। एवमपि दशांशहोमस्य कृते क्वचित्तत् संख्याको जप एव प्रशस्य इति। एवं कृते साधकः सफलतामधिगच्छति।

## तर्पणद्रव्यं विधिश्च

'तृप्तीति तर्पणः' इति व्याख्यया देवानां तृप्त्यर्थं प्रीत्यर्थं च तर्पणं साधनासु अनिवार्यत्वेन प्रतिष्ठते। तर्पणस्यादौ गुरुभ्यस्ततो मूलदेवताभ्यश्च मूलान्तेन च स्वनामोच्चारपूर्वकं 'तर्पयामि' इत्युक्त्वा स्वाहान्तेन तर्पयेदिति नियमः। तत एकैकमञ्जलिं जलं दत्वा द्वितीयान्तमुच्चरन् तर्पणं प्रकुर्वीत।

तर्पणद्रव्येषु विमलजलं, तीर्थतोयं, मधु वा प्रशस्यं भवति। केचित्तु तीर्थतोयेन, दुग्धेन, सर्पिषा, मधुना, गन्धोदकेन वा तर्पणं प्रतिपादयन्ति। तथा च कालागुरुद्रवैर्जगत्त्रयं वशयेत्। सचन्दनेन तोयेन साधकः सौभाग्यं लभते। कुङ्कुममिश्रैस्तोयैरखिलं जगत्स्तम्भयति। सर्करामिश्रितेन तोयेन बुद्धौ बृहस्पतिसमो भवति। कर्पूरयुक्ततोयेन सुराकर्षणं, रोचनायुक्ततोयेन सर्वविघ्ननिवारणं च भवति। देव्याः, आराध्यदेवस्य वा मुखे तर्पणं निवेदयेत्। एतच्च तर्पणं सर्वशास्त्रेषु परममङ्गलकारित्वेनोपदिष्टम्। ततश्च तद्दशांशतोऽभिषेको—'अभिषिञ्चामि नमः' इत्यन्तेन प्रकल्पयेत्। एवमेव गणादीन् प्रतर्प्य स्वमूर्ध्नि सावरणां देवतां ध्यायेत्। गुरुं संतोष्य विप्रान् प्रपूज्य, कुमारी अपि संपूजयेत्। देव्या आराधने कुमारीणां पूजनाभावे सिद्धिर्नायाति। यो हि विभवे सति कार्पण्याद् विधिविस्तारो नाचरति, तस्य साधनायाः कृतो यत्न व्यर्थतामेति[1]।

---

१. विभवे सति यो मोहात् न कुर्याद् विधिविस्तरम्।
नैतत्फलमवाप्नोति देवद्रोही स उच्यते॥ (शा० त० १२, ८८)।

## अङ्गहीने होमाशक्तौ च जपविधानम्

यद्यपि जपादौ अङ्गहीनता न प्रशस्यते; तथापि अङ्गहीने सति यद्यदङ्ग-विहीनं तत्तद् द्विगुणिता संख्या जपस्य प्रशस्या।

यदि साधको ब्राह्मणो होमकर्मण्यशक्तश्चेत्तदा दशमांशजपस्य द्विगुणा संख्या तत्परिपूर्त्तये कार्या, ब्राह्मणातिरिक्तवर्णानां कृते स जपस्त्रिगुण इति। शूद्रस्त्री यदि साधिका स्यात्तदा शूद्रस्य कृते होमाशक्तौ दशमांशस्य या त्रिगुणिता संख्या निर्धारिता, तस्याः संख्याया द्विगुणो(षड्गुणः)जपः कार्यः[1]।

वस्तुतस्तु होमसंख्यायास्त्रिगुणजपः क्षत्रियेण कार्यः। वैश्येन चतुर्गुणः, शूद्रेण च पञ्चगुणो बोध्यः। शूद्रस्य द्विगुणः शक्तिविषये ज्ञेयः। वैष्णवानां चतुर्वर्णानां च चतुर्गुणषड्गुणाष्टगुणो वा बोद्धव्यः। अन्यथा क्वचिद् द्विगुणादिकः क्वचिच्च चतुर्गुणादिक इति विरोधापत्तेः। अतो गौतमीयसंहितायामेतद् विषयो विशेषतो द्रष्टव्यः[2]।

रुद्रयामलशास्त्रमुद्दिश्य होमतर्पणमार्जनब्राह्मणभोजनाद्यशक्तौ पुरश्चरण-मन्त्रसंख्यापरिमितजपेन सर्वसिद्धिः प्रजायते। दशमांशत्वेन तत्संख्याको जपस्तु न कदापि हेयः। इयता विस्तरेण पाश्वः कल्पो निरूपितः। वीरकल्पे तु वामाचारभेदेन किञ्चित् परिवर्तनपुरस्सरमनुष्ठानं विहितम्। तत्र मत्स्यमांसाशनेन मन्त्रपुरश्चरणं निर्दिष्टम्[3]।

रात्रौ शय्यासनस्थो हविष्यान्नग्रहणात्प्राग् लक्षमेकं मन्त्रं जपेत्। ततो तद्दशांशेन हवनतर्पणादिकं च कुर्यात्। अत्र लक्षपदं वीरकल्पोक्तपरम्। दिव्यभावे सात्त्विकतायाः प्रभावो वीरभावे च स्थूलक्रियायाः (वामाचार-विधेः) प्रभाव इति। तदुक्तं मूले—

'दिव्यस्तु देववत् प्रायो वीरश्चोद्धतमानसः॥ इति।

(शा० त० १२, १०८$\frac{1}{2}$)।

अतोऽनुष्ठाने सर्वहिंसापरित्यागी सर्वप्राणिहिते युक्तः कामक्रोधलोभ-

---

१. शूद्रस्य यादृशी संख्या द्विगुणा सा स्त्रियः प्रिये॥ (शा० त० १२, ९२$\frac{1}{2}$)।

२. होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः।
विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः॥
वैश्यानां वसुसंख्याक एवां स्त्रीणामयं विधिः॥ (शा० त० १२,९६)।

३. मत्स्यमांसाशने शक्तः कुर्यान्मन्त्रपुरस्क्रियाम्॥ (शा० त० १२, १०२)।

मोहरागद्वेषेर्ष्याऽसूयादिरहितः स्थिरचित्तः साधको भवेत् । दक्षिणाचारानुष्ठानानि दिने वामाचाराणि च रात्रौ अनुष्ठेयानि[1] ।

## ग्रहणे पुरश्चरणम्

साधनशास्त्रे ह्यस्मिन् तन्त्रागमे ग्रहणपुरश्चरणस्यातीव महत्त्वं विलसति। तत्र मानसं संकल्पं विधाय मनसैव सर्वाः क्रिया निर्वर्त्य जपेन जवेन सिद्धिरुक्ता। अत्र पञ्चाङ्गपूजनादिकं होमतर्पणादिकञ्च सर्वं परित्याज्यमुक्तम्[2] ।

रात्रौ प्रथमप्रहरे यदि चन्द्रग्रहणं स्यात्तदा दिवसे भोजनं न कर्तव्यम् । तथा च कृत्वा जपः कार्यः। यदा प्रथमप्रहरातिरिक्तेषु प्रहरेषु चन्द्रग्रहणं भवेत्तदा दिने भोजनोत्तरं रात्रौ जपेन सिद्धिरवश्यमेव भवति। यदि दिवसे सूर्यग्रहणं स्यात्तदा रात्रौ भुक्त्वा जपयज्ञादिकमाचरिते सति क्रियाः सत्वरं फलदा निगदिता इति सर्वमुत्तमसाधकानां कृते। मध्यमाधमसाधकानाञ्च कृते ग्रहणेषु समुद्रगामिन्यां नद्यां नाभिमात्रोदके स्थितः साधको ग्रहणादिविमोक्षान्तं समाहितो जपः कुर्यात्। मोक्षान्तं यावज्जपं विधाय ग्रहणान्ते दशांशेन होमादिकं सर्वमेव कुर्यात् ।

अथवा ग्रहणस्य स्पर्शकाले शुद्धोदकैः स्नात्वा शुचौ देशे समाहितो ग्रहणान्मुक्तिपर्यन्तं अनन्यधीः साधको जपमाचरेत्। तदन्यं सर्वं शास्त्रोदितञ्च कुर्यादिति भावः।

## ग्रहणेषु जपादीनामावश्यकता

श्राद्धादेरनुरोधेनापि ग्रहणेषु जपावरोधस्तन्त्रागममार्गाश्रयिणो न त्यजेयुः[3] । तस्मात्साधकैरवश्यं ग्रहणेषु जपः कार्यः। नैवं कृते पूर्वजन्मार्जितं पुण्यं नश्यति इति ।

---

१. दिवा दक्षिणमार्गेण वामेन च तथा निशि ।
यदि तूर्णंफलावाप्तौ युस्माकं मतमेव च ॥ (शा० त० १२, ११२) ।

२. सूर्यचन्द्रग्रहे देवि ! पञ्चाङ्गं नास्ति कामिनि ।
पञ्चाङ्गेन विहीनोऽपि सिद्धो भवति नान्यथा ॥ (शा० त० १२, १२१) ।

३. श्राद्धादेरनुरोधेन यदि जाप्यं त्यजेन्नरः ।
स भवेद् देवताद्रोही पितॄन् सप्त नयत्यधः ॥ ( शा० त० १२, १४०) ।

## त्रयोदशोल्लासे

### यन्त्रसंस्कारः

उल्लासविषयनिरूपणे 'संस्कारं यन्त्रराजस्य बलिदानं त्रयोदशे' इत्युक्त्या त्रयोदशोल्लासे यन्त्रस्य संस्कारो बलिदानञ्च प्रदर्शितम्। साधनाशास्त्रमिदं यन्त्र-मन्त्र-तन्त्रसमन्वितमस्ति। तन्त्र-मन्त्रविषये चाग्रे निरूपितमत्र च यन्त्राणां चर्चा क्रियते। यन्त्रपूजां विना कोऽपि देवो देवता वा न प्रसीदति।

### यन्त्रनिर्माणविधिः

उत्तममध्यमाधमभेदेन यन्त्रं त्रिविधम्। तदनुसारं हि सुवर्णरजतताम्रमयञ्च तद् भवति। ताम्रमयं यन्त्रं लक्षगुणं, राजतं कोटिगुणं, सौवर्णञ्चानन्तगुणं फलति, तथैव स्फाटिकमपि ज्ञेयम्। यन्त्रं तदेकतोलं, द्वितोलं, त्रितोलं, चतुस्तोलं, पञ्चतोलं, षट्तोलं, सप्ततोलं, पलप्रमाणकं वा मन्त्रदैवतयोरनुसारं प्रकल्पनीयं शास्त्रानुसारं निर्मापनीयञ्च भवति। अथवा अनुष्ठातृदेवस्य यथारूपवर्णां प्रतिमां विधाय मूलमन्त्रमुच्चारयन् उत्तमं यन्त्रमालिखेत्। प्रतिमायामेव सुवर्णेन कुशेन वा यन्त्रमुल्लिखन् मन्त्री साधनेन प्रसीदति।

### यन्त्रसंस्कारः

येनैव विधिना मन्त्रस्य संस्कारस्तेनैव यन्त्रस्यापि इति कृत्वा देवतामर्चयेत्। यन्त्रमन्त्रौ असंस्कृतौ सन्तौ रोगशोकभयप्रदौ कथितौ। दशधा मन्त्रसंस्कारवद् यन्त्रसंस्कारोऽपि तथैव कुर्यात्। तत्रादौ चक्रराजं विनिर्माय मध्यमोत्तमविधिना वा प्रतिष्ठां विधाय स्नात्वा गुरोरादेशात्संकल्पं कुर्यात्। गुरोर्वरणं वस्त्रालङ्कारैर्विधाय भूतशुद्धिन्यासादीन्निर्वर्त्य शिवमन्त्रेणान्यमन्त्रेण वा पञ्चगव्यमभिमन्त्र्य प्रणवमुच्चारयन् यन्त्रे विनिःक्षिपेत्, यन्त्रञ्च समुद्धृत्य भाजने स्थापयेत्।

ततः पुष्पतोयेन, शङ्खजलेन, चन्दनतोयेन वा चक्रं ( यन्त्रं ) अभिषिच्य पुनर्नारिकेलोदकैः, सर्वौषधिजलैः, पञ्चामृतैः, पञ्चगव्यैश्च स्नापयेत्। एतत्सर्वमत्युष्णैर्न स्यात्।

पञ्चामृतं हि गोः घृतदधिदुग्धशर्करामधुयुतं स्यात्। कियत्परिमितञ्च

किं स्यादिति जिज्ञासायामुच्यते—'पञ्चामृतमिदं ख्यातं प्रत्येकं तु जलं पलम्'[१] इति।

## पञ्चगव्यम्

पञ्चगव्ये दुग्धं पलमात्रं गोमूत्रञ्च तावदेव, घृतं तथैव, गोमयं तोलकद्वयम्, प्रसृति-( पसर इति भाषायां ) मात्रं दधि, एतान्येव सम्मेल्य प्रामाणिकं पञ्चगव्यं निर्मेयम्। अथवा सर्वेषां समानभागं वा सम्मेल्य पञ्चगव्यमिष्यते। यन्त्रानुष्ठानकाले षड्रात्रमतिक्रान्ते यन्त्रं दधिस्नानेन वर्जयेत्। संवत्सरान्तेऽऽज्यं त्यजेत्। षड्मासान्तमेव माक्षिकम्, अन्यत्सर्वं संवत्सरान्ते परित्यजेत्।

देवानां प्रतिमा घृताभ्यङ्गेन प्ररोचनीयाः, एतदर्थं प्रत्यहं सप्तपलं घृतं व्यवस्थापनीयम्। स्नाने चाष्टोत्तरपलं तद्देयम्। महास्नाने ( पर्वसु ) च द्वे सहस्रे पलानि व्यवस्थापनीयानि। इदञ्च पलं(मानप्रमाणं) लौकिकैर्मानैः साष्टरत्तिद्विमासकं तोलकत्रितयं स्यात्। महास्नाने पञ्चगव्यमेकपलमेवेष्टम्, नित्यस्नाने च तदर्द्धकमेव प्रशस्यम्।

उपर्युक्तविधिरनुष्ठान-साधनसम्पन्नानां कृते व्यवस्थापितः। ये खल्वशक्ताः कृच्छ्राश्च, तेभ्यः स्वल्पमपि तत्प्रशस्यं स्यात्। एवं सर्वं स्नापयित्वा स्वर्णपीठे यन्त्रं ( देवप्रतिमां वा ) प्रतिष्ठाप्य तस्माद् वर्णानुद्धृत्य नाभेरूर्ध्वं संस्थापयेत्। तत्रैव पीठपूजां विधाय अर्घ्यपात्रादिकं चार्चयित्वा कुशाग्रेण यन्त्रं स्पृष्ट्वा यन्त्रराजं गायत्रीमन्त्रेणाभिमन्त्र्य[२] आवाहनीसन्निधापनीसम्मुखीकरणीपरमीकरणीधेनुभिः पञ्चमुद्राभिर्देवतामावाह्य प्राणस्थापनं कृत्वा नाम्ना देवतां प्रतिष्ठाप्य स्वकल्पोक्तक्रमेण यथोपचारैः संपूज्य, देवतापरिवारांश्चार्चयित्वा जपमष्टोत्तरशतं सहस्रं वा कुर्यात्। ततो बलिदानं कृत्वा चक्रराजं ( यन्त्रराजं ) प्रणमेत्। ततः शतमष्टोतरं जुहुयात्। आहुत्यन्ते यन्त्रराजे हुतशेषं द्रव्यं विनिःक्षिपेत्। पूर्णाहुतिं प्रदाय अभिषिच्य च गुरवे पुष्कलां दक्षिणां दद्यात्। तन्मन्त्राभिषिक्तं यन्त्रं सर्वेषां सिद्धिदायकं भवति। अन्ते संहारमुद्रया देवताया विसर्जनं कुर्यात्। एवं हि

---

१. शाक्ता० त० (१३, १९३)।

२. प्रणवं यन्त्रराजाय विद्महे तदनन्तरम्।
महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात्॥ (शा० त० १३, ३०)।

तस्य यन्त्रस्य गोपनीयतया अर्चनं कर्तव्यम् । तस्य प्रचारेण सिद्धिर्निष्फलतामधिगच्छति ।

यन्त्रस्य ग्रहणकाले यदि मेघगर्जनं, शङ्खध्वनिः, उल्लूकध्वनिश्च श्रूयते, तदा सिद्धिरवश्यं भवति । तथा च अयने, विषुवे, चन्द्रसूर्यग्रहणेषु च यन्त्रमन्त्राणां ग्रहणं शुभदं भवतीति ।

## बलिदाने बलिपदार्थः

**बलिशब्दार्थः**—'बलनं बलिः' इति व्युत्पत्तिः । 'बल दाने' 'संवरणे' वेति धातोरौणादिके 'इन्' प्रत्यये बलिशब्दसिद्धिः । 'बलिर्दैत्योपहारयोः' इति हैमकोश-(२।५१२) प्रामाण्यात्पञ्चयज्ञेषु भूतयज्ञेनास्य व्यवहारः ।

अथ को बलिपदार्थ इति प्रश्ने नरः, छागः, मेषः, महिषः, शशकः, शल्लकी, शूकराश्चेति उत्तरम्[1] । एत एव बलिपदार्थाः सर्वत्र शास्त्रेषु प्रतिष्ठिताः ।

## नरबलिः राज्ञामेव

नरबलेरधिकारो राज्ञामेव, नान्येषाम् । ब्राह्मणेन सिंहव्याघ्रनरबलिर्न देयाः, यदि दीयते चेत्तदा नरकावाप्तिः । कीदृशो बलिः स्यादित्युत्कण्ठायामुच्यते—युवा, व्याधिहीनः, सुश्लोकः, लक्षणान्वितः, सर्वावयवसम्पन्नश्च सुशोभनो बलिपदार्थः स्यादिति । तथा च युवानं सुन्दरम्, श्यामम्, क्षतविक्षतदोषरहितञ्च बलिपदार्थं स्नापयित्वा पुष्पचन्दनैः सिन्दूररक्तमाल्यैश्च संभूष्य उत्तराभिमुखो बलिः पूर्वाभिमुखमात्मानञ्च कृत्वा स्ववामे चानीय संप्रोक्षणं विधाय अर्चयित्वा तत्तदङ्गेषु देवानावाह्य पूजयेत् । मन्त्रं पठित्वा[2] देवीमुद्दिश्य आत्मनः कामञ्चोद्दिश्य खड्गस्याग्र-मध्य-मूलञ्च सम्पूज्य तं संस्तुत्य 'आं हुँ फट्' इति मन्त्रेण बलिं छेदयेत् ।

ततश्च बलेः रुधिरं तोयसैन्धवसत्फलैरुपेतं मधुगन्धपुष्पैर्मण्डितं च कृत्वा मूलमन्त्रमुच्चरन् प्रणवपुरस्सरं वाग्भवं ( ऐं ) लक्ष्मीं ( ह्रीं ) कौशिकीं

१. नरश्च्छागस्तथा मेषो महिषः शशकस्तथा ।
शल्लकीशूकरश्चैव बलयः परिकीर्तिताः ।। ( शा० त० १३, ५७ ) ।

२. महातपोभिर्ज्ञानैश्च यज्ञैर्यत् साध्यते नृभिः ।
तन्मे देहि महाभाग । सत्वरं चाप्नुयां श्रियम् ।। ( शा० त० १३, ६७ ) ।

( क्लीं ) इत्युच्चार्य 'रुधिरेणाप्यायतामि'त्युच्चरेत् । ततो दीपं प्रज्वाल्य ताम्बूलमर्पयेदिति ।

नरस्य रुधिरं देव्या दक्षिणभागे, छागस्य वामे, महिषस्य पुरोभागे, देहशोणितं दक्षिणतो वामे वामतश्चाग्रे दद्यात् ।

एवं हि बलिदानावसरे बलेर्दन्तानां ध्वनिर्यदा 'कटकटा' इति भवति, तदा सर्वविधममङ्गलं भवति । अश्रुदर्शने चापि हानिरेव । बलेः शिरो यदि छेदनानन्तरं पूर्वोत्तरे पतति, तदा सर्वसम्पत्करं भवति । एवं ईशानाग्निकोणयोर्मध्यभागे तथा सति, स्वल्पेन कालेन सिद्धिः कथनीया । यदि बलेः शिरो दक्षिणे वायव्ये नैर्ऋत्यां वा दिशि पतति, तदाहानिरवश्यं ज्ञेया ।

## बलेर्दीपदानम्

बलिं दत्वा तस्य शिरसि दीपदानस्यातीव महत्त्वं तत्र तत्र शास्त्रे प्रतिपादितम् । अत्र ग्रन्थेऽपि यावद् बलेः शिरसि दीपं प्रज्वलति, तावत्स्वर्गे स्थितिरिति[1] उक्त्या दीपदानस्य फलं न तिरोहितम् । किञ्च, बलेः शिरसि लोमदाहोद्भवेन गन्धेन देवी प्रसीदति । तस्माद्दीपपात्ररहितो हि ( शिर एव पात्रं प्रकल्प्य ) दीपश्चतुर्वर्गदायको भवति ।

## बल्यतिरिक्ते हिंसायां दोषः

'वैदिकी हिंसा हिंसा न भवति' इत्युक्त्या वेदविहितायां बलेर्हिंसायामदोषात्तान्त्रिकार्चनेऽपि बलेर्विधानाद् हिंसायां न दोषः । यो ह्यात्मार्थं हिंसामाचरति, स पशुलोमसंख्यापरिमितयुगं यावन्नरके पतति । तथा कर्तारो हिंसका घातका बधिका वा कथ्यन्ते[2] । तस्मात्पितृदैवतयज्ञेषु शास्त्रोक्ता हिंसा युक्ता ।

यद्यपि उपर्युक्तबलिदानं तत्र तत्र शास्त्रे उक्तम्; तथापि सात्विका बलेः प्रतीकमादाय पुष्प-फल-प्रतीकं चञ्चापुरुषं वा विधाय तत्साधयन्ति, तस्मादपि सिद्धिर्दृष्टा । तस्मात्सत्यमपि बलिदानं ( पूर्वोक्तं ) शास्त्रोक्तं परं प्रतीकमादाय कार्यसिद्धिर्दर्शनात्तदेवाद्यत्वे युक्तमुत्पश्यामः ।

---

१. शीर्षोपरि ज्वलद् दीपो यावत्कालं प्रवर्तते ।
तावत्कालं वसेत्स्वर्गे तस्माद् यत्नेन दापयेत् ।। ( शा० त० १३, ८६ ) ।

२ अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादिताष्टौ च घातकाः ।। ( शा० त० १३, ९० ) ।

## चतुर्दशोल्लासे

### उपचारभेदाः

'उपचारादिदानजं फलं' चतुर्दशोल्लासे प्रदर्शितम्। उपचारैर्विना पूजायां देवताप्रसादाभावादुपचारैराराधनमावश्यकम्। आदौ अष्टादशोपचाराः सर्वोत्तमाः, षोडशोपचाराश्चोत्तमा इति केचित्। केचन दशधैवोपचारा इति प्रवदन्ति। अन्ये पञ्चोपचारा एव सर्वोत्तमा इति संगिरन्ते।

### अष्टादशोपचारविधिः

देवानामुपासना अष्टादशोपचारैः कर्तव्या इति प्रत्यपादयिषया आसनं, स्वागतं, पाद्यं, अर्घ्यं, आचमनं, स्नानं, वासः, उपवीतं, सर्वाङ्गे भूषणानि, गन्धं, पुष्पं, धूपं, दीपं, नैवेद्यं, दर्पणं, माल्यं, अनुलेपनं, नमस्कारविसर्जनञ्चैते उपचारास्तन्त्रेषु प्रतिपादिताः।

### षोडशोपचारविधिः

षोडशोपचारविधौ आसनं, स्वागतं, पाद्यं, अर्घ्यं, आचमनीयकम्, मधुपर्कः, आचमनं, स्नानं, वसनं, आभरणानि, गन्धं, पुष्पं, धूपं, दीपं, नैवेद्यं, वन्दनञ्चैते उपचाराः प्रकीर्तिताः।

### दशोपचाराः

अष्टादशषोडशोपचारैर्हीनानां दशधोपचारैर्देवा आराधनीयाः। स च दशधोपचारो यथा—पाद्यं, अर्घ्यं, आचमनीयम्, मधुपर्कः, आचमनं, गन्धं, पुष्पं, धूपं, दीपं, नैवेद्यमिति।

### पञ्चोपचारविधिः

लाघवात् सर्वसुलभाच्चाराधकेषु पञ्चोपचारपूजा सर्वत्र प्रतिष्ठामधिगता। तत्र तत्रोपचारेषु एष एव पन्था व्यवहारपथमधिरोहति। तथा च गन्धं, पुष्पं, धूपं, दीपं, नैवेद्यानि इति पञ्चोपचारे योज्यानि। एभिरुपचारैराराधिता देवा आशु एव फलसाधका भवन्तीति।

**पाद्यम्**—पादप्रक्षालनार्थमानीतं जलं पाद्यमिति[1]। तथा च कोशः—'पाद्यं पादाय वारिणि' इति। पादार्घाभ्यां यत्। पादायेदम् इति। तच्च

---

१. पाद्यार्थमुदकं पाद्यम्—(शा० त० १४, १०)।

जलं चन्दनागुरुश्यामदूर्वाब्जसहितं सद् विष्णुक्रान्ताभिधं सर्वत्र योग्यम्। पाद्यमेतत् पात्रे एव प्रदातव्यमन्यथा क्रियाया निष्फलत्वात्पत्तिः।

**अर्घ्यम्**—'अर्घ्यमर्घार्थे'। अर्घाय इदम्। 'पादार्घाभ्यां यत्' इति यत् प्रत्ययः। 'मूल्ये पूजाविधावर्घः' इत्यमरकोशरीत्या 'अर्घार्थे आनीतं जलमर्घ्यमिति कथ्यते। तथा च रक्तबिल्वाक्षतपुष्पदधिदूर्वातिलजलैः पूरितं जलमर्घ्यं सर्वदेवानां कृते ग्राह्यमुक्तम्[१]। एतच्चार्घ्यं पात्रे एव परिदापयेत्। यदि दधिदुग्धानामभावस्तदा एतन्मानसमेव दद्यात्। किञ्चास्मिन् जले अन्तः शून्यास्त्रिपर्णा दूर्वाऽपि प्रयोज्या। तच्च पात्रे एव निवेदयेत्।

**आचमनीयम्**—'चमु अदने' इति धातोर्ल्युट् प्रत्यये कृते 'आचम्यतेऽम्भोऽत्र' इति व्युत्पत्तिः। आचमनीयं जलं जातीलवङ्गकङ्कोलमिश्रितं स्यात्। अथवा सुगन्धशुभैः सलिलैराचमनीयं दद्यात्। एतच्च जलं तैजसेन ताम्रादिपात्रेण देयमाहोस्वित् शङ्खेनेति। तथा च सुगन्धं फेनवर्जितं यदुदकं देवेभ्यो दीयते, तदाचमनीयं जलमुच्यते लोके[२]।

**मधुपर्कः**—नारिकेलजलं शर्करादधिघृतयुतं मधुपर्कः स्यादित्युक्तम्। अथवा घृतदधिमधुसमानं स्वल्पं मानं मधुपर्क इति कथ्यते। अयं हि शोभनेन कांस्यपात्रेण देयो भवति। नारिकेलोदकं कांस्यपात्रेऽदेयम्; किन्तु विशेषविधानात् ताम्रपात्रे चरुपाके दोषाभावात्तद् दाने न दोषः। तच्च कांस्यपात्रमष्टाङ्गुलमानेन न्यूनं न स्यात्, अन्यथा दोषप्रसङ्गः।

**गन्धः**—'गन्धयतीति गन्धः'। 'गन्ध अर्दने' इति चुरादिधातोरच् प्रत्यये शब्दसिद्धिः। 'गन्धः सम्बन्धलेशयोः। गन्धकामोदवर्गेषु' इति कोशप्रामाण्याद् आमोदको गन्धः। गन्धस्तत्तद् चन्दनोद्भवस्तथापि मलयोद्भवो गन्धजातीषूत्तमः। तस्मान्मलयोद्भव एव गन्धः सर्वत्र ग्राह्यः। अयं गन्धो देवोभ्यो मध्यमानामिकाङ्गुष्ठाग्रेण मूलमन्त्रमुच्चरन् समर्पयेत्।

**पुष्पम्**—'पुष्प्यतीति पुष्पम्'। 'पुष्प विकसने' इति धातोरच् प्रत्यये रूपम्। 'पुष्पं विकास आर्तवे। धनदस्य विमाने च कुसुमे नेत्ररुज्यम्'

१. रक्तबिल्वाक्षतैर्पुष्पैर्दधिदूर्वातिलैर्जलैः।
सामान्यतः सर्वदेवानां अर्घोऽयं परिकल्पितः॥ (शा० त० १४, ११३)।

२. उदकं दीयते यद् यत् सुगन्धं फेनवर्जितम्।
आचमनीयकं देव्यै तदाचमनमुच्यते॥ (शा० त० १४, १४२)।

इत्यादि कोशप्रामाण्याद् विकासार्थे पुष्पशब्दस्य प्रयोगः। सर्वासु पुष्पजातिषु रक्तं पुष्पं शस्तम्। एतच्च पुष्पं सर्वत्र देव्या आराधनासु युक्तं सद् देवीप्रीतिकरं सर्वकामफलप्रदञ्चोक्तम्। रक्तपुष्पं, स्वर्णादिनिर्मितं पुष्पं, रक्तकमलं, वज्रं, कृष्णा, अपराजिता इत्येतानि पुष्पाणि सर्वथा प्रशस्तानि। करवीरपुष्पं ( कनेर इति भाषायां ) ब्रह्मविष्णुगणेशाम्बिकासूर्यदेवपूजासु प्रशस्तम्। एतस्य पञ्चदलेषु पञ्चदेवाः प्रतिष्ठिताः[1]।

महादेव्याः करवीरापराजिताजवापुष्पैरर्चनं सर्वतो विशिष्टं प्रकृष्टतरं च वेदितव्यम्। एतैः पूजनैः कोटिपूजासमं फलं ग्रन्थे वर्णितम्। एषु पुष्पेषु मूले विष्णुर्मध्ये ब्रह्मा अग्रे च रुद्रो वसति। यदेदं पुष्पं वृक्षे विकसितं, तदा तस्य पश्चिमदले विष्णुः, उत्तरे गणनायकः, ऐशान्यां सूर्यदेवः, पूर्वे ब्रह्मा, दक्षिणे मुक्तिदायिका कालिका, मातरश्च निवसन्ति। यथा जवापुष्पन्तथैव करवीरपुष्पमपि माहात्म्ययुक्तं ज्ञेयम्। करवीरजवापुष्पे च शुभ्ररक्तहरितकृष्णभेदसहिते सदाऽऽनन्ददायके भवतः। गङ्गादीनि सर्वतीर्थानि जवापुष्पस्य बिन्दुगह्वरे तिष्ठन्ति। तन्मध्ये महाकुण्डलिनीयुतं शिवलिङ्गं स्थितम्। इमे हि पुष्पे शिवशक्तिमये चतुर्वर्गफलप्रदे च स्तः। यदि सर्वाणि पुष्पाणि संयुक्तान्यपि स्युस्तदा जवाब्जपारिजातकैः समानानि न भवन्ति। यत्र च जवाऽपराजिताकरवीरपुष्पाणि भवन्ति, तत्र ब्रह्मविष्णुमहेश्वरा देवा निवसन्ति। एतेषु पुष्पमूलेषु गङ्गादिसर्वतीर्थानि वसन्ति। तेन तन्मूलं येन सिञ्चितं तेन सर्वदेवतास्तीर्थानि च पूजितानि। एवं च अपराजिता-मल्लिका-उत्पल-शमी-पुन्नाग-चम्पक-अशोक-कर्णिकार-द्रोण-करवीर-जवापुष्प-कुङ्कुम-नागकेशरपुष्पाणि यो देव्यै समर्पयति, सः परमं पदं लभते। किञ्च, चराचराः सकला देवाः पुष्पवशा एव कथिताः।

अरण्यसम्भूतैः पुष्पैर्गिरिसमुद्भूतैः पत्रैर्निश्छिद्रैरपर्युषितैः प्रोक्षितैर्जलवर्जितैरात्मारामोद्भवैश्च यो देवीमर्चयेत्तस्य सा सदा प्रसन्ना सती भुक्तिमुक्ती प्रयच्छति। तथा च परारोपितपुष्पैरनुज्ञां विना यः पुष्पाणि नयति, अर्चाञ्चाचरति, तस्य सर्वाः क्रिया निष्फलाः। क्वचित्तु 'देवार्थे कुसुमस्तेयमस्तेयं मनुरब्रवीत्' इति वचनादनुज्ञां विनाऽपि पुष्पग्रहणे न दोषः। अनुज्ञा हि साक्षात्स्वामिपरा।

---

१. पञ्चदेवाः पञ्चदले सदा तिष्ठन्ति नान्यथा। (शा० त० १४, २४½)।

## पुष्पपत्राणि कदा पर्युषितानि

आराधनासु देवानां प्रीतिरिष्टा। सा चेष्टवस्तुभिः साधनैश्चावाप्यते। तत्र पत्रपुष्पफलजलानि सर्वाण्यप्यपर्युषितान्येव ग्राह्याणि, परं गंगातोयं, बिल्वपत्रं, तुलसीदलं, कमलपुष्पादीनि च पर्युषितान्यपि शास्त्रोक्तत्वाद् ग्राह्याणि[1]। तत्र पद्ममामलके दिनत्रयं शुद्धे। करवीरं च दिनैकम्। सितं कुमुदं रक्तमब्जञ्च पञ्चदिनं यावत् शुद्धमेव। अन्येषु पुष्पेषु गन्धविपर्ययं यावत् शुद्धिस्तिष्ठति।

पुष्पाणि, पञ्चगव्यं, उपचारसामग्रयश्चाघ्राय देवतायै न विवेदनीयाः, तथा सति नरकावाप्तिः कार्यहानिश्च जायते।

## त्याज्यपुष्पाणि

अङ्गस्पृष्टाघ्रातपर्युषितानि च पुष्पाणि पूजोपचारेष्वयुक्तानि। एवञ्च केशकीटापविद्धशीर्णान्यपि ज्ञेयानि। तथैव स्वयं पतितोपहृतानि कृमिभक्ष्य-भग्नान्यपि पुष्पाणि त्याज्यान्येव।

शेफाली-बकुलपुष्पाणि शीर्णानि स्वयं पतितान्यपि ग्राह्याण्येव[2]। तमाल-पद्मयोरपि पुष्पाणि छिन्न-भिन्नान्यपि प्रशस्तानि। भुवि पतितं स्वयं विकसितञ्च पुष्पं त्याज्यमेव भवति।

विष्णुक्रान्ता ( अपराजिता ) जवानागकेशरनागवल्लभ( नागचम्पक ) बन्धूकमन्दारपुष्पाणि सवृन्तानि चार्चने शस्तानि।

---

१. अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम्।
अवर्ज्यं बिल्वपत्रं स्यादवर्ज्यं जलजं तथा॥

× × ×

बिल्वपत्रं च माघ्यं च तमालामलकीदलम्।
कह्लारं तुलसीपत्रं पद्मं च मुनिपुष्पकम्॥
एतत्पर्युषितं न स्याद् यच्चान्यत् कलिकात्मकम्॥
(शा० त० १४, ४३-४४-४५, १२)।

२. स्वयं पतितपुष्पाणि त्यजेदुपहृतानि च।
शेफाली बकुलं चैव स्वयं शीर्णं न दूष्यति॥ (शा० त० १४, ५१)।

### माघमासे विशेषपुष्पाणि

माघे द्वादशसंख्याकानि पुष्पाण्येवार्चनेषु प्रशस्तानि। तानि च कुन्द-कुरुबकझिण्टी (पीतकटसरैया) केतकनिचुलनीलविकटशीर्षभृङ्गराज-क्षुद्रकबकुलरङ्गनानि। एतान्येव पुष्पाणि माघमासे पूजाऽर्चायोग्यानि। तानि देवविशेषेभ्य आहृत्य यथायोग्यान्यर्पणीयानि। माघमासातिरिक्तमासेषु नैतानि पुष्पाणि प्रयोज्यानि।

### देवविशेषेभ्यः प्रशस्तपुष्पाणि

अक्षतैर्विष्णुं, तुलसीपत्रैर्विनायकं, दूर्वया दुर्गां, बिल्वपत्रैर्दिवाकरं च नार्चयेत्। दुर्गायाः कृते श्वेतदूर्वायास्त्यागो नान्यासां दूर्वानाम्। श्वेतदूर्वा-नीलकण्ठकुरुण्टकरक्तमाघीपुष्पाणि दुर्गायै न देयानि। पुष्पाभावे पत्रैरर्चनं, पत्राभावे च तत्फलैस्तदभावे चाक्षतैः, सर्वाभावे च जलैरेव पूजनमवश्यं कर्तव्यम्। पूजाया लङ्घनं न कदापि स्वेष्टसाधकेन कर्तव्यम्। एवं हि शिवे कुन्दं, हरये उन्मत्तं, देवीभ्योऽर्कमन्दारौ, सूर्याय तगरं च यत्नतो विवर्जयेत्। सूर्याय तगरमित्यत्र काष्ठतगरं बोध्यं, नान्यत्।

आत्मनः कल्याणकामेन साधकेन बकुलमालतीजातीकुन्दशेफालिका-जवाश्च शिवाय नैवार्पणीयाः।

चण्डिकार्चनार्थं मालतीमल्लिकाजातीयूथिका (जूही) माधवी (चमेली) तगरकर्णिका (कठचमेली) द्रोणकमलकदम्बकेतकीवनमालाकुसुम्भकिंशुक-कह्लारबकुललवङ्गनागकेशरपुष्पाणि प्रयोक्तव्यानि। जवापुष्पदूर्वाबिल्व-पत्रैर्विना देव्यर्चनं न प्रशस्यते।

### दूर्वातुलस्योर्वैशिष्ट्यम्

दूर्वा सर्वपुष्पमयी निगदिता। अतः पुष्पाभावे दूर्वादलं, सर्वगन्धाभावे च तुलसीदलं प्रयोक्तव्यम्[1]। तुलसीं विना स्नानयज्ञश्राद्धादयः सर्वाणि निष्फलायन्ते। सर्वकर्माणि निष्फलानि न स्युरिति कृत्वा दूर्वा-तुलसीदलञ्च सर्वपूजाकर्मसु युज्यते। किञ्च, सुन्दरीभैरवीकालीब्रह्मगणेशसूर्योपासनादिषु सर्वत्रैव तुलसी ग्राह्या, अन्यथा सा पूजा विफला सती मनोरथं न साधयति। सावित्रीभवानीदुर्गासरस्वतीनामर्चनं तुलसीदलमण्डितं सन्मनोरथदं भवति।

---

१. तस्माद् दूर्वा ग्रहीतव्या सर्वपुष्पमयी हि सा।
देवेभ्यः सर्वगन्धाढ्यमभावे तुलसीदलम्॥ (शा० त० १४, ६६)।

इदं हि विशेषतोऽवधेयं यदासां शक्तीनामर्चनं रात्रौ स्यात्तदा तुलस्या अर्चनं न कर्तव्यम्, यतो हि तदा तुलसीगन्धघ्राणमात्रेण चण्डिका क्रुद्धा भवति। तुलसी सर्वदेवमयी ब्रह्मरूपा सती गणपतये ग्राह्या नोक्ता। लक्ष्मीतारा-देव्योरर्चनेऽपि नैषा प्रशस्या। अङ्गुष्ठतर्जनीयोगेन मूर्तेर्दक्षिणभागे पुष्पपातनं कर्तव्यम्।

एवञ्च पुष्पपत्रफलानामधोमुखमर्पणं न युक्तम्, तस्मादेतानि यथोत्पन्नानि तथैवार्पणीयानि। एतस्य विचाराभावः पुष्पाञ्जलौ न भवतीति विशेषः।

## पुष्पग्रहणे नियमः

स्नानान्ते पुष्पचयनं न विहितम्। ये खलु स्नात्वा पुष्पचयनमाचरन्ति, तानि पुष्पाणि देवाः पितरश्च न गृह्णन्ति। केचन इत्थं वदन्ति, यदेष नियमो मध्याह्नस्नानपरः, प्रातः स्नानान्ते पुष्पचयने च न क्वापि दोषः[1]। अत्र देवीदेव इति सर्वेषां कृते एतद् वचनम्। पुष्पचयनं देवपूजनञ्च वामहस्तेन न कर्तव्यं, न च वामहस्तधारितेन पुष्पेणापि।

## धूपम्

'धूप्यते इति धूपम्'। 'धूप संतापे' इति धातोरच् प्रत्ययः। देवानां प्रीत्यर्थं दशमांशत्वेन होमकर्मणि यत् प्रयुज्यते, तद् धूपमित्यत्रोक्तम्। तत्रागुरु (न गुरु यस्मादित्यगुरुः) उशीर (उश्यते इत्युशीरं, 'वश कान्तौ' इति सूत्रेणे-रन् प्रत्ययः) गुग्गुलुशर्करामधुचन्दनानि समानानि च सर्वदेवेभ्यो कृते सामा-न्येन धूपेन देयानि। दुर्गायै गुग्गुलमतिप्रिय आख्यातः। यदि स घृतयुक्तः स्यात्तदाऽतीव देवीप्रीतिकरः स्यात्। धूपपात्रमस्त्रमन्त्रेण (हुँ फट्) प्रोक्ष्य, हृदाणुना च संप्रोक्ष्य, अस्त्रेणैव घण्टां प्रपूज्य, तां वादयन् धूपस्थानं प्रपूज्य, वामया तर्जन्या तत्पात्रं स्पृशन्, जयध्वनिं प्रकुर्वन् मन्त्रेण स्वाहान्तेन धूपयेत्। तच्च धूपं मध्यमानामिकाभ्यां मध्यपर्वयोरङ्गुष्ठाग्रेण धृत्वा निवेदयेत्। एवं धूपनिवेदनेन देवी प्रसीदति। धूपं भूमौ, आसने, घटे च न क्षिपेत्, आधारपात्रे एव तत्समर्पयेत्। यथाग्निस्तथैव धूपराशिः स्यादिति।

---

१. स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं बुधः।
तत्पुष्पैरर्चयन् देवीं निरये परिपच्यते॥ (वा० त० १४, ७७)।

## दीपम्

'दीप्यतेऽनेन दीपः, दीपयति वा दीपः'। 'दीपी दीप्तौ' इति धातो इगुपधत्वात्कः, घञ्, अच् वा प्रत्ययः। दीप आरोग्यश्रीविवर्धनो नानादोषनाशकश्च। देवानां दीपनं दीपेनैवाख्यातम्। दीपो दीपपात्रस्नेहाश्च (घृतं) मिश्रीकृत्य न देयः। परमादौ कर्पूरगर्भिणीं वर्ति निर्माय सर्पिषा तिलतैलेन वा सम्मिश्रय, पात्रे आरोप्य अधस्तादुच्चैः संदर्शयेत्। दीपोत्तोलनं गायत्रीं समुच्चारयन् कर्तव्यम्। ततश्च दीपेन दशवारं नीराजनं प्रकर्तव्यम्। दीपं भूमौ न प्रदातव्यं, तथा कृते सति भूमेस्तापादधोलोकावाप्तिः स्यात्। सर्वंसहा वसुमती अकारणं पादघातं दीपतापञ्च न सहते। तस्माद् भूमौ दीपार्पणं नेष्टम्। देवार्थमुपकल्पितो दीपः स्वयं न निर्वापयेत्, यतो हि दीपहर्ता अन्धो भवति, निर्वापकश्च काण[1] इति।

## नैवेद्यम्

'निवेद्यते इति नैवेद्यम्'। देवानां प्रीत्यर्थं प्रीतिकरं यद् भोज्यं, तदेव नैवेद्यपदेनोच्यते। देव्यै तच्च नैवेद्यं कन्दुपक्वं (कन्द्यते 'कदि आह्वाने रोदने च' इति धातोर्बाहुलकाड्डुः। कं सुखं ददाति, दयते, यच्छति वा कन्दुः। मितद्रवादित्वाद् डुः), स्नेहपक्वं (घृतपक्वं), घृतसंयुक्तं पायसं मनःप्रियन्तत् नैवेद्यं देव्यै पुनः पुनर्दद्यात्। क्वचित्तु मृष्टतण्डुलपृथुकादीनि (चिपटान्नं) कन्दुपक्वान्याह। देवप्रीत्यर्थं यद् यद् वाञ्छितं तन्नैवेद्यं, किंच, बालप्रियन्तत् आत्मनोऽभीष्टमपि देव्यै दद्यात्। स्त्रीणां यत्प्रीतिकरं तन्नैवेद्यमपि भगवत्यै देयम्। अन्ते ताम्बूलं देयम्। तेन च सर्वसाधिका देवी प्रसीदति।

## प्रदक्षिणम्

प्रकृष्टतो दक्षिणे ईक्षणमिति प्रदक्षिणम्। प्रदक्षिणाया महत्त्वं न तिरोहितं साधकेभ्यः। एतच्च प्रदक्षिणमेकवारं द्विवारं वा दक्षिणतो देवानां कर्तव्यम्। प्रदक्षिणेन देवानां वेष्टनं विधाय दण्डवत् प्रणमनीयम्। प्रदक्षिणमेतत्त्रिधाऽपि एतेनैव विधानेनाचरितव्यम्।

चण्डिकार्चने एकम्, रवौ सप्त, गणाधिपे त्रीणि, विष्णवे चत्वारि, शिवपूजने चार्धप्रदक्षिणं तत्त्रिकोणाकारमेव कर्तव्यम्। आदौ

१. दीपहर्ता भवेदन्धः काणो निर्वापको भवेत्।
न तेन व्यवहारोऽपि कर्तव्यः साधकोत्तमैः॥ (शा० त० १४, ९४)।

दक्षिणाद्वायव्यकोणं गत्वा ततः परावर्त्य पुनः सम्मुखे सति त्रिकोणाकृतिः सम्पद्यते। प्रदक्षिणकृतस्त्रिकोणोऽयं नमस्कारस्त्रिपुराप्रीतिवर्द्धनत्वेनात्र प्रतिपादितः। तथैव तारादेव्या अपि। कर्मणा मनसा च दक्षिणत एव प्रदक्षिणमिष्टम्। इदं प्रदक्षिणन्निखिलदेवप्रसादकं भवति, तन्न त्याज्यं कदापि।

देवान् पश्चात् कृत्वा प्रादक्षिण्येन योऽर्चयति, तस्य समग्राराधनफलं विनश्यति परलोके दुःखञ्चावाप्यते[1]।

**प्रणामः**

'णमु प्रणामे', 'णम प्रह्वत्वे' वा धातोः 'प्रणमनं प्रणाम इति। प्रकृष्टं नमनं यत्रासौ प्रणाम इति। कायिकवाचिकमानसभेदेन प्रणामस्त्रिविधः। तेषु कायिकः सर्वोत्तमः। कायिकप्रणामेन देवा नित्यशस्तुष्यन्ति। कायिकः प्रणामो यथा—जानुभ्यामवनिं स्पृश्य शिरसा मेदिनिं च स्पृश्य यो नमस्कारः क्रियते, स कायिक[2] इति। तथा च मध्यमाधमाष्टाङ्गपञ्चाङ्गभेदैः प्रणामस्यान्ये भेदा अपि संगच्छन्ते। अष्टाङ्गप्रणामस्तु पद्भ्यां, कराभ्यां, जानुभ्यां, उरसा, शिरसा, दृशा, वचसा, मनसा च यत्र क्रियते, तत्र संगच्छते। पञ्चाङ्गप्रणामस्तु—पद्भ्यां, कराभ्यां, जानुभ्यामुरसा, शिरसा नमने सति संपद्यते। एषु प्रणामेषु अष्टाङ्गप्रणाम उत्तमः, पञ्चाङ्गप्रणामो मध्यमः। अधमस्तु यत्र करौ पुटीकृत्य यथा तथा शीर्षं दीयते, न च शीर्षजानुभ्यां अवनिस्पर्शः क्रियते, तत्राधमत्वं गच्छति। अतः स प्रणाम अधम इति। अष्टाङ्गप्रणाम एव 'दण्डवत्' इति पदेन व्यवह्रियते।

वाचिकप्रणामोऽप्युत्तममध्यमाधमभेदन त्रिधा विभज्यते। स्वयं निर्मिताभ्यां गद्यपद्याभ्यां भक्तियुता च या नतिः क्रियते, सा वाचिकी सत्युत्तमा ज्ञेया। या च नतिर्वैदिकैः पौराणिकैर्वा मन्त्रैः क्रियते, सा वाचिकी सती मध्यमा। वाचिकी सती मानुषवाक्येन या नतिः, साऽधमा इति। एतैर्भेदैः प्रणामोऽत्र ग्रन्थे निरूपितः।

---

१. पश्चात् कृत्वा तु यो देवं भ्रमित्वा प्रणमेन्नरः।
तस्येह च फलं नास्ति न परत्र दुरात्मनः॥ (शा० त० १४, १०४)।

२. जानुभ्यामवनिं गत्वा शिरसा स्पृश्य मेदिनीम्।
क्रियते यो नमस्कार उत्तमः कायिकः स्मृतः॥ (शा० त० १४, १०७)।

## आसनम्

तन्त्रोदितानुपचारान् समासतोऽत्र कथ्यते। तत्र देवानावाह्य आसनार्थं पुष्पं प्रकल्पयेत्। तत्र देवासनेषु प्रतिष्ठितेषु सत्सु देवेषु स्वागतं कुशलं वदेत्। देवस्य वामभागे मूलमन्त्रेणासनं समर्पयेत्। आसनशब्दश्च 'आस्यतेऽत्र' इत्याशनमिति विग्रहेण 'आस-उपवेशने' इति धातोर्ल्युट् प्रत्यये संपद्यते। इदञ्चासनं षड्विधम्[१]। तच्च पुष्पमयं, दारुमयं, वस्त्रमयं, चर्ममयं, कौशेयं, तैजसं च स्यात्। पाद्यं नमोऽन्तमन्त्रेणाचमनञ्च स्वधेत्यादिना दद्यात्। स्वधान्तेनैव मधुपर्कोऽपि, हृन्मन्त्रेण स्नानगन्धे, पुष्पाणि च वौषडित्यन्तेन दद्यात्।

सर्वाङ्गे स्नानं, प्रोक्षणं, वस्त्रं, नैवेद्यमाचमनीयकं सर्वालङ्करणं, सर्वाङ्गें, चन्दनं, शिरसि पुष्पं, नमोऽन्तकमन्त्रेण धूपदीपौ (धूपं दक्षिणतो दीपश्च वामतः), पुनर्भोज्यं नैवेद्यं, ततो सर्वनिवेदनमिति कृत्वा देवानर्चयेत्। एवं विधेनार्चनेन देवा देव्यश्च प्रीतिमाप्नुवन्ति।

## पूजासम्भाराच्छादनम्

पूजार्थे उपकल्पितं सर्वमपि वस्तुजातमाच्छादनैराच्छादयेत्। देवानां देवीनाञ्चावाहनं यावन्नं भवेत्, तावदेतदाचरणीयम्। निराच्छादनके सति सर्वं तद्राक्षसाः प्रतिगृह्णन्ति।

## नैवेद्यनिवेदनविधिः

देव्यै नैवेद्यमसंस्कृतंन देयम्। नैवेद्यं देव्याः पुरतो निधायार्घ्यवारिणा च सम्प्रोक्ष्य अस्त्रमन्त्रेणाभ्युक्ष्य धेनुमुद्राञ्च प्रदर्श्यं नैवेद्यस्योपर्यष्टवारं मूलमन्त्रं प्रजप्य चक्रमुद्रया तद्रक्षणं सुरक्षितं विज्ञाय 'यं' इति मन्त्रेण दीपं संशोध्य 'रं' मन्त्रेण तं प्रज्वालयेत्। 'वं' इति मन्त्रेणामृतं प्रकल्प्य 'ठं' मन्त्रेण प्लावनं कुर्यात्। एवं संस्कारः सर्वत्रैव भक्ष्यद्रव्यदेवार्पणेषु कार्यः। अन्ते च 'अमृतोऽपस्तरणमसि स्वाहे' ति मन्त्रेण जलं समर्पयेत्। ततश्च ॐ इदमन्नं सोपकरणं महादेव्यै 'स्वधा' इत्युच्चार्य देव्या वक्त्रे भोजनमुद्रया हुनेत्। इत्थं पञ्चग्रास-

---

१. पौष्पं दारुमयं वास्त्रं चार्मं कौशं च तैजसम्।
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम्॥
(शा० त० १४, ११७)

मुत्थाप्य देवीदेवयोश्च प्रतिमायां (आवाहनपुष्पे पत्रे वा) 'ॐ अमुकोदेव्ये नमः, एतद् भक्ष्यं निवेदयामि' इत्युक्त्वा दक्षिणे वामे वा पञ्चग्रासमुद्राः प्रदर्शयेत् ।

एवं क्षणं विरम्य भोजनस्वीकृतिं मत्वा तावन्मूलमन्त्रं जपेत् । ततो मूलमन्त्रपुरस्सरं 'एतज्जलं अमृतापिधानमसि स्वाहे' ति मन्त्रेण जलं दद्यात् । ततो मुखं प्रक्षाल्य ताम्बूलं समर्पयेत् । आचमनीयं जलं सर्वोपचारान्ते (प्रत्युपचारान्ते) च दद्यात् ।

### द्रव्यविशेषाणां शुद्धि-(निर्माल्यता) कालः

मणिमुक्तासुवर्णताम्रपात्राणि द्वादशाब्दानि यावत्शुद्धानि । पटी (दुपट्टा इति) शाटी च षण्मासं यावच्छुद्धम् । नैवेद्यं सद्य एव । मोदकं कृषरान्नं च यामार्धं शुद्धम् । पट्टवस्त्रं त्रिमासं, यज्ञसूत्रमेकदिवसं; उष्णान्नं परमान्नं च तावत्कालमेव । पशुमस्तकं रुधिरञ्चाहोरात्रं, दधिदुग्धं च मुहूर्तमात्रं आज्यं यामैकं, करवीरपुष्पमहोरात्रं तथैव बिल्वपत्रमपि ज्ञेयम् । सार्द्धैकयामं यावद् जवापुष्पं निर्माल्यतामाप्नोति । बिल्वफलं दाडिमफलञ्च सद्य एव निर्माल्यं भवति । एतानि द्रव्याणि यथा योग्यानि समर्पितानि भुक्तिमुक्ती फलदानि भवन्तीति ग्रन्थाशयः ।

## पञ्चदशोल्लासे

### नामस्मरणादिफलम्

'नामस्मरणपूजादि फलं पञ्चदशे तथा' इति प्रतिज्ञावाक्यात् पञ्चदशेऽध्याये नामस्मरणपूजादिफलं निगदितम् । समयाचारे ह्यस्मिन् साधनाप्रधाने शाक्तमार्गे नामस्मरणादिकमवश्यमनुष्ठेयं, न च द्यूतक्रीडादिषु व्यर्थः कालो हापनीयः । साधकोऽन्तः शाक्तः बहिः शैवः सभायां च वैष्णवो भवेत् । किञ्च, विष्णुभावमाश्रित्य नित्यानुष्ठानिकः सिद्धिमधिगच्छति[1] ।

### कुलवृक्षाः

कुलवृक्षा आशुसिद्धिकरा इति तान्त्रिका आमनन्ति । अतः साधको मिलितेषु कुलवृक्षेषु प्रणामी भवेत् । के च ते कुलवृक्षा इति जिज्ञासायां

१. अन्तः शाक्ता बहिः शैवाः सभायां वैष्णवा मताः ।
सर्वदा विष्णुभावस्तु भवेत् साधकपुङ्गवः ।। (शा० त० १५, ४) ।

ग्रन्थे निरूपयति आचार्यो द्वादशकुलवृक्षा इति। तथा च ते अशोकः, केशरः, बिल्वः, कर्णिकारः, चूतः (आम्रः), नमेरुः (रुद्राक्षः), प्रियालः (वृक्षविशेषः), सिन्धुवारः (निशुन्दा), कदम्बः, मरुबकः (झिण्टिका), चम्पकः, पुनश्च बिल्वा इति।

क्वचिच्चाष्टौ पादपा एव कुलवृक्षा इत्याख्याताः। ते च श्लेष्मान्तक-करञ्जनिम्बाश्वत्थकदम्बबिल्वाशोकचम्पका इति। श्लेष्मान्तको बहेड़ा इति लोके। एषु वृक्षेषु कुलयोगिन्यः सदा तिष्ठन्ति। अतः कुलवृक्षाधो न शयीत, न चोपद्रवमाचरेत्।

एवं हि यदि संयोगेन आरामे, पर्वते, निर्जनस्थाने, शून्यमण्डपे, चतुष्पथे चोपस्थितिः स्यात्तदा तत्र क्षणं विरम्य इष्टमन्त्रं प्रजप्य प्रणम्य च यथा सुखं स्वेष्टस्थानं गच्छेत्।

## पीठस्थानकथनम्

अण्डपिण्ड, अन्तरबहिर्भेदाभ्यामुपासनं न्यासश्च द्विविधो ज्ञेयः। समग्रेयं सृष्टिस्त्रिकोणात्मिका। निखिलानि पीठानि, ज्योतिर्लिङ्गानि च त्रिकोणेष्वेवावस्थितानि। अतस्त्रिपुराया आराधनाय तत्र त्रिकोणात्मकं श्रीचक्रं (श्रीयन्त्रं) सम्पद्यते। तन्निमित्तकमेव पीठनिरूपणं तत्र तत्र शास्त्रे दृश्यते। अत्र ग्रन्थे पीठनिरूपणं कुर्वन्नाह आचार्यः—महापीठेषु कामरूपवाराणसी-नेपालपौण्ड्रवर्धनपुरस्थिरचरस्थिरपूर्णशैल-अर्बुदान्यष्टौ पीठान्युक्तानि। पीठेषु च काश्मीर-कान्यकुब्ज-आम्रातकेश्वर-एकाग्रत्रिस्रोत-कैलास-केदार-श्रीपीठ-ॐङ्कार-जालन्धर - मानव-कुलान्त - देवमातृक - गोकर्ण-मारुतेश्वर-अट्टहास-विरज-राजगिरि-कोल्लगिरि - एलापुर-प्रणव-जयन्तिका - उज्जयिनी-क्षीरिका-हस्तिनापुर-उड्डीश-प्रयाग-षष्ठीश-मायापुर-जलेश्वर - मलय-श्रीशैल-मेरुगिरि-महेन्द्र-वामन-हिरण्यपुर-महालक्ष्मीपुर-उड्डीयान-छायापुराण्युक्तानि। एतेष्वेव पीठशरीरेषु न्यासेन षोढान्यासः सम्पद्यते। बहिर्न्यासे च जप-कर्मसु एतानि महापीठपीठानि सप्तचत्वारिंशत्संख्याकानि शस्तानि।

## विभिन्नपीठेषु जपानुष्ठानफलम्

वाराणसीपीठे जपानुष्ठानेनाशेषफलावाप्तिः, पुरुषोत्तमसन्निधौ च कृता पूजा द्विगुणफलदायिनी। एवमेव द्वारावत्यां कृतमनुष्ठानं ततोऽपि द्विगुणफल-दायकमाख्यातम्। तस्माद् द्वारावत्यां पूजा अवश्यं कार्या। किञ्च, सर्वक्षेत्रेषु,

तीर्थेषु च पूजा द्वारावतीसमैव[1]। विन्ध्ये गंगायाञ्चानुष्ठानं शतगुणमाख्यातम्। एवमेवार्यावर्ते, मध्यदेशे, ब्रह्मावर्ते, प्रयागे, पुष्करेऽपि च ज्ञेयम्। करतोया (गौरीविवाहे कन्यादानोदकाज्जाता शंकरहस्ताच्च्युता च) नदीतटे कृता पूजा ततोऽपि चतुर्गुणफलदायिनी। ततोऽपि चतुर्गुणं भैरवे नदीकुण्डे, वाल्मीकीश्वरसन्निधौ च ततश्चतुर्गुणाऽधिकेति। ततोऽपि द्विगुणिता सिद्धीश्वरीयोनौ, ततश्चतुर्गुणा च लौहित्य-(शोण) नदकुण्डके। तत्सममेवानुष्ठानफलं कामरूपे तत्रत्य जले स्थले चावाप्यते। कामरूपतीर्थन्तु देवीक्षेत्रमुच्यते। अतस्तत्सममन्यं क्षेत्रं च नाधुना विद्यते[2]। नदीकुण्डस्य मस्तके कृता पूजा ततोऽपि चतुर्गुणा, दारुके शिवलिङ्गके च कृता पूजा ततोऽपि द्विगुणा, शैलपुत्र्याः स्वयोनिषु च पूजा ततोऽपि द्विगुणा प्रशस्यते। कामाख्यायोनिमण्डले ततः शतगुणं प्रोक्तम्। यदि सकृदेव कामाख्यायां महामायापूजनमाचरेत्तदा तत् शतगुणं भवति। तच्च पूजनमिह कामप्रदं परत्र च शिवरूपतासाधकं भवति।

एवं ह्युपर्युक्तेषु तीर्थेषु यदि दैवात्पूजनमनुष्ठानं च क्रियते साधकैस्तदा, तेषां सर्वतः सिद्धिर्भवति। एवञ्चात्रैकं रहस्यमपरमपि वेदितव्यम्। तच्चेत्थम्, स्त्रीसमीपे कृता पूजा कामरूपादपि शतगुणाधिका भवतीति[3]।

तान्त्रिकाणामियं परम्परा यद् शिवलिङ्गं, श्मशानं, योषितामपि समूहं, रक्तवसनां नारीं च दृष्ट्वा भक्तितो वन्देत। एवमेव गृध्रं, महाकालीं, जम्बुकीं, यमदूतिकां, कृष्णां मर्जारीं, मुकाकं, श्येनं, क्षेमकरीं, कुररं च दृष्ट्वा मन्त्रं पठन्[4] नमस्कुर्यात्। एवमेव पितृभूमिं दृष्ट्वा प्रणमेत्, मन्त्रं च पठेत्। तथा कृते सति मन्त्री सुखमाप्नुयात्। तथैव रक्तवस्त्रं, रक्तपुष्पं च दृष्ट्वा त्रिपुराम्बिकामन्त्रं प्रपठन् दण्डवद् भूमौ निपतेत्। तत्क्रमेणैव कृष्णवस्त्रं, कृष्णपुष्पं, राजानं, राजपुत्रकं, हस्त्यश्वरथशस्त्राणि, फलकान्

---

१. ततोऽपि द्विगुणा प्रोक्ता द्वारावत्यां विशेषतः।
सर्वक्षेत्रेषु तीर्थेषु पूजा द्वारावती समा॥ (शा० त० १५,२३)।

२. देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम्।
अन्यत्र विरला देवी कामरूपे गृहे गृहे॥ (शा० त० १५,२९)।

३. स्त्रीसमीपे कृता पूजा जपश्च परमेश्वरी।
कामरूपाच्छतगुणोऽव्ययश्च समुदीरितः॥ (शा० त० १५,३४)।

४. कृशोदरि! महाचण्डे! मुक्तकेशि! बलिप्रिये।
कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये॥ (शा० त० १५,३८)।

( नटान् )' वीरपुरुषान्, महिषं, कुलदेवं, महिषमर्दिनीं चावलोक्य जयदुर्गादिकं मन्त्रमनुस्मरन् प्रणमेत् । तथा कृते सति साधको विघ्नैर्न लिप्यते । एवं हि मद्यभाण्डं, मत्स्यं, मांसं, वरस्त्रियं च दृष्ट्वा भगवतीं भैरवीं मन्त्रमनुस्मरन् प्रणमेत्[1] । शिवाया रुदितं श्रुत्वा यः शुभप्रदां शिवदूतिं स्मरति, तस्य कामाः सिद्ध्यन्ति । उपर्युक्तानां मारणोच्चारहिंसनं चापशब्दैरपि न कार्यम्, अन्यथा स देवीप्रियो न भवति ।

### नित्यसंकेतस्तवः

ततोऽग्रे ग्रन्थकारो नित्यसङ्केतस्तवः प्रस्तौति । एवं च शिवाया वलेरावश्यकतां प्रतिपादयति । तदनु शिवपूजनं निर्दिशति । एवमेव यथा दीक्षां यथाचारं च साधको मन्त्रजपपरायणो भवेत् । कियत् संख्या जपेन किं फलमित्यधुना वक्ष्यते ।

### मन्त्रजपसंख्याफलम्

मन्त्री दीक्षितः सन् स्वेष्टमन्त्रमधुनोक्तक्रमेण यथेष्टलाभाय जपेत् । ततो लक्षैकजपेन महापापाद् विमुक्तिर्भवति । लक्षद्वयेन च सप्तजन्मार्जितान्यपि पापानि नश्यन्ति । चतुर्लक्षजपाच्च मन्त्री वागीश्वरसमो भवति । पञ्चलक्षजपाद्दरिद्रोऽपि वैश्रवणो भवति । षड्लक्षजपेन साधको महाविद्याधरो भवति । सप्तलक्षेण खेचरीसिद्धिरायाति । ततश्चाष्टलक्षजपानुष्ठानेन साधको नूनमणिमाद्यष्टसिद्धीनामीशो जायते । नवलक्षजपाच्च रुद्रसमतामेति । तदवस्थायां स कर्तृत्वहर्तृत्वशक्तिसंवलितः सन् लोकेऽप्रतिहतः प्रभुर्भवति । ततश्च दशलक्षजपफलं कियद् भवतीति वक्तुन्न शक्यते । देवा मन्त्रपाशबद्धाः सन्तः साधकस्याभीष्टदा भवन्तीत्यत्र नास्ति संशीतिलेशः ।

### देव्याः प्रणामफलम्

भगवत्याः कालिकाया अष्टोत्तरशतं प्रदक्षिणमिह सर्वकामसिद्धिपूर्वकापरत्र मोक्षदमाख्यातम् । ये नरा परया श्रद्धया भगवतीं दुर्गां (मूर्तिमय्यां) प्रणमन्ति, ते अश्वमेधफलमवाप्यान्ते दुर्गालोकं समधिगच्छन्ति । किञ्च, शाठ्येनाऽपि सकृन्नमस्कारेण भक्त्याऽभक्त्या वा तल्लोकप्राप्तिरवश्यम्भवा । भगवत्याः पराम्बायाः प्रणामेन तदेव फलं प्राप्येत्, यत् सर्वयज्ञोपवासेषु सर्वतीर्थेषु च प्राप्यते । साष्टाङ्गप्रणामेन प्रसन्ना सती दुर्गा प्रीत्या स्वलोकं प्रददाति । स च नमस्कारः कायिकवाचिकमानसिकश्च भवति इति ।

---

१. ॐ बन्धूकपुष्पसंकाशे ! त्रिपुरे ! भयनाशिनि ।
भाग्योदयसमुत्पन्ने ! नमस्ते वरवर्णिनि ॥ (शा० त० १५, ४१२ ) ।

## षोडशोल्लासे

### जपादिफलाभावहेतुत्वनिर्णयः

'कलौ संसर्गदोषादि प्रायश्चित्तं च षोडशे' इति विषयसंक्षेपवाक्यात् संसर्गदोषान् प्रायश्चित्तांश्चात्रोल्लासे वक्ष्यते ।

शिवः शक्तिं प्रतिबोध्य कलिजान् संसर्गदोषान्निरूपयति हे महेशानि! कलिकाले समागते सति बहवो जना पाषण्डा भविष्यन्ति । पाषण्डशब्दश्च 'पापं सनोतीति' वाख्यया 'षण्ड दाने' इति तनादिधातोर्निष्पद्यते । अथवा 'षण संभक्तौ' इति भ्वादिगणाद् 'अमन्ताड्डः' (पा० सू० उ० १।१०४) इति 'ड'प्रत्यये पृषोदरत्वान्मूर्धन्यमध्यो निष्पद्यते । कवर्गद्वितीयमध्यश्च 'पाखण्ड' शब्दः पाखण्डयतीत्यर्थे 'खडि भेदने' इति चुरादिगणपठिताद्धातोरौणादिकाड्डः प्रत्यये कृते निष्पद्यते । तदुक्तम्—

पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते ।
तं खण्यति ते यस्माद् पाखण्डास्तेन हेतुना ॥ इति ।

(अमरकोशे रामाश्रमीटीकायाम्—२,७,४५)

सत्सु बहुलेषु पाषण्डेषु सङ्गदोषाद्धानिर्भवति, सिद्धयो दूरे तिष्ठन्ति । तस्मात्सुधीभिः पाषण्डसङ्गो यत्नतस्त्याज्यः । यदि पाषण्डहीनः शूद्रस्तर्हि तस्य संस्पर्शं कुर्यात्, परमुच्चकुले समुत्पन्नोऽपि पाषण्डीजनः सर्वथा त्याज्य एव । कलौ पाषाण्डसंसर्गात्सर्वाः प्रजा दूषिताः ।

कलौ प्रायो ब्राह्मणा दम्भमात्सर्यपूर्णाः पापिष्ठाः शूद्रगेहे पुराणपरायणतत्पराश्चाण्डालसमाश्च सन्तोऽस्पृश्या भवन्ति । अतः शूद्रगृहे कदापि ब्राह्मणेन पुराणादिवाचनं नैवाचरितव्यम् । अन्यथा तस्य सर्वहानिरनुष्ठानसिद्ध्यभावश्च वेदितव्यः ।

निन्दायाः परित्यागाय शास्त्रमादिशति, परमत्र युगे प्रायो भारते जना निन्दापरायणा दरीदृश्यन्ते । तत्र केचन शिवं, केचन विष्णुं, केचन देवीं, केचनान्याँश्च देवान् विनिन्दन्ति । तत्त्वतो विचारानपहाय निन्दायां प्रवृत्तास्ते परस्त्रीसङ्गमाच्च पुत्रमुत्पादयन्ति । आत्मानं सर्वश्रेष्ठं वैष्णवं मत्वा निन्दाया अधमत्वमावहन्तस्ते कर्णे, कण्ठे, हृदये, हस्ते च तुलसीमालां विधृत्य तिलकं च विधाय गृहे गृहे सुस्वराणि हरिनामानि च गृह्णन्ति । ते च पाषण्डा अधमा मानवा अन्नवस्त्रादीनां सञ्चयं कुर्वन्ति । एतादृशानां

पाखण्डानां पापानि वर्णितुं नैव शक्यानि। यदि स वैष्णवधर्मनिरतः सन् हरेर्नाम गृह्णीयात्तदा अशेषानि पापानि नाशयति, नान्यथा। एतादृशास्ते यदि नित्यकर्मसंध्यागायत्रीं विहाय हरेर्नामैव केवलं स्मरन्ति, तदा पापैर्युज्यन्ते। एतादृशैर्वैष्णवैर्विष्णवे दत्तमन्नं जलं च सर्वं दूषितं भवति। हे भगवति! आत्मानं वैष्णवं मत्वा वैष्णवधर्मपालने वस्तुतो अशक्तास्ते जनाः सङ्कराः सन्तो यत्र देशे निवसन्ति तं देशं पातयन्ति, तथा च पतितसङ्करदेशे कथं धर्मः, कथं कर्म इति सर्वमसङ्गतं वेदितव्यम्।

पाखण्डास्ते ब्राह्मणा गीत-वाद्य-नृत्यतत्पराः सन्तो गीतेषु तेषां भावो जायते, विष्णोरग्रे न च सद्भावमुत्पादयन्ति। एते स्वकर्मणा स्वपूर्वपुरुषानपि स्वर्गादपि नरके पातयन्ति। हे देवि! पूजाकाले ये खलु ध्यानानन्दा गीतभावमाश्रित्य नृत्यतत्परास्ते पूर्वपुरुषानादाय निरयात्स्वर्गं गच्छन्ति। कलौ या ब्राह्मण्यो गीतवाद्यनृत्यमत्ताश्चाधमत्वमावहन्त्यो दरीदृश्यन्ते, तासां संसर्गमात्रेण सर्वं सुकर्म नश्यति। अत एतादृशोभिः सह सङ्गो यत्नतस्त्यजेत्। एतादृशे काले यदि महाविद्यामेकधामप्युच्चरेत्, तदा स सर्वपापविनिर्मुक्तोऽवश्यं मोक्षमाप्नुयात्। एवमेव वैष्णववर्णसङ्कर इव शाक्तशैववर्णसङ्कराणामपि संसर्गः यत्नतस्त्यजेत्।

## कर्मसङ्करप्रायश्चित्तम्

देहस्थसर्वपापानां नाशकामनया काममायामन्मथानां वा मन्त्राणि अष्टोत्तरशतसंख्याकानि जपेत्[1]। यथा सुवर्णस्य परिशुद्धिरग्निना जायते, तथैवानाचारस्य शुद्धिः प्रायश्चित्ताग्निना जायते। तदर्थं मूलमन्त्रमष्टसहस्रकं गायत्रीं वा तथैव जपेत्। गायत्रीमत्र वैदिकगायत्रीपरम्। स्त्रीशूद्राणां तत्रानधिकारान्मूलमष्टोत्तरसहस्रं तान्त्रिकगायत्रीं वा जपेत्। ब्राह्मणादीनां वैदिककर्मण्यधिकाराद् गायत्रीजप एव प्रशस्यः।

## पूर्वं धृतकवचस्य नाशे पुनर्धारणे प्रायश्चितम्

'कं वातं वञ्चति' इत्यर्थको 'वञ्चु गतौ' इत्यस्माद्धातोरन्तर्भावितण्यर्थको वा कवचशब्दः सर्वतो रक्षायां प्रयुज्यते। तत्र पूर्वं धृतस्य कवचस्य नष्टे

---

१. देहस्थसर्वपापस्य नाशनं यदि चेच्छति।
कामं मायां तथा देवि! मन्मथं परमेश्वरि॥
विद्यामेतां जपेद् देवि! तत्पापस्यापनुत्तये।
अष्टोत्तरशतं जप्त्वा तस्मात् पापाद् विमुच्यते॥ (शा० त० १६,३२-३३)।

किं कर्तव्यमित्याकांक्षायामुच्यते। पुनः कवचलेखनदिने शुद्धासने उपविश्याचम्य च भूतशुद्धयादीनाचरेत्। ततो षट्चक्राणि स्मर्यं स्वशिरसि स्वगुरुं विचिन्तयेत्। पुनश्चानुलोमविलोमयोः क्रमेण मातृकाबीजसंपुटं सूर्यबिम्ब-मनुसरन् कवचं पठेत्। ततश्च अष्टोत्तरशतं सहस्रं वा महाविद्यां जपेत्। ततः कवचं विलिख्य सुवर्णरक्तसूत्रञ्च तदुपरि वेष्टयित्वा पुनः धारयेत्। एतेन तत्कवचधारणफलं वेदितव्यम्।

तत्कवचं पुनः प्रतिष्ठाप्य शुभेऽहनि पञ्चगव्यैः स्नापयित्वा प्राणप्रतिष्ठां कुर्यात्। पुनर्महाविद्यामष्टोत्तरशतं सहस्रं वा जपेत्, कवचं धारयेच्च।

## यन्त्रनाशे प्रायश्चित्तम्

तन्त्रे मन्त्रयन्त्रयोर्महत्त्वं समानमेव। तत्र यदि दैवात्प्रतष्ठितं यन्त्रं क्वचिन्नश्यति, तदा अहोरात्रमादरेणोपोषणमाचरेत्, ततो येन स्वर्णादिना पूर्वं यन्त्रं रचितं, तेनैव तत्पत्रे पुनर्विरच्य, तद्देवतां स्वशक्तितः षोडशोपचारैः प्रपूज्य ब्रह्मचर्यमाधाय, अयुतं तन्मन्त्रं प्रजपेत्, तेनैव मन्त्रेण तोयं विलोड्य पिबेच्च, यन्त्रं प्रतिष्ठाप्य पुनः सविधिपूजनं कुर्यात्। एवं हि पुनर्यन्त्रं प्रतिष्ठितं सत् कार्यसाधने क्षमम्।

## पूजाकाले यन्त्रादिपतनस्य प्रायश्चित्तम्

कदाचित् पूजाकाले यन्त्रे पतिते सत्यायुर्धनबन्धूनां नाशो भवति, तन्निवारणार्थं प्रायश्चित्तरूपेणैकरात्रं त्रिरात्रं वोपवासं समाचरेत्। ततश्च तन्मूलमन्त्रमष्टोत्तरसहस्रकं प्रजपेत्, जवापुष्पैश्चाष्टोत्तरशतं जुहुयात्, समा-हितेन चेतसा मूलमन्त्रं प्रजपन् ब्राह्मणान् भोजयेच्च। एवमाचरितेन तत्प्राय-श्चित्तात् तद् दोषो नश्यति।

## मालापतनस्य प्रायश्चित्तम्

जपकाले यदि हस्तान्माला पतिता स्यात्तदा अमङ्गलं, तावत्कालं यावद् जपस्य हानिश्च जायते। तद् दोषनिवारणार्थं पुनस्तन्मन्त्रमष्टोत्तरसहस्रं जप्त्वा विप्रान् भोजयेत्। ब्राह्मणभोजनेन सर्वानिष्टशान्तिरर्थप्राप्तिश्च शास्त्रे निगदिता। अथवा अष्टोत्तरशतं गायत्रीं वा जपेत्। गायत्र्या जपेन तत्तद्देवतानां गायत्री बोद्धव्या। पुनस्तां मालां संस्कृत्य पूज्य चाग्रे जपमाच-रेत्। एवं कृते मालापतनस्य प्रायश्चित्तं सम्पद्यते।

## मालाया विनाशे (त्रुटिते) प्रायश्चित्तम्

जपकाले यदि माला त्रुटिता विनष्टा वा स्यात्तदा महदशुभकरम् । तद्दोषापनोदाय पुनर्ग्रंथितां तामादाय, सविध्यर्चनञ्च विधाय, प्राणप्रतिष्ठां कारयेत् । तद्दोषनिवारणाय गायत्रीं जपेत्, ब्राह्मणाँश्च भोजयेत् । महापातकनाशाय गायत्रीजपः प्रशस्य इति । अशुचौ मालां न स्पृशेत्, न च करभ्रष्टां तां कारयेत् । मालाया जपे यदि शब्दो भवति तदा रुजोत्पत्तिः, करभ्रष्टे च सा विनाशकृत् । सूत्रे छिन्ने च सा माला मृत्युदा भवति । तस्मान्मालां यत्नेन प्रजपेत् । किञ्च, हस्तात्पतितायां मालायां सत्यां तन्मन्त्रमन्यदष्टोत्तरसहस्रं जप्त्वा प्रायश्चित्तमाचरेत् । पुनश्च जीर्णे सूत्रे पुनस्तां ग्रथित्वा अष्टोत्तरशतं वा जप्त्वाऽन्यजपं कुर्यात्[1] ।

## गुरुक्रोधोपशमनाय प्रायश्चित्तम्

साधनायां मन्त्रदैवतगुरूणामैक्यं प्रकल्प्य सिद्धिं साधको विन्दति । तत्र शिवे रुष्टे गुरुस्त्राता भवति, परं गुरौ रुष्टे न कश्चन त्राता । तस्माद् गुरोस्तोषाय तत्प्रसादं यावदुपवासमाचरेत् । प्रसन्ने च गुरौ भुञ्जीत । एवं तद्दोषो नश्यति ।

## विष्णोरनिवेदितभोजनप्रायश्चित्तम्

'सर्वं खल्विदं ब्रह्म', 'ईशावास्यमिदं सर्वम्' इत्यादि श्रुतिबलात्सर्वं चराचरं जगदीश्वरमयम्, किं वा ईश्वरस्येदमिति । अतो भक्ष्यभोज्यादिकं तस्मै निवेद्य भोक्तव्यम् । यश्चानिवेदितं भक्ष्यभोज्यं गृह्णाति, तस्यान्नं विष्टामयं पयश्च मूत्रसमं ज्ञेयम्[2] । अत्र विष्णुपदं स्वस्वेष्टदेवतापरमिति । हरेरनिवेदिते भोजने सप्तजन्मनरकप्राप्तिर्निगदिता । देवीभक्तो यदि देव्यै अनिवेदितं फलं, पुष्पं,ताम्बूलमन्नपानादिकं भुङ्क्ते,तदा सः प्रायश्चित्ती सन् प्रायश्चित्तं विना न शुद्ध्यति । अत्र देवीभक्तव्याजेन तत्तदिष्टदेवताभक्तानामपि ग्रहणं कार्यम् । तथा कृते सत्यष्टोत्तरशत तन्मन्त्रस्य जपः प्रायश्चित्तरूपेण कार्यः[3] ।

---

१. छिन्ना भवति चेन्माला पूजां कुर्यात् ततोऽधिकाम् ॥
पुनर्ग्रथित्वा तां मालां प्रतिष्ठां पूर्ववच्चरेत् ।
ततस्तु प्रजपेन्मालां न तत्र दोषभाग् भवेत् ॥ (शा० त० १६,६२-६३) ।

२. अनिवेद्य न भुञ्जीत भक्ष्यभोज्यादिकं च यत् ।
अन्नं विष्टा पयो मूत्रं यद् विष्णोरनिवेदितम् ॥ (शा० त० १६,६६) ।

३. देव्याश्चाष्टशतं मन्त्रं जप्त्वा पूतो भवेन्नरः ॥ (शा० त० १६,७३) ।

केचन स्वेष्टदेवानन्तरप्रसादभक्षणे दोष इति प्रतिपादयन्ति । यथा 'अग्राह्यं शिवनिर्माल्यम्' इत्यादि, तन्न युक्तम्, ज्ञानिनस्तु सर्वदेवेष्वेकत्वं दर्शयन्तो न तत्प्रसादभक्षणे दोष इति प्रवदन्ति । तथा चोक्तं ग्रन्थे—

शिवदत्तं विष्णुदत्तं गिरिजादत्तमेव च ।
प्राप्तिमात्रेण भोक्तव्यमन्यथा पातकी भवेत् ॥इति। (शा०त० १६,७५)

यत्तु लिङ्गपुराणे—

लिङ्गे त्यक्त्वा तु नैवेद्यं भुङ्क्ते मोहाद् विमूढधीः ।
कुम्भीपाके च नरके पच्यते नात्र संशयः ॥ (शा० त० १६,७७)

इत्युक्तं तल्लिङ्गमस्तकनैवेद्यपरं सामान्यवचनम् । स्कन्दपुराणस्य—

बाणलिङ्गे स्वयं भूते स्फाटिके मृदि संस्थिते ।
अतः शतक्रतोः पुण्यं शम्भोर्नैवेद्यभक्षणात् ॥ इति।(शा० त० १६,७८)

तथा च—

निर्माल्यं हरते पापं शोकं च चरणोदकम् ।
नैवेद्यं सर्वपापानि शम्भोर्हरति निश्चितम् ॥ (शा० त० १६,८१)

इति वचनैश्च शिवनिर्माल्यं नैवेद्यञ्च ग्राह्यमेव । एवमेव शक्तेर्विष्णोस्तत्तद् देवानामपि ज्ञेयम् । भक्ष्यभोज्यञ्च देवेभ्योऽनिवेद्य न भोक्तव्यमित्येव ग्रन्थस्वारस्यम् । किञ्च, वर्णसङ्करजातीनां सङ्गः सर्वथा त्याज्यः । यदि तेषां दर्शनं जायते चेत्तदा सूर्यस्य दर्शनं इष्टमन्त्रस्याष्टोत्तरशतं वा जपमाचरेत् । नैवेद्यस्यानिवेदितेऽप्यष्टोत्तरसहस्रं शतं वा जपः प्रायश्चित्तरूपेण कार्यः । ये च नरा अकामाः सन्तः स्व वैदिकं तान्त्रिकञ्च कर्म कुर्वन्ति, तेषां मुक्तिविश्वेशोऽवश्यं प्रददाति । शुभाशुभकर्मणां भोगोऽवश्यं भोक्तव्यो भवति, तस्मात्प्रायश्चित्तमवश्यं कर्तव्यम् । देवताप्रीतिकरकर्माणि सदा क्रियमाणो हि जनः सर्वदुःखरहितः सन् मुक्तिं विन्दति । धर्माधर्माविति कर्मसंज्ञितौ द्वौ पाशौ वर्तेते, परं देवताप्रीतिकर्माणि बन्धनानि निरस्य मुक्तिसाधकानि गदितानि ।

## सप्तदशोल्लासे

### कुण्डविधिनिरूपणम्

कुण्डमण्डपार्थं यावदायतनमिष्टम्, तावत्या भूमेः परिग्रहं कृत्वा, आचम्य, विधिवदासने उपविश्य, उक्तविधानेन माषभक्तबलिं दद्यात् । बलिदाने

भावयेदिदं यत्स्वर्गपातालमध्ये ये वास्तुदेवताः सन्ति, ते इमं बलिं प्रगृह्य तुष्टाः सन्तः स्वमन्दिरं यान्तु। मातरः, भूतवेताला ये चान्ये बलिकांक्षिणो देव्याः पारिषदाः स्युस्ते बलिमिमं प्रगृह्य स्वेच्छया यथेष्टं गच्छन्तु[1]। एवं बलिद्वयं दत्वा तदनन्तरं मण्डपं कारयेत्।

## मण्डपनिर्माणप्रकारः

मण्डपभूमौ पुण्याहं वाचयित्वा शुभं मण्डपं रचयेत्। तत्र 'मण्डनं मण्डः', 'मडि भूषायाम्' इति धातोर्घञ् प्रत्यये सिद्ध्यति। ततश्च 'मण्डं पातीति मण्डपः'। 'पा रक्षणे' इति धातोः 'पा' इत्यस्य 'आतोऽनुपसर्गे कः' इति सूत्रेण 'क' प्रत्यये सिद्ध्यति। परमत्र यौगिकार्थो नेष्टः, रूढ्या मण्डपशब्दो यागाद्यर्थं निर्मितस्य स्थानविशेषस्य कृते प्रयुज्यते। तत्र मण्डपे कुण्डनिर्माणं पञ्च-सप्तनवहस्तपरिमितं वाऽन्तरेण कार्यम्। चत्वारः स्तम्भा मध्यगाः, षोडशश्च बहिर्भागे स्युः। प्रत्येके च ते स्तम्भा अष्टहस्तोच्छ्रायेण रचिताः स्युः। हस्त-प्रमाणञ्च तन्त्रे चतुर्विंशत्यङ्गुलं स्वीकृतम्। तत्प्रमाणमेव गृहकुण्डवेदिका-मण्डपादिषु प्रयोज्यम्। हस्तप्रमाणञ्च दक्षिणकूपरादारभ्य मध्यमाङ्गुलेरूर्ध्व-पर्वपर्यन्तो भाग इति।

## मण्डपस्थानमाच्छादनम्

मण्डपस्थानमङ्गुलोच्छ्रायं स्यात्। तस्याच्छादनं नारिकेलदलैर्वंशैश्च कार्यम्। तत्र चतुर्दिक्षु चतुर्द्वारं कदलीस्तम्भयुतं कार्यम्। तच्चाम्रपत्रसमायुक्तं सद्रज्जुभिर्बद्धं स्यात्। एवं ह्यष्टदिक्षु अष्टौ ध्वजान् दिक्पालांश्चाश्रित्य स्थापयेत्। ते ध्वजाः क्रमशः पीत-रक्त-श्वेत-कृष्ण-शुक्ल-शुक्लकृष्ण-शुक्ल-रक्ताश्च स्युः।

## कुण्डशरीरम्

हवनात्मकाभिषेकात्मकमन्त्रात्मकाश्च यज्ञा इत्यनुष्ठानस्य त्रिविधत्व-मुक्तम्। तत्र विना कुण्डं होमो न स्यादित्येतदर्थं कुण्डमावश्यकम्। तत्रैता-

---

१. ॐ स्वर्गपातालमध्ये च ये सन्ति वास्तुदेवताः।
गृह्णन्त्विमं बलिं दत्तं तुष्टा यान्तु स्वमन्दिरम्॥
मातरो भूतवेताला ये चान्ये बलिकांक्षिणः।
देव्याः पारिषदा ये च ते च गृह्णन्त्विमं बलिम्॥ (शा० त० १७, ३-४)

दृशस्य कुण्डस्य शरीरं किदृक् स्यादिति जिज्ञासा आपातत एव समुदेति। एवं जिज्ञासायामुच्यते यत्, प्रकृतेः परमं वपुः कुण्डमेव भवति। कुण्डशरीरस्य शिरः प्राच्यां दिशि, दक्षिणोत्तरयोर्बाहू, कुण्डमुदरं, योनिः पादौ च पश्चिमायां दिशि स्यादेवं कुण्डशरीरमुत्पद्यते।

कुण्डं चतुस्त्रं सत् सर्वयोगे प्रशस्यते। आदौ पूर्वतः पश्चिमं, दक्षिणत उत्तरं च चतुरस्त्रकुण्डं निर्मेयम्। पञ्चाशत्संख्याकहवने मुष्टिमात्रं कुण्डं, हरत्निमात्रकुण्डं शतहोमे, सहस्रके हस्तमात्रं, दशसहस्रसंख्याकहोमे द्विहस्तं, लक्षे च चतुर्हस्तमितं कुण्डं प्रशस्यम्। दशलक्षे च षड्हस्तं, कोटिसंख्याके अष्टौ हस्तप्रमाणकं कुण्डनिर्माणं ग्रन्थकारेणाभिहितम्।

## कुण्डे खातस्य परिमाणम्

कुण्डस्य यावत् विस्तारस्तावत्खननं कुर्यात्। सहस्रसंख्याकहवनकर्मणि कुण्डे चतुर्विंशत्यङ्गुलकं खातं निर्मेयम्। द्विहस्तप्रमाणकुण्डे त्रिंशदङ्गुलकं खातपरिमाणं स्यात्। चतुर्हस्तकुण्डे अष्टविंशत्यङ्गुलकं, लक्षहोमकुण्डे चत्वारिंशत्यङ्गुलम्, षड्हस्तकुण्डे त्रिचत्वारिंशत्यङ्गुलकम्, वसुहस्तकुण्डे च अष्टचत्वारिंशत्यङ्गुलकं खातं सर्वत्र प्रशस्यं भवति। एषु कुण्डेषु मध्ये आदौ सरन्ध्रकं शोभनं कमलं कुर्यात्। सर्वकुण्डानां परितस्तिस्रो मेखला एकैकमङ्गुलान्तरेण कार्याः। ततश्च क्रमेणार्धाङ्गुलप्रमाणेन कुण्डस्य कण्ठं वर्द्धयेत्।

## मेखलामानम्

यादृशं हि कुण्डानां मानमिष्टं तादृगेव मेखलानामपि मानमिष्टं भवति। मुष्टिमात्रे कुण्डानां तिस्रो मेखला क्रमाद् विरच्य, तत्रैव कुण्डयोनिरपि निर्मापयेत्। तत्रैकहस्तमिते कुण्डे षडङ्गुलां मेखलायोनिं रचयेत्। तत्र च चतुरङ्गुलं नाभिपद्मं विरच्य एकाङ्गुलं योन्यग्रं विरचयेत्। एवमेव द्विहस्त-चतुर्हस्त-षड्हस्त-अष्टहस्तादिकुण्डेष्वपि मेखलायोनिं ग्रन्थोदितां विधाय होतुरग्रे गजकुम्भवदाकारां तां योनिमीषदधोमुखीं कुर्यात्। इदञ्च विशेषतो ध्येयं यत् पश्चिमाभिमुखयोनौ कुण्डकोणेषु च नार्चयेत्। एवं सनाल-योनिमेखलायां पद्मादियुक्ते शुद्धे निर्मिते हि कुण्डे च सर्वं हुतमिष्टकरं स्यादिति।

## नालस्थानम्

कुण्डमध्यकमलादारभ्य योन्या मध्ये सरन्ध्रकं नालं स्यात्[१]। 'नलतीति नालम्', 'णल बन्धे' इति धातोः 'ज्वलिति०' इत्यादि पाणिनीयसूत्रेण 'ण'प्रत्यये नालशब्दसिद्धिः। तदुक्तं मेदिनीकोशे—'नालं न ना पद्मदण्डे नाली शाककलम्बके' (१४७।२८) इति। मेखलाया निरुक्तिस्तु—'मखं गतिं लातीति मेखला'। अथवा 'मीयते इति मेखला'। 'डुमिञ् प्रक्षेपणे' इति धातोः पृषोदरत्वादिति सिद्धिः। तच्च नालं मूलमध्याग्रभेदेन त्रिविधं सत् षट्चतुस्त्र्यङ्गुलकं क्रमाच्च त्रयोदशाङ्गुलीदीर्घं भवति। नालमेखलयोर्मध्ये परिधेः स्थापनाय द्वितीयमेखलोपरि रन्ध्रं कर्तव्यम्।

## कुण्डदोषाः

शास्त्रीय रीत्या कृतानि कर्माणि सद्यः सिद्धिकराण्याहुः, परं तत्र दोषे सति यत्नद्रव्यसाध्यान्यपि कर्माणि विफलतां यान्ति। हवनं विना सिद्धयभावस्तस्मात् सिद्धये कुण्डमावश्यकम्। तस्मिन् कुण्डे यदि दोषः स्यात्, तदा यथेष्टसिद्धिः कथं स्यात्? अतस्तद्विचिन्त्याधोलिखितान् कुण्डदोषान् यत्नतः परिवर्जयेत्। ते च दोषा यथा—यदि कुण्डस्य खातोऽधिको भवेत्तदा यजमानः साधको वा रोगी भवति, यदि च खातस्य क्षेत्रफलं विहितप्रक्रियया न्यूनः स्यात्तदा धननाश इति सिद्धाः प्रवदन्ति। कुण्डे यदि चतुष्कोणाकृतौ वक्रता-आपद्येत्तदा सन्ताप इति। मेखलायाः छिन्ने सति मरणं प्रोक्तम्। यदि मेखलाया अभावस्तदा शोकः, अधिके च तस्या वित्तनाशो भवति। योनिं विना कुण्डनिर्मितौ भार्याया नाशः, कण्ठवर्जिते च कुण्डे अपत्यनाश इति सर्वथा सावधानेन कुण्डविधानं परिचिन्तनीयम्।

## कुण्डाभावे स्थण्डिलविधानम्

साधको यद्युपर्युक्तविधिना कुण्डनिर्माणे अशक्तश्चेत्तदा स्थण्डिलमेव निर्माय हवनकर्म कुर्यात्, यतो हि नित्यनैमित्तिककाम्यकर्मसु कुण्डाभावे स्थण्डिलमेव प्रशस्यते[२]। 'स्थलत्यस्मिन् इति स्थण्डिलम्'। 'ष्ठल स्थाने' इति

१. स्थलादारभ्य नालं स्याद् योन्या मध्ये सरन्ध्रकम्।
योन्या मध्ये बिलं कुर्यात् तदाज्यग्राहिसंज्ञकम्॥ (शा० त० १७,४१)।

२. कुण्डमेवं विधं न स्यात् स्थण्डिलं वा समाश्रयेत्।
नित्यं नैमित्तिकं काम्यं स्थण्डिलं वा समाचरेत्॥ (शा० त० १७,४७)।

धातोरौणादिकेन 'मथिलादयश्च' (उ० १।५७) इति सूत्रेण सिद्धिः। 'चत्वरं स्थण्डिलेऽङ्गणे' इति मेदिनीकोशः (१३३।१५२)। किञ्च, मुकुटोक्तेन व्यवस्थया 'यज्ञार्थं परिष्कृताया अनिम्नोन्नताया यज्ञभूमेः' इत्यर्थेन यज्ञभूमेर्ग्रहणं स्थण्डिलेन बोध्यम्। तच्च स्थण्डिलं यज्ञभूमावेव दृश्यते।

स्थण्डिलं चतुष्कोणं, हस्तपरमितं, बालुकाभिः सुशोभितं च कुर्यात्। तच्च अङ्गुलोच्छ्रायं भवेत्। तदुपरि कृतो होमः सर्वदोषरहितः सनभीष्टसिद्ध्यर्थं युक्तं भवतीति सुधियो विभावयन्तु।

## अष्टादशोल्लासे

### होमविधानम्

'होमं चाष्टादशे ततः' इति प्रतिज्ञावाक्यादष्टादशेऽध्याये होममुद्दिश्य नियमा वर्णिता विद्यन्ते। तत्र होमशब्दनिरुक्तौ 'हवनं होमः' इत्युच्यते। 'हु दानादनयोः' इति धातोरौणादिके 'अर्तिस्तुसुहुसृ०' (उ० १।१४०) इति सूत्रेण मन् प्रत्यये होमशब्दसिद्धिः।

एवं हि सिद्धेषु कुण्डेषु सर्वतो गोमयेनोपलिप्य समानार्घ्यं प्रकल्प्य पञ्चगव्यैस्तानि सम्मार्जयेत्।

### कुण्डानामष्टादशसंस्काराः

साधनाप्रधाने ह्यत्र तन्त्रागमशास्त्रे तन्त्रपारगाः कुण्डानामष्टादशसंस्काराः कर्तव्या इति विनिर्दिशन्ति। ते चादौ मूलमन्त्रेण वीक्षणं, शरेण (मूञ्ज इति भाषायाम्) प्रोक्षणं, तेनैव कुण्डानां ताडनं, दर्भेणाभ्युक्षणं, खननोद्धारौ चास्त्रेण, हृन्मन्त्रेण प्रपूरणम्, अस्त्रेणैव समीकरणं, वर्मणा च सेचनं, 'हा' इति मन्त्रेण कुहनं, वर्ममन्त्रेणैव मार्जनम्, कलारूपेण विलेपनं, तदनन्तरं कल्पनं, तदनन्तरं त्रिसूत्रीकरणं, रक्तसूत्रेण त्रिःपरिवेष्टनं, हृदयेन अर्चनं, शुभैः कुशैरस्त्रेण च वज्रीकरणं, तनुत्रेण चतुष्पथं, चतुःस्त्रीकरणं, तेनैव चाक्षपाटनम्, इन्द्रियोद्घाटनमित्यष्टादशसंस्काराः कुण्डानामादावेव कर्तव्याः।

अथवा मतान्तरेण वीक्षण-प्रोक्षण-ताडनाभ्युक्षणानि विधाय त्रिकोणं, तद्बहिः षट्कोणं, तद्बहिश्चाष्टदलपद्मं परिकल्प्य मुकुन्द-(विष्णु) शङ्कर-इन्द्रादींश्चावाह्य अग्रकोष्ठकेषु ब्रह्मवैवस्वतेन्दवः पूज्याः। एवं चतुरस्रं, चतुर्द्वारं चतुर्वह्निमण्डलं च विधाय कुण्डस्योत्तरे भागे हस्तप्रमाणतस्त्रिस्रो रेखा लिखेत्। ततोऽर्घ्यादिभिः प्रोक्ष्य पशुशुद्धिं कुर्यादिति।

## कुण्डानां पञ्चशुद्धिः

अष्टादशसंस्कारात्पूर्वं साधकाः कुण्डानां पञ्चशुद्धय आचरन्ति। ताश्च आराध्यदेवताया मूलमन्त्रेण वीक्षणं, शरेण प्रोक्षणं, हेति मन्त्रेण ताडनं, तत्तत्कवचेन स्थानस्य गोमयोदकेन लेपनं, अस्त्रेण रक्षणं च कृत्वा अष्टादश-संस्कारा भवन्ति। तदनु कर्णिकोपरि (पद्मदले) वह्नेर्योगपीठमर्चयेत्। अग्नितो धर्मज्ञानवैराग्यैश्वर्याणामर्चनमुक्तम्, ततश्च पूर्वादि दिक्क्रमेण धर्मार्थकाममोक्षानपूर्वान् यजेत्। मध्ये वह्नेर्नवशक्तीस्ताश्च पीताश्वेतारुणाकृष्णाधूम्रातीव्रा-स्फुलिङ्गिनीरुचिराज्वालिन्याख्या इत्यासां कलाभिः सह तासां मण्डलं गन्धपुष्पादिभिः अं अर्कमण्डलं, डं सोममण्डलं, मं वह्निमण्डलं, ङः सर्वमण्डल-मित्यादिक्रमेण समर्चयेत्; ततश्च अमृतस्नातां नीलेन्दीवरसन्निभां वागीश्वरेण-युतां वागीश्वरीमुपचारैरर्चयेत्। एवं सम्यक् समर्च्य कुण्डेष्वग्न्यानयनं कुर्यादिति।

## कुण्डेष्वग्निनयनम्

'अङ्गतीत्यग्निः', 'अगि गतौ' इति धातोरौणादिके 'अङ्गेर्नलोपश्च' (उ० ४।५०) इति निर्नलोपे नुमादिकृते अग्निशब्दसिद्धिः। 'अग्निर्वैश्वानरेऽपि स्याच्चित्रकाख्यौषधौ पुमान्' (मेदिनीकोशे-८२।१) इति। स चाग्निः सूर्य-कान्तादिमणिसमुद्भूतः स्यादथवा श्रोत्रियगृहादानीतः स्यात्। ताम्र-कांस्य-पात्रेषु वा पिहितेन तं सावधानेन नयेदथवा मृण्मये शरावे वा नयेत्। भिन्नपात्रे, कपाले, उल्मुके चाग्निर्नैव गृह्णीयात्तथा सति व्याधिहानिभयानि च निपतन्ति। अग्नावागते नैर्ऋत्यां दिशि क्रव्यादंशमस्त्रेण किञ्चिदग्निं परित्यज्य, पुनश्च वीक्षणादिभिः सावधानेन तं संस्कृत्य, शमी-उदुम्बराग्निभ्यां भूमेरैक्यं परिभाव्य, अग्निबीजमन्त्रं जपेत्। एवमग्निश्चैतन्यं सद् हवनकर्मणि युज्यते। तथोच्चैर्मन्त्रीकृत्य वह्नेर्धेनुमुद्रयाऽमृतीकरणं, अस्त्रेण रक्षणं, तनुत्रेणावगुण्ठनं, त्रिःपरिभ्राम्यार्चनं, तारोच्चारेणाग्निमन्त्रेण प्रदक्षिणञ्च सविधि कृत्वा अभिमुखमग्निं प्रज्वलितं विलोक्य, जानुस्पृष्टमहीतलः शिव-बीजधिया योनावेव हविषं कुण्डे विनिःक्षिपेत्। तदनु कुशेनाच्छाद्य चतुष्कोणं पटं न्यसेत्। तत्तश्च शिवशक्तीमुद्दिश्याचमनीयकं दद्यात्। ततश्च गर्भनाड्यां वह्निरूपं धृतं हरिं ध्यायेत्। अत्र हरिपदस्याशयः स्वस्वेष्टदेवेभ्यो ग्राह्यः। एतदनन्तरं देव्या वामकरे रक्षार्थं धर्मकङ्कणं दद्यात्। त्रैलोक्योत्पत्तिमूलां मातृकां च भूषाभिर्भूषयेदेवं कृते सतीष्टसिद्धिः सेत्स्यति।

## हवने जिह्वाया मन्त्राः

'लिह आस्वादने' इति धातोः 'शेवयह्वजिह्वा' (उ० १।१५४) इत्यौणादिकेन सूत्रेण धातोः स्थाने जिह्वाया निपातनात्साधुः। अग्निवाय्वधीशाभ्यां युक्ता नादबिन्दुभ्यां विभूषिताः सदियान्ताश्च जिह्वानां मन्त्राः कथिताः सन्ति। हवनकर्मणि शरीरे क्क जिह्वया न्यासः कुर्यादित्याकांक्षायामुक्तम्—पायौ, लिङ्गे, नाभौ, हृदये, कण्ठमूले, लम्बिकायां (हृदयादूर्ध्वं कण्ठतश्चाधः) भ्रुवोर्मध्ये च ज्वालारुचां जिह्वां न्यसेत्। सा च जिह्वा गुणभिन्नेषु कर्मसु त्रिविधा, पद्मरागा सुवर्णा भद्रलोहिता भेदात्। सात्त्विकयागेषु सात्त्विक्यो हिरण्या, गगना, रक्ता, कृष्णासुप्रभाबहुरूपा अतिरक्ताश्चैताः सप्तजिह्वाः प्रयोज्याः। काम्यकर्मसु च पद्मरागा, सुवर्णा, भद्रलोहिता, लोहिता, श्वेता, धूमिनी,करालिकाश्च सप्त राजस्यो जिह्वाः प्रयोज्याः। क्रूरकर्मसु(मारणादिषु) च विश्वमूर्तिः, स्फुलिङ्गिनी, धूम्रवर्णा, मनोजवा, लोहिता, करालास्या, कालीश्चैताः सप्त सदोपयुज्या इति। एवं कर्मानुसारं सर्वं सम्यक् परिभाव्य हवने जिह्वायाः प्रयोगः कर्तव्य इति।

## जिह्वाधिपतयः

साधनादिषूपास्यदेवतात्वेनाधिदेवताप्रत्यधिदेवतानां मुख्यं स्थानमवतिष्ठते। तथा च जिह्वानां ह्यधिदेवतात्वेन सप्तराक्षसानां नामानि गणितानि, तेषु मर्त्यपितृगन्धर्वयक्षनागपिशाचराक्षसाश्च इत्यायान्ति। एवं हि स्वशरीरे अधिदैवतक्रमेण वह्नेरङ्गानि,तानि च ज्ञात्वा न्यासं कुर्यात्। तथा च जातिभिः सह संयुता षडङ्गमनव उक्ताः। ते च सहस्रार्चिः, स्वस्तिपूर्णः, उत्तिष्ठपुरुषः, धूमव्यापी, सप्तजिह्वः, धनुर्धरा इति।

## शरीरे वह्नेर्न्यासः

मन्त्रविद् हवनात्पूर्वं प्रादक्षिण्यक्रमेण वैश्वानरस्याष्टौ मूर्तयः शरीरे न्यसेत्। यथा मूर्ध्नि, स्कन्धयोः, वामपार्श्वे, कटौ, गुदायां, कटिपार्श्वयोश्च क्रमशो जातवेदः, सप्तजिह्वः, हव्यवाहनम्, अश्वोदरजः, वैश्वानरः, कौमारतेजः, विश्वमुखः, देवमुखाश्चैतान् न्यसेत्। वह्निं प्रार्थयेत्, ज्वालिनीं[1] मुद्रां च प्रदर्शयेत्। तदनु

१. मणिबन्धौ समौ कृत्वा करौ तु प्रसृताऽङ्गुली।
मध्यमे मिलिते कृत्वा अन्तरङ्गुण्ठको क्षिपेत्।
मुद्रा सा ज्वालिनी प्रोक्ता वह्नेर्ज्वलनकर्मणि ॥ (शा० त० १८,४१-४३)।

अग्निं प्रज्वालयेत्। एवं न्यासेन 'देवो भूत्वा देवं यजेदिति' साधीयान् पन्थाः पुष्टो भवति।

### कुण्डे अग्निप्रज्वालनमन्त्रः

प्रकृष्टेन ज्वालनं प्रज्वालनमित्यनेन प्रकृष्टतरेण प्रज्वलिते वह्नावेव हवनं प्रशस्यम्। तन्मन्त्रो यथा—'चित्पिङ्गलं हनदहपचयुग्मानुदीर्ध्यं सर्वज्ञाज्ञापय स्वाहा' इत्यनेनाग्निं प्रज्वाल्य अग्नेः स्तवनं[1] कुर्यात्। अनेन मन्त्रेण प्रज्वलिते वह्नौ सम्मुखे उपतिष्ठेत्। ततश्च विशुद्धैस्तोयैर्मेखलोपरि परिसिच्य मूल-मध्याग्रच्छादितैः काष्ठैर्दर्भैरात्मनोदिशं परित्यज्य प्रादक्षिण्यक्रमेण संस्तरणं कुर्यात्। यज्ञवृक्षाम्रादिभिः काष्ठैश्च पूर्वतः प्रारभ्योत्तरदक्षिणक्रमेण दर्भैर्वह्निं परिस्तीर्य परिधिस्त्रयं विधाय मेखलायां वह्निं परिस्तरेदित्यर्थः। यदि कुण्डाभावे स्थण्डिल एव चेत्, तदा भूमावेवैतत्सर्वं परिस्तरेन्न्यसेदित्यर्थः।

### परिधिलक्षणम्

'परिधिर्यज्ञियतरोः शाखायानुपसूर्यके' (हैमः-३।३७५) इति कोश-प्रामाण्येन 'परितो धीयतेऽनेनेति परिधिः'। एवं च यज्ञकाष्ठसमुद्भूतं प्रादेशमात्रं प्रमितः शुभः परिधिर्भवतीति। स च परिधिः पश्चिमां दिशं परित्यज्य अन्यदिक्षु कार्यः। तेषु प्रादक्षिण्यक्रमेण ब्रह्मादिमूर्तीन् गन्धादिभिः सम्पूज्याग्निदेवं विभावयेत्।

### वह्नेर्ध्यानं पूजनञ्च

'वहति हव्यम्, इति वह्निः' इति व्युत्पत्त्या हव्यार्थमुत्पादितस्य वह्नेः स्तवनं ध्यानञ्च[2] विधायैव हवनं कुर्यादित्येव पन्थाः साधकानाम्। एवं वह्नेर्ध्यानं कुर्यात्। क्रूरकर्मसु च कृष्णागतेः कृष्णवर्णवह्नेर्ध्यानं कुर्यात्। तथा कृते सति षट्कोणेषु षडङ्गकं, मध्ये जिह्वायां केशेषु चाङ्गदेवैः सह अग्नेरष्टौ मूर्तीन् समभ्यर्चयेत्। दलेषु च स्वस्तिकधारिणीं शक्तीं पूजयेत्। ततश्च

---

१. अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं विश्वतो मुखम्॥ (शा० त० १८,४५)।

२. त्रिनयनमरुणाभं बद्धमौलीं तु शुक्लं शुभमरुणमनेकाकल्पमम्भोजसंस्थम्।
अभिमतवरशक्ति स्वस्तिकाभीतिमुच्चैर्नमत कमलमालालङ्कृतांसं कृशानुम्॥
(शा० त० १८,५२)।

सर्वदिक्षु लोकपालान् प्रपूजयेत्। दक्षिणे ब्रह्माणं समभ्यर्च्य घृतस्थालीं प्रपूजयेत्। तत्रादावाज्यस्थालीमस्त्रमन्त्रेण क्षालयेत्, ततश्चास्त्रमन्त्रतः कुण्डाङ्गारान् समुत्तोल्य तत्राज्यं विनिःक्षिप्य तापनं कुर्यात्। किञ्च, वीक्षणादिभिराज्यं संस्कृत्य वायव्ये हृदाऽङ्गारान् निवेशयेत्। इदमेव तापनमित्युच्यते। ततः कुशगुच्छं प्रज्वाल्य आज्ये च क्षिप्त्वा पुनरनले क्षिपेत्, इदमेवाभिद्योतमित्युच्यते। ततश्चाज्यसंस्कारे पुनः कुशान् समुज्वाल्य आज्यमध्यतो विनिःक्षिपेत्। एतच्च मूलमन्त्रेण कुर्यात्। अयमेवाज्यसंस्कार इत्युच्यते। पवित्रीकरणे तु दर्भयुगलं प्रज्वाल्य आज्ये क्षिप्त्वा पुनरनले क्षिपेत्। इदमेव पवित्रीकरणमित्युच्यते। ततश्चाज्यं मूलमन्त्रेणाभिमन्त्र्य अस्त्रमुच्चरन् तं रक्षेत्, ततो धेनुमुद्रां योनिमुद्रां च प्रदर्श्य आज्यममृतात्मकं कुर्यात। इदमेवामृतीकरणमित्युक्तं तन्त्रागमे।

## होमविधिः

प्रथमं तावत्प्रादेशमात्रं दर्भयुग्मं सग्रन्थीं चाज्यस्थाल्यतिरिक्तपात्रे रक्षितं घृते निःक्षिप्य कुशस्य द्वौ भागौ विधाय कृष्णशुक्लपक्षौ स्मर्यं वामे इडा नाडीं दक्षिणे च पिङ्गलां, मध्ये सुषुम्नाञ्च[1] ध्यात्वा यथाविधि होमं कुर्यादित्यर्थः। विधिना गुरुणा निर्मितौ स्रक्‌श्रुवौ चादाय तावदधोमुखौ पाणिभ्यां कृत्वा वह्नौ कुशान् त्रिवारं प्रताप्य तदनु कुशाग्रमूलमध्यानि शोधयेत्। वामहस्तेन तानादाय दक्षिणेन करेण प्रोक्षयेत्। पुनर्मन्त्रीस्तान् कुशान् प्रताप्य वह्नौ निःक्षिपेत्। पुनश्च श्रुवमादाय चतुरङ्गुलकुण्डान्ते शङ्खमुद्रया धारयेत्। श्रुवेण चैव वह्नेर्दक्षिणलोचने दक्षिणाद् भागादाज्यं गृह्य स्वाहेति मन्त्रेण पावके जुहुयात्। वामेऽग्निलोचने च वामतोऽपरभागमादाय सोमाय स्वाहेति मन्त्रेण जुहुयात्। पुनश्चाज्यस्य मध्यभागमादाय वह्नेर्भालोचने पुनर्दक्षिणत आज्यं गृहीत्वा 'अग्नये स्विष्टकृते स्वाहेति' मन्त्रेणाग्निमुखे हवनं कुर्यात्। एवं हि वह्नेर्नेत्रवक्त्रेषु उच्चैर्व्याहृतिभिराज्यं त्रिवारं 'वैश्वानराय नमः स्वाहेति' कृत्वा जुहुयात्। पुनरेकैकाहुतिभिः गर्भाधानादिकाः क्रियाः कुर्यात्। अत्र विशेषः—वह्नेः संक्षेपेण गर्भाधान-पुंसवन-सीमन्तोन्नयन - जातकर्म-नामकरण-निष्क्रमण-चूडाकरण - उपनयन-वेदाध्ययन-गोदान-विवाहादयः शुभसंस्काराः करणीया भवन्ति। कृतेषु

१. वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः।
सुषुम्ना मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधिः॥ (शा० त० १८,६९)।

संस्कारेषु अग्निमन्त्रेण स्वाहोच्चारं विना पञ्चाहुतीन् दद्यात्। वह्नेर्जिह्वाङ्गमूर्तीनां क्रमाद् यथाविधिरेकैकामाहुतिं दद्यात्। ततः स्रुवेणाज्यमादाय स्रुवायामेव तमाज्यं चतुर्धा विभज्य तिष्ठन्नेवाग्नौ सावधानेन मन्त्री 'वह्नये वौषड्'ति मन्त्रेण जुहुयात्।

माधवीयसंहितानुसारं हि स्रुवाविधानमुच्यते—अवक्रः स्वयं शुष्कः सत्वचः निर्व्रणः समश्च द्वादशाङ्गुलानां पलाशदण्डः स्रुवार्थमुपयुज्यते। अथवा कनिष्ठिकाङ्गुलिसमोऽवक्रः सत्वश्च स दशाङ्गुलो वा भवेत्। किञ्च, प्रादेशमात्रस्यालाभे यावदेव मिलितेन पलासस्रुवेण तत्कार्यं कुर्यादित्यभिप्रायः[1]।

अथवा महागणेशमन्त्रेणैकादशाहुतीन् दद्यात्। एतच्च सामान्येन सर्वदेवानामग्निमुखमुक्तम्। बहुरूपा नाम्नी अग्नेर्जिह्वा समाख्याता। तस्यामाज्यं गन्धादिभिः समभ्यर्च्य षोडशाहुतिभिर्जुहुयान्मूलमन्त्रेण। इयं क्रिया वक्त्रैकीकरणमुच्यते।

पुनश्च प्रज्वलितायामग्नौ देवतायाः पीठं सम्पूज्य इष्टदायिनीं देवतामग्निरूपां च पूजयेत्। ततश्च तन्मुखे मूलमन्त्रेण पञ्चविंशत्याहुतिभिर्जुहुयात्। इदमपि कैश्चिद् वक्त्रैकीकरणमुच्यते।

एतदनन्तरं तत्त्वज्ञा नाडीसंधानं निर्दिशन्ति। तच्च मूलमन्त्रेणाज्यमेकादशवारं हुते सति सिद्ध्यति। एतदन्ते साङ्गेभ्यः सपरिवारेभ्यो देवेभ्य एकैकामाहुतिं दत्त्वा पुनर्व्याहृतिभिर्यथेष्टं हुत्वा तिलेन आज्येन वा शतं, सहस्रं, लक्षकोटिसंख्यादिकं वा होमं यथाविधिः कुर्यात्। प्रधानदेवायैवमाहुतिं दत्वा आज्यशेषभागं वह्नौ 'ॐ भूरग्नये पृथिव्यै महते च स्वाहा। ॐ भुवो वायवे अन्तरिक्षाय च दिवे महते स्वाहा। ॐ स्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते च स्वाहा। ॐ भूर्भुवः स्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते च स्वाहा' इति मन्त्रैर्विनिःक्षिपेत्[2]।

एवञ्च सम्पन्ने सति होमे अग्नेर्नामाकृतिं स्मर्यं ब्रह्मार्पणपुरस्सरं स्वेष्टसाधनं हृदये निधाय पूर्णाहुतिं दद्यात्। एतेन विधिना होमेन साधकः स्वेष्टसिद्धिं विन्दति।

---

१. प्रादेशमात्रस्यालाभे होतव्या सकला अपि। (शा० त० १८,८८)।

२. अग्नौ स्वाहेति तद् भागे शेषमग्नौ विनिःक्षिपेत्॥ (शा० त० १८,९८३)।

शारदोक्तविधिना कुण्डे क्व अग्निमुखमिति जिज्ञासिते उक्तम्—यत्र अप्रज्वलितं काष्ठमेव दृश्यते, तदेवाग्नेः श्रोत्रं, यत्र च धूमस्तत्र नासिका परिकल्पनीया। यत्र मन्दं प्रज्वलनं तत्र नेत्रं, यत्र च भस्म तत्राग्नेः शिर इति, यत्र प्रज्वलितोऽग्निस्तत्रैव तस्य मुखमवगन्तव्यमिति।

### वह्नेर्मुखातिरिक्ते होमे दोषः

वह्नेः कर्णे होमे सति साधकस्य बधिरत्वं, नेत्रे क्षतं, नासिकायां मनःपीडनं, शिरसि होमे शूलावाप्तिश्च भवति, तस्मान्नेत्रकर्णनासिकाशिरःषु होमो नैव शस्तः। वह्नेर्मुखे हवनेन सर्वथा सर्वदैव सुखसम्प्राप्तिरुक्ता। तस्मान्मुखे एव वह्नौ जुहुयात्।

### होमान्ते शुभाशुभफलज्ञानम्

हवनान्ते कुण्डात् यदि भेरीमेघहस्ति-इन्द्रसमध्वनिर्निर्गच्छति, तदा शुभं फलम्। यदि चन्द्रचन्दनकुन्दसदृशो धूमः कुण्डादुदेति, तदा अपि सर्वसिद्धिर्ज्ञेया। कुण्डाद्यदि खरवायसवच्छब्दो निःसरति, तदा सर्वविनाश-फलं ज्ञेयम्। यज्ञीयो धूमो यदि कृष्णः कृष्णगतेर्वर्णको भवति, तदा यजमानस्य नाश इति। कुण्डाद् नागचम्पकपुन्नागपाटलयूथिकापद्मेन्दी-वरकह्लारघृतगुग्गुलसदृशशुभगन्धोदये च सर्वथेष्टसिद्धिर्ज्ञेया। कुण्डात् दुर्गन्धियुतो वायुः सर्वेष्टहानिदो ज्ञेय इति। तथा च सत्सु दोषेषु प्रायश्चित्त-रूपेण मूलमन्त्रेणाज्याहुतीन् पञ्चविंशतिसंख्याका दद्यात्। तथा कृते सत्य-शुभदोषाः पराहता स्युरित्यलम्।

ग्रन्थकारा अन्ते सर्वमङ्गलादोनामर्थां[1] इति स्तम्भेन सर्वाराध्यां परास्बां दुर्गां स्मरन्ति, सर्वत्र सर्वरूपेषु तस्या एव स्थितिं च स्वीकुर्वन्ति। तत्प्रसादं विना कापिपि क्रिया भुक्तिमुक्तिमण्डिताश्च न सिद्ध्यन्ति। तस्मात् तस्याः प्रसादप्राप्तिः कथमपि स्यादित्यत्र तेषां निर्गलितोऽर्थः प्रतिभाति। अतः परमोपासकास्ते यतिवरा ब्रह्मानन्दस्वामिनो लोकानुद्धर्तुमुपकर्तुञ्च साधन-रूपेण प्रकाशयामासुर्ग्रन्थरत्नमिदं शाक्तानन्दतरङ्गिणीनामानमिति शम्।

### उपसंहारः

ज्ञानं सम्प्राप्य संसारे यः परेभ्यो न यच्छति।
ज्ञानरूपी हरिस्तस्मिन् प्रसन्न इव नेक्षते॥

१. शा० त० (१८।१०९ तः ११७)।

इति सत्यनारायणव्रतकथोद्धृतप्रथमाध्यायान्तर्गतस्कन्दपुराणवचनेन ज्ञानिभिर्ज्ञानप्रकाशनमावश्यकम् । तदुक्तं दण्डिनाऽपि काव्यादर्शग्रन्थेकारिकायाम्—

इदमन्धतमं कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥ इति ।
(का० द० १।४)

अतः किमपि ज्ञानं शब्दार्थमाध्यमेनैवोपपद्यते । तस्माल्लोककल्याणाय स्वान्तःकरणसुखाय च प्रवर्तन्ते तत्त्वज्ञा उपदेशदानेषु । तत्संप्रदायानुरोधेनैव तत्र भवन्तो ब्रह्मानन्दगिरिपरमहंसाः प्रणिनिन्युर्ग्रन्थरत्नमिदं 'शाक्तानन्दतरङ्गिणी' नाम । तत्रेदमवधेयं यद् ग्रन्थग्रन्थकारयोरुभयोर्नामान्वर्थतामत्र भजते । तथा हि 'शक्त्या भवः शाक्तः' तस्य य आनन्दः, स शाक्तानन्दः, तरङ्गाः सन्त्यस्यामिति तरङ्गिणी (नदी), 'अत इनिः' (पा०अ०सू० ५।२।११५), तस्मादुत्पद्यतेऽर्थो यत् यस्यां तरङ्गिण्यां शाक्त-आनन्दः (आनन्दशब्दो घञन्तः) सदोल्लसति, सा शाक्तानन्दतरङ्गिणी। तेन अन्वर्थतां भजते ग्रन्थनामा सर्वत्र सर्वविधोपायैः शक्तेराराधनायाष्टादशोल्लासात्मकोऽयं ग्रन्थः स्वसम्पादनपाटवेन ग्रन्थकर्तॄणां गाम्भीर्येण विषयनिरूपणविधानेन च तन्त्रागमराद्धान्ते शेखरायतां भजते। सर्वेऽत्र शास्त्रीयाः साधनविषयीभूताश्च विषयाः सूक्ष्मेक्षिकया सरलया सुस्पष्टतया च सेतुशैल्या प्रतिपादिता दरीदृश्यन्ते । मन्त्राणां तत्तद् देवानाञ्च सेतु-महासेतु-कुल्लुका-न्यासादिविधयो यादृशा अत्र ग्रन्थे प्रदर्शिताः सन्ति, न तत्समा अन्यत्र । अण्ड-पिण्डसिद्धान्तमुरसि निधाय शरीरनिरूपणं तत्र च समग्रसृष्टिप्रयुक्तग्रहमण्डल-चक्रमण्डल-पञ्चभूतात्मकं सर्वं चराचरस्यावस्थानं नूनं केषां प्रतिपित्सूनां हृदयं नावर्जयति? एवमेव गुरोर्माहात्म्यं, दीक्षाविधानं प्रातः कृत्यं, आसनं, शुद्ध्यादिकं, पूजोपचाराः, यन्त्रादीनां निर्माणं, कुण्डमण्डपादीनां विधय इति समेऽपि विषया याथातथ्येन शताधिकामूल्यतन्त्रागमग्रन्थवचनोद्धरणैर्ग्रन्थे मणीनामिव विराजमानाः संदृश्यन्ते । विषयचयने यथा पाटवमस्य ग्रन्थकर्तृम् न तथाऽन्यत्र दृश्यते । अतो महत्तमोऽयं ग्रन्थः स्वनामानुरूपं सर्वंतत्त्वं समेध्य राजतेततमामिति सुधीभिर्मृग्यम् ।

## कार्तज्ञ्यज्ञापनम्

तन्त्रागमराद्धान्तस्य दुरवगाहितां गुप्तां लुप्ताञ्च परम्परां जानन्त्येव प्राज्ञाः । परमत्र परमकारुणिका विद्योपासनादीनां मङ्गलमूर्त्तयस्तत्रभवन्तः

स्वर्गीया म० म० पण्डितगोपीनाथकविराजमहाभागा विंशतिख्रीष्टशताब्द्यामस्य शास्त्रस्योद्धाराय सत्संकल्पं चक्रुः। तत्प्रयासेन शास्त्ररक्षापरायणे काशीस्थ-सम्पूर्णानन्दसंस्कृतविश्वविद्यालये उत्तरप्रदेशीयशासनसहकारेण चास्य शास्त्रस्याध्ययनाय गुप्तलुप्ततन्त्रागमग्रन्थानां प्रकाशनाय च तदानीं 'योगतन्त्र' विभागस्येदानीं 'सांख्ययोगतन्त्रागमविभागस्य' च स्थापना समजनि। दुर्लभं नश्यन्तञ्च शास्त्रममुमध्यापनेन सहैव दुर्लभतन्त्रागमपाण्डुलिपीनामन्वेषणा-नुसंधानसम्पादनप्रकाशनादीनि कार्याणि तैःप्रारब्धानि। 'तन्त्रसंग्रहः'इति नाम्ना प्रकाशितेषु चतुर्षु प्रकाशनेष्वतीव महत्त्वमादधाना लुप्तप्रायाश्च केचन मूर्धन्य-ग्रन्थाः प्राकाश्यतामागताः। तत्क्रम एव पञ्चमभागे पूर्वभागत्वेनेदं प्रकाशनं जायते। अतः प्रकाशनस्यास्योपजीव्यत्वेन स्वनामधन्याः परमगुरवः शास्त्र-मूर्त्तयः कविराजमहाभागा एवादौ स्मरणीयाः। तदनु, सांख्ययोगतन्त्रागम-विभाग आचार्यपदवीमादधाना म० म० पण्डित गोपीनाथकविराजमहाभागानां कीर्तिध्वजानुयायिनस्तत्र भवन्त आचार्यश्रीव्रजवल्लभद्विवेदमहाभागाः सर्वथा स्मरणीया वन्दनीयाश्च। एतेषामनुग्रहेणाहं तन्त्रागमविभागेऽध्यापयितुं कार्यञ्च कर्तुं प्राभवम्। एतत्कार्यं तन्निर्देशानुसारमेव मया यथाशक्त्या प्रत्यपादि। अतस्ते सर्वथा मम प्रयोजककर्तृत्वेनादरस्थानं गताः। तदुच्यते—

तन्त्रागमैकविद्याब्धौ संतारण उदारधीः।
व्रजवल्लभबुधवाग् भूयान्मम शिवाय हि ॥ इति।

अत्रैव स्वर्गीयाणां विद्यातपोभिः प्रक्षीणकल्मषानामाचार्यश्रीभूपेन्द्रपति-त्रिपाठि श्रीरघुनाथमिश्रमहाभागानामुपकारस्मरणं न विस्मरामि। त एव महा-भागा आदौ मम बोधोऽकुर्वन्। आचार्यविविधविरुदालङ्कृतानां डॉ० कालिका-प्रसाद शुक्ल-पण्डितश्रीकरुणापतित्रिपाठि-डॉ० श्रीरामप्रसादत्रिपाठिवर्य्याणा-मपि विद्याबोधनाय लेखने सम्पादने च प्रेरणायै सदोपकारपूर्वकं स्मरणं ज्ञापयामि।

सदा सस्नेहाशीभिः प्रतिबोधनैश्च स्वमार्गे प्रवर्तकाणामाचार्यकुलपतिपद-भाजां स्वगुरूणां तत्रभवतां डॉ० देवस्वरूपमिश्रमहाभागानामहं सदाऽधमर्णः। ते च सर्वथा सर्वविधिना मम सर्वेषु कार्येषु स्वामोघाशीर्वचनैः सभाजयन्ति। तेषामुपकारस्मरणाय कार्तज्ञ्यज्ञापनाय च न वर्तते मम समीपे तद्भावानुकूलः कश्चिच्छब्दः। अतः पद्येनैकेन तेषामुपकारस्मरणं सभाजयामि—

न्याये हिमाद्रौ परिक्रीडमाना
पदप्रपन्ना परमानभङ्गा ।
गङ्गेव गौर्यस्य हरेर्जयन्ती
देवस्वरूपं तमहं नमामि ॥ इति ।

तत्र कुलपतिचराणां विश्वनाथसदृशस्वभावनां डॉ॰गौरीनाथशास्त्रि-महोदयानामादेशेनाहमत्रकर्मणि प्रवृत्तः । सुकृतिनस्तेऽनुदिनं सुरभारतीं समुन्नयन् वर्तन्ते । तेभ्योऽपि प्रणामाञ्जलयो वितनोम्युपकारस्मणप्रसङ्गेन ।

येभ्यो ग्रन्थेभ्यो लेखेभ्यश्च किमपि साहाय्यं मयाऽधिगतं तेभ्यः समेभ्यः कृते कृतज्ञतामुपकारञ्च ज्ञापनं शिष्टाचारानुरोधेन क्रियते । अत्रैव विद्याविद्योतितान्तःकरणाः सुधीनां परमाश्रयास्तत्रभवन्तो डॉ॰ विद्यानिवासमिश्राः काशीविद्यापीठविश्वविद्यालये कुलपतिपदमलङ्कुर्वाणा अपि सदा स्मरणीयाः । ते च सर्वथा ममात्र शास्त्रे बोधोत्सवाः प्रतिबोधपरायणाश्च स्वप्रवृत्तिवचनैर्मामुपकुर्वन्ति । एषामाशीर्वचनैश्चायं ग्रन्थः पूर्णतामेति ।

अन्ते च, प्रकाशनस्यास्य समग्रः श्रेयस्तत्रभवतां प्रकाशनाधिकारि डॉ॰ हरिश्चन्द्रमणित्रिपाठित्रय्याणां समधिगच्छति, येषां महत्याऽनुकम्पया प्रतिबोधनेन च ममेदं कार्यं सम्पन्नम् । यद्येते प्रतिबोधयितारो न स्युस्तदेदं कार्यमल्पकलेवरं क्षीणस्वरूपकमेव स्यात् । किञ्च, यत्प्रकाशनपाण्डित्यम्, तदपि व्याहतं स्यात् । तदेतत् सर्वं सुसम्पादनायैते प्रतिबोधयितृत्वेन सदोपकारस्मरणपूर्वकं कृतज्ञताभाजनानि ।

सर्वान्ते, प्रकाशनकार्यं चारुतरत्वेन सम्पादनाय 'रत्ना'यन्त्रालयस्य व्यवस्थापकानां कर्मकराणाञ्च कृतज्ञतां शिरसा आवहामि, यैः कुशलैः क्रियाकलापैरेते ग्रन्थाः सम्पादयन्ति न तथाऽन्ये यन्त्रालयीया व्यवस्थापकाः कर्मचारिणश्च । नूनमेतेषामेतत्कार्यं सारस्वतानुष्ठाने साम्प्रतमतीव महत्त्वमाधत्ते । अस्तु; सर्वे ते सुकृतिनः सर्वशिवाय सन्तु ।

एवं ह्यत्र सम्पादने यच्छिवं तद्भवतः, याश्च भ्रमप्रमादादिवशान्न्यूनतास्ता मदीया इति कृत्वा नीरं परित्यज्य क्षीरञ्चादाय तत्त्वज्ञा मामुपकरिष्यन्ति,

प्रतिबोधयिष्यन्ति च ताः, येन पुनः संस्करणे तन्मलापहरणं भवेदित्येव निवेद्य सूक्तिमिमां स्मरन् विरमामि—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

विदुषां वशंवदः
**राजनाथत्रिपाठी**
प्राध्यापकः, आगमस्य,
सांख्ययोगतन्त्रागमविभागे,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणस्याम्,
श्रावणपूर्णिमायाम्,
वि सं० २०४३

# शाक्तानन्दतरङ्गिणी

## अथ मङ्गलाचरणम्

प्रणम्य प्रकृतिं नित्यां परमात्मस्वरूपिणीम् ।
तन्यते भुक्तिमुक्त्यर्थं शाक्तानन्दतरङ्गिणीम् ॥ १ ॥

अथ का प्रकृतिः? तथाहि—गुणत्रयसाम्यावस्था प्रकृतिः । तथा चोक्तम्—

सत्वं रजस्तम इति गुणत्रयमुदाहृतम् ।
साम्यावस्थितिरेतेषामव्यक्तं प्रकृतिं विदुः ॥ २ ॥

सैव मूलप्रकृतिः स्यात् प्रधानं पुरुषोऽपि च ।
अत्रापि—
सत्त्वं रजस्तम इति गुणानां त्रितयं प्रिये ॥ ३ ॥

यदा सा परमा शक्तिर्गुणाधिष्ठानमाचरेत् ।
प्रकृतित्वं भवेत्तस्याः पुरुषः स्यात् सदाशिवः ॥ ४ ॥

नित्यशब्दार्थमाह शक्तियामले—

ब्रह्मविष्णुशिवादीनां भावो यस्यां निजेच्छया ।
पुनः प्रलीयते यस्यां नित्या सा परिकीर्तिता ॥ ५ ॥

परमश्चासौ आत्मा चेति परमात्मा, उत्कृष्ट आत्मा इत्यर्थः । उत्कृष्टत्वं च स्वेच्छया ब्रह्मविष्णुशिवादिशरीराणामुत्पादनम् (धत्ते ?) । अथवा तत्तदिन्द्रियरहितोऽपि तत्तदिन्द्रियजन्यप्रत्यक्षाश्रयः । तथा चोक्तं श्रुतौ—

'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः ।
स वेत्ति विश्वं नहि तस्य वेत्ता तमाहुराद्यं पुरुषं प्रधानम्' ॥ इति ।

नित्यज्ञानकृत्याश्रयः परमात्मा। स च लाघवाद् एक एव। न च जन्यज्ञानप्रकृत्याश्रयो जीवात्मा, स चानन्तः, मनुष्यपशुपक्ष्यादिभेदात्। तथा शिवविष्णुदुर्गादीनां शरीरभेदाद् नाना एवास्तु इति वाच्यम्, भक्तानुग्रहाय गृहीतशरीराणां नानात्वेन तत्र नानात्वभ्रमात्। नहि भ्रमाद् वस्तुसिद्धिरिति।

### अथ प्रतिपाद्यविषयसंक्षेपः

उल्लासे प्रथमे वक्ष्ये शरीरं कर्मसम्भवम्।
दीक्षा द्वितीये वक्ष्यामि तृतीये योगनिर्णयम्॥ १॥

प्रातःकृत्यं चतुर्थे तु आसनं पञ्चमे तथा।
अन्तर्यागविधिं षष्ठे नित्यपूजा च सप्तमे॥ २॥

वसौ मालाविधानं तु नवमे जपलक्षणम्।
महासेतुं च सेतुं च कुल्लुकां दशमे तथा॥ ३॥

मुखस्य शोधनं रुद्रे द्वादशे च पुरस्क्रियाम्।
संस्कारं यन्त्रराजस्य बलिदानं त्रयोदशे॥ ४॥

फलं चतुर्दशे चैव उपचारादिदानजम्।
नामस्मरणपूजादिफलं पञ्चदशे तथा॥ ५॥

कलौ संसर्गदोषादि प्रायश्चित्तं तु षोडशे।
कुण्डं सप्तदशे चैव होमं चाष्टादशे ततः।
गुरुपादरजो ध्यात्वा कृत उल्लासनिर्णयः॥ ६॥

# अथ प्रथमोल्लासः

ज्ञानभाष्ये

देव्युवाच

शरीरं कीदृशं नाथ मुक्तिर्वा केन कर्मणा ।
इदानीं श्रोतुमिच्छामि ब्रूहि मे शशिशेखर ॥ १ ॥

ईश्वर उवाच

शृणु देवि प्रवक्ष्यामि शरीरं कर्मरूपिणम् ।
रजस्वला च या नारी विशुद्धा पञ्चमे दिने ॥ २ ॥

पीडिता कामबाणेन ततः पुरुषमीहते ।
भगलिङ्गसमायोगान्मैथुनं स्यात्तथा तयोः ॥ ३ ॥

अन्योन्यस्पर्शनाद् देवि जायते च महत्सुखम् ।
क्षरते च तथा रेतः प्राणापानविसंसृतिः ॥ ४ ॥

क्षितिरापस्तथा तेजो वायुराकाशमेव च ।
सर्वेषां तत्त्वं प्राहुः स्याद् देहस्थरक्तबीजयोः ॥ ५ ॥

नाभिरन्ध्रे तथा देवि भ्रमते च समीरणैः ।
कुम्भकारो यथा चक्रे घटते च घटादिकम् ॥ ६ ॥

तथा समीरणो गर्भे घटते प्राणिनां तनुम् ।
कललं चैकरात्रेण बुद्बुदं पञ्चमे दिने ॥ ७ ॥

शोणितं दशरात्रेण मांसपिण्डं चतुर्दशे ।
मासैकेऽपि च सम्पूर्णे मांसपिण्डोऽङ्कुरायते ॥ ८ ॥

आदौ संजायते बीजो ब्रह्माण्डः सदृशाङ्कुरः ।
तस्य मध्ये सुमेरुश्च कङ्कालदण्डरूपिणः ॥ ९ ॥

चराचराणां सर्वेषां देवादीनां विशेषतः ।
आलयः सर्वभूतानां मेरोरभ्यन्तरेऽपि च ॥ १० ॥

प्रदीपकलिकाकारं जीवं हृदि सदा स्थितम् ।
रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः ॥ ११ ॥

गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ।
जीवस्य परमेशानि परिवारगणं शृणु ॥ १२ ॥

अक्षिणी नासिके कर्णौ जिह्वा च कमलानने ।
हस्तौ पादौ महेशानि गुह्योपस्थौ क्रमात् प्रिये ॥ १३ ॥

नाभिश्च परमेशानि मनश्च परमेश्वरि ।
जाग्रत्स्वप्नसुषुप्त्यवस्थेति देहिषु संस्थिता ॥ १४ ॥

इन्द्रियाणां च सर्वेषां मनः परमसारथिः ।
पापैः पुण्यैर्महेशानि बन्धः स्यादात्मनः प्रिये ॥ १५ ॥

सङ्गत्या सदसत्कर्म जीवः सर्वं करोति हि ।
शुद्धसत्त्वात्मको जीवः सदसत्कर्मवर्जितः ॥ १६ ॥

मनसा जीवसंयोगात् स कार्यं कुरुते सदा ।
मासद्वये तु सम्पूर्णे मेदस्तत्र प्रजायते ॥ १७ ॥

मज्जास्थीनि त्रिभिर्मासैः केशास्त्वक् च चतुष्टये ।
कर्णाक्षिनासिका वक्त्रं कण्ठोदरं च पञ्चमे ॥ १८ ॥

शुक्रादुत्पद्यते रक्तं रक्ताद् बिन्दुसमुद्भवः ।
प्राणतो वायुरुत्पन्नः कालाग्निः स्यादपानतः ॥ १९ ॥

शुक्रतो नाडिकोत्पत्तिः शुक्रादग्निः समुद्भवः ।
मांसतश्च मलोत्पत्तिर्मज्जा चापि ततो भवेत् ॥ २० ॥

वायुना प्राणनिष्पत्तिरपानादग्निसम्भवः ।
शुक्रेणोत्पादिता जिह्वा नासिका सर्वदेहिनाम् ॥ २१ ॥

रक्तादुत्पद्यते नेत्रं वामं चैव तु दक्षिणम् ।
प्राणादुत्पद्यते शून्यं प्राणरन्ध्रद्वयं तथा ॥ २२ ॥

षष्ठे मुखं तथा पादौ सर्वाङ्गानि च सप्तमे ।
सन्धिः सम्पूर्णतां याति अष्टमे मासि वै ततः ॥ २३ ॥

मुण्डाधरस्तु कङ्काल आरभ्य गुदमूलतः ।
द्वात्रिंशज्ज्ञानविज्ञेयो ग्रन्थिनो वर्द्धते सदा ॥ २४ ॥

तस्य मध्ये सदा सर्वा नाड्यस्तत्र व्यवस्थिताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयिका ॥ २५ ॥

गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुषा कुहुश्चैव शङ्खिनी दशमी तथा ॥ २६ ॥

अन्याश्च नाडिकाः क्षुद्राः सहस्राणां द्विसप्ततिः ।
इडा च वामभागे तु दक्षिणे पिङ्गला तथा ॥ २७ ॥

ब्रह्मरन्ध्रे सुषुम्ना च गान्धारी वामचक्षुषि ।
दक्षिणे हस्तिजिह्वा च पूषा च कर्णदक्षिणे ॥ २८ ॥

वामे यशस्विनी चैव मुखे चालम्बुषा तथा ।
कुहुश्च लिङ्गमूले च शङ्खिनी शिरसोपरि ॥ २९ ॥

एवं द्वारं समावृत्य तिष्ठन्ति दशनाडिकाः ।
क्षितिश्च वारितेजश्च पवनाकाशमेव च ॥ ३० ॥

स्थैर्यं गता इमे पञ्च बाह्याभ्यन्तर एव च ।
अस्थि चर्म तथा नाडी लोममांसस्तथैव च ।। ३१ ।।

एते पञ्चगुणाः प्रोक्ताः पृथिव्यां च व्यवस्थिताः ।
मलमूत्रं तथा शुक्रं श्लेष्मा शोणितमेव च ।। ३२ ।।

एते पञ्चगुणाः प्रोक्ता आपस्तत्र व्यवस्थिताः ।
क्षुधा तृष्णा तथा निद्रा प्रमोहः कान्तिरेव च ।। ३३ ।।

एते पञ्चगुणाः प्रोक्तास्तेजस्तत्र व्यवस्थिताः ।
विबोधाक्षेपणाकुञ्चधारणं तर्पणं तथा ।। ३४ ।।

एते पञ्चगुणाः प्रोक्ताः मारुते च व्यस्थिताः ।
रागद्वेषश्च मोहश्च भयं लज्जा तथैव च ।। ३५ ।।

एते पञ्चगुणाः प्रोक्ता आकाशे च व्यवस्थिताः ।
प्राणापानसमानश्चोदानव्यानौ च वायवः ।। ३६ ।।

नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ।
एते दशगुणाः प्रोक्ताः सर्वे प्राणसमात्मनः ।। ३७ ।।

हृदि प्राणो वसेन्नित्यमपानो गुदमण्डले ।
समानो नाभिदेशे च उदानः कण्ठदेशतः ।। ३८ ।।

व्यानः सर्वशरीरे तु प्रधानाः पञ्चवायवः ।
ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति कलेवरे ।। ३९ ।।

पातालभूधरं लोका आदित्यादिनवग्रहाः ।
नागाश्च सर्वदेहिनां पिण्डमध्ये व्यवस्थिताः ।। ४० ।।

पादाधस्त्वतलं विद्यात्तदूर्ध्वं वितलं तथा ।
जानुनोः सुतलं चैव तलं च सन्धिरन्ध्रयोः ।। ४१ ।।

तलातलं गुल्फमध्ये लिङ्गमूले रसातलम् ।
पातालं कटिसन्धौ च पादादौ लक्षयेद् बुधः ।। ४२ ।।

भूर्लोको नाभिदेशे तु भुवो लोकस्तथा हृदि ।
स्वर्लोकः कण्ठदेशे तु महर्लोकश्च चक्षुषि ।। ४३ ।।

जनलोकस्तदूर्ध्वञ्च तपोलोको ललाटके ।
सत्यलोको महायोनौ भुवनानि चतुर्दश ।। ४४ ।।

त्रिकोणे च स्थितो मेरु रुद्रलोके च मन्दरः ।
कैलाशो दक्षिणे कोणे वामकोणे हिमालयः ।। ४५ ।।

विन्ध्यो विष्णुस्तदूर्ध्वे च सप्तैते कुलपर्वताः ।
अस्मिन् स्थाने च द्रष्टव्यो जम्बूद्वीपो व्यवस्थितः ।। ४६ ।।

मांसेषु च कुशद्वीपः क्रौञ्चद्वीपः शिरासु च ।
शाकद्वीपः पयोरक्ते प्राणिनां सर्वसन्धिषु ।। ४७ ।।

तदूर्ध्वं शाल्मलिद्विपः प्लक्षश्च लोमसञ्चयः ।
नाभिश्च पुष्करद्वीपः सागरस्तदनन्तरम् ।। ४८ ।।

लवणोदस्तथा मूत्रे शुक्रे क्षीरोदसागरः ।
मज्जा दधिसमुद्रश्च तदूर्ध्वं घृतसागरः[१] ।। ४९ ।।

वारिधिः कच्चरः प्रोक्त इक्षुः स्यात् कटिशोणितम् ।
शोणितेषु स्वराः प्रोक्ताः ख्याताः सागरकीर्त्तिताः ।। ५० ।।

ग्रहाणां मण्डलं चैव श्रृणु वक्ष्यामि पार्वति ।
नादचक्रे स्थितः सूर्यो बिन्दुचक्रे च चन्द्रमा ।। ५१ ।।

---

१. 'रसोदके रसः प्रोक्त' इति पुस्तकान्तरे पाठः ।

लोचने मङ्गलः प्रोक्तो हृदि सोमसुतस्तथा ।
उदरे च गुरुश्चैव शुक्रे शुक्रस्तथैव च ।। ५२ ।।
नाभिचक्रे स्थितो मन्दो मुखे राहुः स्थितः सदा ।
पादे नाभौ च केतुश्च शरीरे ग्रहमण्डलम् ।। ५३ ।।
नवमे मासि गर्भस्थः सर्वान् संस्मरते मनः ।
नवद्वारपुरे देही समयांश्च विकारकान् ।। ५४ ।।
सुखं दुःखं समं कृत्वा भुक्तं च हृदये नृणाम् ।
सुकृतं दुष्कृतं चैव यत्कृतं पूर्वजन्मनि ।। ५५ ।।
तत्सर्वं सफलं ज्ञात्वा ऊर्ध्वपादस्त्वधोमुखः ।
गर्भे तु सुप्रविष्टे तु तिमिरे घोरदर्शने ।। ५६ ।।
यदि माता सुखं भुङ्क्ते अनुपानादिकं ततः ।
जनन्या नाभिदेशे तु मुखं दत्त्वा पिबत्यसौ ।। ५७ ।।
ततो जीवति गर्भेऽसौ अन्यथा मरणं भवेत् ।
अभ्यस्यामि शिवं ज्ञानं संसारार्णवतारणम् ।। ५८ ।।
चिरयोगी ततो भूत्वा मुक्तो यास्यामि तत्क्षणम् ।
एतस्मिन्नन्तरे देवि विश्वेषां गर्भसङ्कटे ।। ५९ ।।
निःसार्यते तदा बालः प्रबलैः सूतिमारुतैः ।
पतितोऽपि न जानाति मूर्च्छितोऽपि ततश्च्युतः ।। ६० ।।
सूतिवातगभीरेण योनिरन्ध्रस्य पीडनात् ।
विस्मृतं सकलं ज्ञानं गर्भे यच्चिन्तितं हृदि ।। ६१ ।।
यथा भवति तत्त्वेषु सूतिभूतेषु पीडनात् ।
मातरं स्मरते नित्यं बुभुक्षा दृढवेदनम् ।। ६२ ।।

रक्ताधिका भवेन्नारी भवेच्छुक्राधिकः पुमान् ।
नपुंसकं ततो जातं साम्ये च रजबीजयोः ॥ ६३ ॥

पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ।
आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ ६४ ॥

बालकश्च शिशुश्चैव गण्डः किशोरकस्तथा ।
अतः परं तु युवकः प्रौढश्चैव ततः परम् ॥ ६५ ॥

अतिप्रौढस्तथा वृद्धश्चातिवृद्धस्ततः परम् ।
पलितं मरणं चैव अवस्थाः परिकीर्त्तिताः ॥ ६६ ॥

तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् ।
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ॥ ६७ ॥

प्रेतदेहमिति प्रोक्तं क्रमादेव न संशयः ।
ततः सपिण्डीकरणे बान्धवैः सत्कृते नरैः ॥ ६८ ॥

पूर्णसंवत्सरे देहमतोऽन्यं संप्रपद्यते ।
ततः स नरके याति स्वर्गे वा स्वेन कर्मणा ॥ ६९ ॥

ततः इति तत्क्षणात्, मृत्युक्षणात् ।

देवत्वमथ मानुष्यं पशुत्वं पक्षितां तथा ।
कृमित्वं स्थावरत्वं च जायते जन्तु कर्मभिः ॥ ७० ॥

स्थावराः जङ्गमाद्याश्च पक्षिणः पशवो नराः ।
जायन्ते वा म्रियन्ते वा संसारे दुःखसागरे ॥ ७१ ॥

कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ।
देहे विनष्टे तत्कर्म पुनर्देहे प्रलभ्यते ॥ ७२ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा शुभाशुभं कर्म कर्त्तारमनुगच्छति ॥ ७३ ॥

प्राक्तनं बलवत्कर्म कोऽन्यथा तत् करिष्यति ।
देहः कर्मात्मकः प्रोक्तस्तंत्तद् देवि प्रतिष्ठितम् ॥ ७४ ॥

कर्मयोगानुरूपेण निर्मलं विधिमादिशेत् ।
चराचरमिदं देवि सर्वं कर्मात्मकं प्रिये ॥ ७५ ॥

माता कार्यं पिता कर्म कर्मैव परमो गुरुः ।
स्वर्गं वा नरकं वापि कर्मणैव लभेन्नरः ॥ ७६ ॥

सुखदुःखमयैः स्वीयैः पुण्यैः पापैर्नियन्त्रितः ।
तत्तज्जातियुतं देहं सम्भोगं च स्वकर्मजम् ॥ ७७ ॥

अत्र जन्मसहस्रैस्तु सहस्रैरपि पार्वति ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ ७८ ॥

निद्रा च मैथुनाहाराः सर्वेषां प्राणिनां समाः ।
ज्ञानवान्मानवः प्रोक्तो ज्ञानहीनः पशुः प्रिये ॥ ७९ ॥

सम्पदं स्वप्नसङ्काशं यौवनं कुसुमोपमम् ।
तडिद्वत् परमायुश्च यस्य ज्ञानलताधृतिः ॥ ८० ॥

चतुरशीति लक्षेषु शरीरेषु शरीरिणः ।
न मानुष्यं विनान्यत्र तत्त्वज्ञानं तु लभ्यते ॥ ८१ ॥

ब्रह्मविष्णुमहेशादि देवता भूतजातयः ।
नाशमेवानुधावन्ति तस्माच्छ्रेयः समाचरेत् ॥ ८२ ॥

स्वदेहधनदारादि निरताः सर्वजन्तवः ।
जायन्ते च म्रियन्ते च हा हताज्ञानमोहिताः ॥ ८३ ॥

प्रभवं सर्वदुःखानामाश्रयं सकलापदाम् ।
आलयं सर्वपापानां संसारं वर्जयेत् प्रिये ॥ ८४ ॥

प्रतिक्षणमयः कालः क्षीयमाणो न लक्षते ।
आमकुम्भ इवाम्भस्थो विशीर्णश्च विभाव्यते ॥ ८५ ॥

अपत्यं मे कलत्रं मे धनं ने बान्धवाश्च मे ।
लपन्तमिति मर्त्यं तमत्ति कालवृकोदरः ॥ ८६ ॥

पृथिवी दह्यते येन मेरुश्चापि विशीर्यते ।
शुष्यते सागरजलं शरीरेष्वपि का कथा ॥ ८७ ॥

मोहपाशमयैः पाशैर्नरो बद्धो हि तिष्ठति ।
स्त्रीधनादिषु संसक्तो मुच्यते न कदाचन ॥ ८८ ॥

असकृद् देहकर्माणि सुखदुःखानि भुञ्जते ।
परत्राज्ञानिनो देवि यान्त्यायान्ति पुनः पुनः ॥ ८९ ॥

अबन्धबन्धनं सङ्गं हृतसङ्गं महाविषम् ।
सत्सङ्गश्च विवेकश्च निश्चयं नयनद्वयम् ॥ ९० ॥

यस्य नास्ति नरः सोऽन्धः कथं न स्यादनाकुलः ।
द्वे पदे मोक्षबन्धाय मिर्ममेति ममेति च ॥ ९१ ॥

ममेति बध्यते जन्तुर्ममेति प्रतिबध्यते ।
समेत्यध्यासनाद् बन्धो विमुक्तिर्निर्ममेति च ॥ ९२ ॥

मांसलुब्धो यथा मत्स्यो लौहशङ्कुं न पश्यति ।
सुखाल्लुब्धस्तथा देही यमबाधा न पश्यति ॥ ९३ ॥

कृत्वा पापविनिर्भिन्नं सिक्तं विषयसर्पिषा ।
रागद्वेषानलैः पक्वं मृत्युरश्नाति मानवम् ॥ ९४ ॥

स्वदेहमपि जीवोऽयं त्यक्त्वा याति कुलेश्वरि ।
स्त्रीमातृधनपुत्रादि सम्बन्धः केन हेतुना ॥ ९५ ॥

शतं जीवति अत्यल्पं निद्रा तस्यार्धहारिणी ।
बाल्यभोगजरादुःखैर्बद्धं तदपि निष्फलम् ।। ९६ ।।
दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः कृतो येन स सुखी नापरः प्रिये ।। ९७ ।।
प्रभाते मलमूत्राभ्यां मध्याह्ने क्षुत्पिपासया ।
रात्रौ मदननिद्राभ्यां बाध्यन्ते मानवाः सदा ।। ९८ ।।
दिव्यौषधं न सेवेत महाव्याधिविनाशनम् ।
तद् व्याधिर्बद्धनापथ्यं कुर्वन्ति बहुभेषजम् ।। ९९ ।।
स्वकर्मफलदे स्थित्वा दुष्कर्माणि करोति यः ।
कामधेनुः समाक्रम्य ह्यर्कक्षीरं समागतिः ।। १०० ।।
अनित्यानि शरीराणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसञ्चयः ।। १०१ ।।
अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
यो ध्रुवं नार्जयेद् धर्मं स मर्त्यो मूढचेतनः ।। १०२ ।।
नामुत्र हि सहायार्थं पिता माता च गच्छति ।
नापि पुत्रो न वा जातिधर्मस्तिष्ठति केवलम् ।। १०३ ।।
पुत्रदारमयैः पाशैः पुमान् बद्धो न मुच्यते ।
पण्डिते चैव मूर्खे च बलिन्यप्यथ दुर्बले ।। १०४ ।।
ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ।
राजतः सलिलादग्नेश्चौरतः स्वजनादपि ।। १०५ ।।
भयमर्थकृतां नित्यं मृत्योः पापकृतामिव ।
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।। १०६ ।।
नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ।
कर्मणा मनसा वाचा यः कर्मनिरतः सदा ।। १०७ ।।

अफलाकाङ्क्ष चित्तो यः स मोक्षमधिगच्छति ।

अफलाकाङ्क्षी स्वकीयभोगजनकतारहित इत्यर्थः ।

किमन्यमपि देवेशि मोहयेदमरानपि ।। १०८ ।।

अहो मोहस्य महात्म्यं तन्मायाजानितस्य च ।

इति यामलवचनात् ।

मार्कण्डेये च—

महामाया हरेश्चैतत्तया सम्मोह्यते जगत् ।। १०९ ।।

तया महामायाया जगत् संसारः मोह्यते । न केवलं जगत् सम्मोह्यते, देवता अपि ।

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।

बलादाकृष्य मोहाय महामाया प्रयच्छति ।। ११० ।।

ज्ञानिनामिति प्रशंसायामिन्, नित्यज्ञानिनामपि । महती चासौ माया चेति महामाया, ब्रह्मविष्णुशिवादीनां मोहजनकत्वात् महामाया । तथा चोक्तं यामले—

सैव माया प्रकृतिर्या सम्मोहयति शङ्करम् ।

हरिं तथा विरञ्चिं च तथैवान्याञ्जनुर्भवान् ।। ११० ।।

कालिकापुराणे—

गर्भान्तज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।

उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् ।। १११ ।।

पूर्वातिपूर्वसंस्कारसम्मोहनं नियोज्य च ।

आहारादौ ततो मोहं ममत्वं ज्ञानसंशयम् ।। ११२ ।।

क्रोधोपबोधनादिषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः ।

पश्चात् कामे नियोज्याशु चिन्तायुक्तमहर्न्निशम् ।। ११३ ।।

सा महामाया द्विविधा-विद्याऽविद्या च । या महामाया मुक्तेर्हेतुभूता सा विद्या । या महामाया संसारबन्धनहेतुभूता साऽविद्या । यथा मार्कण्डेये—

सा विद्या परमामुक्तेर्हेतुभूता सनातनी ।। ११४ ।।

संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ।
विद्या वाप्यथवाऽविद्या द्वावेतौ सम्भवावुभौ ॥ ११५ ॥
तत्कर्म यच्च बंधाय साऽविद्या परिकीर्तिता ।
यन्न बंधाय तत्कर्म सा विद्या परिकीर्त्तिता ॥ ११६ ॥
विद्याशु सर्वदा सेव्या नापविद्या कथञ्चन ।
अविद्या कर्मबन्धः स्याद् बद्धा ज्ञानं प्रणश्यति ॥ ११७ ॥
ज्ञाननाशाद् भवेद्धानिर्हानात् संहरणं पुनः ।
संहारात्तु भवेद् घोरो घोरान्नरकमेव च ॥ ११८ ॥
तस्मादविद्या कुत्रापि न सेव्यापि कदाचन ।
या विद्या सा महामाया सा तु सेव्या सदा बुधैः ॥ ११९ ॥

"योऽविद्यामुपासते सोऽयं तमः प्रविशति" इत्यत्रापि संसारैकनियतिरूपाऽविद्या इति । रुद्रयामले—

सुखदा मोक्षदा नित्या सर्वभूतेषु संस्थिता ।
यदा तुष्टा जगन्माता तदा सिद्धिमुपालभेत् ॥ १२० ॥
बन्धनीया सदा स्तुत्या पूजनीया च सर्वदा ।
श्रोतव्या कीर्त्तितव्या च माया नित्या नगात्मजा ॥ १२१॥
वृथा न कालं गमयेद् द्यूतक्रीडादिना सुधीः ।
गमयेद् देवतापूजाजपजापस्तवादिना ॥ १२२ ॥
किमन्यैव समालापैर्यदायुर्व्ययतामियात् ।
तस्मान्मन्त्रादिकं सर्वं विज्ञाय श्रीगुरोर्मुखात् ।
सुखेन मुच्यते देवि घोरसंसारबन्धनात् ॥ १२३ ॥

॥ इति श्रीपरिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां शरीरलक्षणकथनं नाम प्रथमोल्लासः ॥



## अथ द्वितीयोल्लासः

श्रीईश्वर उवाच—

श्रृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
विना दीक्षां न मोक्षः स्यात् प्राणिनां शिवसासने ॥ १ ॥

न योगेन विना यन्त्रो न मन्त्रेण विना हि सः ।
द्वयोरभ्यासयोगेन ब्रह्मसंसिद्धिकारकम् ॥ २ ॥

तमः परिवृते गेहे घटो दीपेन दृश्यते ।
एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ॥ ३ ॥

सम्प्राप्ते षोडशे वर्षे दीक्षां कुर्यात् समाहितः ।
वसेन्मन्त्रैर्यथा विद्धमयः सौवर्णतां व्रजेत् ॥ ४ ॥

दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ।

इति कुलार्णवात् । मन्त्रमुक्तावल्याम्—

जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ॥ ५ ॥
नास्ति पापं यतस्तेषां सूतकं च यतात्मनाम् ।

रुद्रयामले—

आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥ ६ ॥

नहि देवाः प्रसीदन्ति कलौ चान्यविधानतः ॥ ७ ॥

आगमशब्दव्युत्पत्तिमाह रुद्रयामले—

आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे ।
मतं श्रीवासुदेवस्य तस्मादागम उच्यते ॥ ८ ॥

वक्त्रेभ्य इति बहुवचनं पञ्चाम्नायलाभार्थम् । तथा च कुलार्णवे—

मम पञ्चमुखेभ्यश्च पञ्चाम्नायाः समुद्गताः ।
पूर्वपश्चिमतश्चचैव दक्षिणोत्तरतो भवेत् ।
ऊर्ध्वं नयत्यधःस्थंचेदूर्ध्वाम्नाय इतीरितः ॥ ९ ॥

यावन्तः पांशवो भूमेस्तावन्तः समुदीरिताः ।
एकैकाम्नायजा मन्त्राः भुक्तिमुक्तिफलप्रदाः ॥ १० ॥
सर्वेषामेव मन्त्राणां देवता तत्फलप्रदा ।

इति वचनेभ्यो वासुदेवस्य मतं सम्मतम् इत्यर्थः । तेन वेदविरुद्धत्वाल्लाभान्नागमव्युदासः, सदागम एव आगमशब्दस्य मुख्यत्वात् । अत एवागमसंहितायाम् असदागमस्य निन्दामाह शिवः—

कलौ प्रायेण देवेशि राजसास्तामसास्तथा ॥ ११ ॥
निषिद्धाचरणाः सन्तो मोह्यन्त्यपरान् बहून् ।
आवाभ्यां पिशितं रक्तं सुरां चैव सुरेश्वरि ॥ १२ ॥

वर्णाश्रमोचितं धर्ममविचार्यार्पयन्ति ये ।
भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः ॥ १३ ॥

इति वचनात् । श्रीक्रमेऽपि—

शिवेन परया शक्त्या द्वाभ्यां कृत्स्नं समुद्धृतम् ।
वाच्यवाचकभावेन द्वाभ्यां ब्रह्म प्रकाशितम् ॥ १४ ॥

दीक्षाशब्दार्थमाह यामले—

दिव्यज्ञानं यतो दद्यात् कुर्यात् पापक्षयं यतः ।
तेन दीक्षेति लोकेऽस्मिन् कीर्त्तिता तन्त्रपारगैः ॥ १५ ॥

उपचारसहस्रैस्तु अर्चितां भक्तिसंयुताम् ।
अदीक्षितार्चनं देवा न गृह्णन्ति कदाचन ॥ १६ ॥

कर्माखिलं वृथा यस्मात्तस्माददीक्षितः पशुः ।

क्रियासारे—

कल्पे दृष्ट्वा तु यो मन्त्रं जपेद् गुरुमनाश्रितः ।। १७ ।।
सुतनाशो भवेत्तस्य फलमस्य सुदूरतः ।

यामले—

गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम् ।। १८ ।।
तस्माद् यत्नाद् गुरुं कृत्वा मन्त्रसाधनमाचरेत् ।। १९ ।।

गुरुशब्दार्थमाह यामले—

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।
उकारः शम्भुरित्युक्तस्त्रितयात्मा गुरुः स्मृतः ।। २० ।।

सारसंग्रहे—

विशुद्धमातापितृको जितेन्द्रियः,
सर्वागमज्ञः परदुःखकातरः ।
यथार्थवाग्वेदविदङ्गपारगः,
शान्तः कुलीनो गुरुरीरितो द्विजः ।। २१ ।।

द्विज इत्युपादानाद् ब्राह्मणेभ्यः । तन्त्रे—

अनाचारो द्विजो यस्तु वर्णानां गुरुरेव सः ।

अन्यत्रापि—

अधर्मनिरतो भूत्वा कृत्वा द्विजगुरोर्मुखात् ।
सर्वसिद्धिमवाप्नोति शीघ्रं देवत्वमाप्नुयात् ।। २२ ।।

शूद्रः शूद्रमुखाच्छ्रुत्वा विद्यां वा मन्त्रमुत्तमम् ।
गृहीत्वा नरकं याति दुःखमाप्नोति निश्चितम् ।। २३ ।।

नवरत्नेश्वरे—

सर्वेषामेव दीक्षाणां मुक्तिः फलमखण्डितम् ।
अविशेषाद् भवत्येषा प्रासङ्गिक्यस्तु भुक्तयः ।। २४ ।।

यामले—

दीक्षितो ब्राह्मणो याति ब्रह्मलोकमनामयम् ।
ऐन्द्रलोकं क्षत्रियोऽपि प्राजापत्यं तथा विधिः ।। २५ ।।

याति गन्धर्वनगरं शूद्रो दीक्षाप्रभावतः ।। २६ ।।

अत्र शूद्रदीक्षाधिकारश्रुतेः "न शूद्राय मन्तुं दद्यात्" इति वेदमन्त्रपरम्, देवताविशेषपरं मन्त्रविशेषपरं वा । वाराहीतन्त्रे—

गोपालस्य मनुर्देयो महेशस्यापि पादजे ।
तत्पत्न्याश्चापि सूर्यस्य गणेशस्य मनुस्तथा ।
एष दीक्षाधिकारी स्यादन्यथा पापभाग् भवेत् ।। २७ ।।

इति वचनात् देवतान्तरस्य मन्त्रे शूद्रानधिकारः । नृसिंहतापनीयश्रुतिः— "सावित्रीप्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति" इति । लक्ष्मीं श्रीबीजं लक्ष्मीमन्त्रमित्यपि कश्चित् । गोपालस्य दशाक्षरः, श्यामाया द्वाविंशत्यक्षरश्च स्वाहागर्भोऽपि 'शूद्राय देयः सर्वेषु वर्णेषु तथाश्रमेषु' इति क्रमदीपिकायां अभिधानात् ।

नात्र सिध्यपेक्षास्ति न च सिद्धिविचिन्तनम् ।
न चाधिकारचिन्तात्र ग्रहणे कालिकामनोः ।। २८ ।।

इति कालीकुलसर्वस्ववचनाच्च । तस्माद् गोपालस्य दशाक्षरः श्यामायाश्च द्वाविंशत्यक्षरमन्त्रग्रहणे शूद्रस्याधिकारः ।

भूतशुद्धौ—

तन्त्रोक्तप्रणवं देवि वह्निजायां च सुन्दरि ।
प्रजपेत् सततं शूद्रो नात्र कार्या विचारणा ।। २९ ।।

स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददाति यः ।
शूद्रो निरयगामी स्याद् ब्राह्मणो यात्यधोगतिम् ।। ३० ।।

इति वैदिकमन्त्रपरम् ।

स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ।
स्पप्नलब्धा च या दीक्षा तत्र नास्ति विचारणा ।। ३१ ।।

स्त्रिय इति पदं न सर्वत्र स्त्रीपरम् । विधवाया च न गुरुत्वम् । तदुक्तं तत्त्वसारे—

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्वतन्त्रार्थसारज्ञा सधवा पूजने रता ।
गुरुयोग्या भवेदेषा विधवां परिवर्जयेत् ।। ३२ ।।

यत्तु—

विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।
नाधिकारो विना नार्या भार्याया भर्त्तुराज्ञया ।। ३३ ।।

इति विधावाया गुरुत्वबोधनम्, तदमूलकम् । समूलत्वेऽपि—

सिद्धमन्त्रो नरः सर्वमयोग्ययोग्यतां नयेत् ।

इति वचनैकवाक्यतया साधितमन्त्रविषयम् । गुरुदीक्षातन्त्रे

मृतमप्यनुगच्छेत् विद्यामन्त्रो विशेषतः ।। ३४ ।।

एवमेव मनुष्यस्य पूर्वकर्मणि संसृतिः ।
यदि न स्यान्महेशानि स मनुष्यः कथं भवेत् ।। ३५ ।।

दीक्षायां च कथं तस्य मनो भवति पार्वति ।
तस्मात्तु यत्नतो देवि पूर्वविद्यां समुद्धरेत् ।। ३६ ।।

गुरुदीक्षातन्त्रे—

बकुलाश्वत्थवटकं पत्ररत्नं श्रृणु प्रिये ।
वटपत्रे महेशानि शक्तिमन्त्रं लिखेत् प्रिये ।। ३७ ।।

अश्वत्थे विष्णुमन्त्रं च बकुले शिवमन्त्रकम् ।
रक्तचन्दने देवेशि काश्मीरे वा महेश्वरि ॥ ३८ ॥

शक्तिमन्त्रं लिखेद् देवि चन्दने विष्णुमन्त्रकम् ।
भस्मना शिवमन्त्रं च विलिखेत् परमेश्वरि ॥ ३९ ॥

सप्तसप्तसु पत्रेषु तत्तद्देवतायाः मन्त्रं लिखेदित्यर्थः ।

प्राणप्रष्ठिां तन्मन्त्रे कारयेद्यत्नतः सुधीः ।

तत्तद् देवतायाः प्राणप्रतिष्ठां कारयेत् ।

यथाशक्त्युपचारेण संपूज्य परमेश्वरि ॥ ४० ॥

ततः शिष्यश्चार्घ्यपात्रं हस्ते कृत्वा महेश्वरि ।
अनेन मनुना मन्त्री भास्कराय निवेदयेत् ॥ ४१ ॥

अर्घ्यद्रव्यमाह—

आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रक्तानि करवीराणि तथा रक्तं च चन्दनम् ॥ ४२ ॥

अष्टाङ्गं एषकोऽर्घ्यो वै भानवे परिकीर्त्तितः ।
ॐ भो देव पृथिवीपाल सर्वशक्तिसमन्वित ॥ ४३ ॥

ममार्घ्यं च गृहाण त्वं पूर्वविद्यां प्रकाशय ।
अर्घ्यं दत्त्वा नमस्कृत्य कृताञ्जलिः पठेत्ततः ॥ ४४ ॥

गान्धर्वे—

न दद्याद् भास्करायार्घ्यं शङ्खतोयैर्महेश्वरि ।
ॐ सूर्यः सोमो यमः कालो महाभूतानि पञ्च वै ॥ ४५ ॥

एते शुभाशुभस्येह कर्मणो नव साक्षिणः ।
सर्वे देवा शरीरस्था मम मन्त्रस्य साक्षिणः ॥ ४६ ॥

पूर्वजन्मार्जितां विद्यां मम हस्ते प्रदापय ।
पठेद्वेदं महेशानि सत्त्वरं पत्रमुद्धरेत् ।। ४७ ।।

उद्धृत्य पत्रमेकं तु गुरोर्हस्ते प्रदापयेत् ।
गुरुस्तु अक्षरश्रेणीन् अधीत्य परमेश्वरि ।। ४८ ।।

सेतुं तदा महेशानि तन्मन्त्राष्टशतं जपेत् ।
शिष्यस्य मस्तके हस्तं दत्त्वा चाष्टशतं जपेत् ।। ४९ ।।

गुरुस्तु प्राङ्मुखो भूत्वा शिष्यः प्रत्यङ्मुखः स्थितः ।
त्रिवारं दक्षिणे कर्णे वामकर्णे तथा सकृत् ।। ५० ।।

स्त्रीशूद्रविषये कुर्याद् वैपरीत्येन चिन्तनम् ।
आचम्य संयतो भूत्वा प्राणायामं विधाय च ।। ५१ ।।

अष्टोत्तरशतं जप्त्वा ऋष्यादिकसमन्वितम् ।
अष्टकृत्वा जपेन्मन्त्रं वामकर्णे सुरेश्वरि ।। ५२ ।।

इयं दीक्षा सर्वतन्त्रे शक्तिर्या परिकीर्त्तिता ।
गुरोर्लब्धां महाविद्यां अष्टोत्तरशतं जपेत् ।। ५३ ।।

गुरवे दक्षिणां दद्याद् वित्तशाठ्यं न कारयेत् ।
गुरवे गुरुपुत्राय तत्पत्न्यै वा प्रदापयेत् ।। ५४ ।।

कुलार्णवे—

गुरुप्रीतिसमुत्पन्ने देवताप्रीतिमाप्नुयात् ।
देवताप्रीतिमापन्ने मन्त्रसिद्धिर्भवेद् ध्रुवम् ।। ५५ ।।

पत्ररत्नप्रदानेन दीक्षां कुर्यात् कलौ युगे ।
ततः सिद्धो भवेन्मन्त्री नात्र कार्या विचारणा ।। ५६ ।।

एतज्ज्ञानं विना देवि दीक्षां कुर्याच्च यो नरः ।
दीक्षा तु विफला तस्य अन्ते च नरकं व्रजेत् ।। ५७ ।।

ततः शिष्यो महेशानि प्रणमेद् दण्डवद् भुवि ।

गुरुर्वदेत्—

उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ।। ५८ ।।
कीर्त्तिः श्रीः कान्तिमेधायुर्बलारोग्यं सदास्तु मे(ते) ।

योगिनीहृदये—

मन्त्रं दत्त्वा गुरुश्चैव उपवासं समाचरेत् ।। ५९ ।।
महान्धघोरनरके कृमिर्भवति नान्यथा ।

रुद्रयामले—

दीक्षां कृत्वा यदा मन्त्री उपवासं चरेद् यदि ।। ६० ।।

तस्य देवः सदा रुष्टः शापः पतति मूर्द्धनि ।

तन्त्रसारे—

चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।। ६१ ।।

मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ।

रुद्रयामले—

श्यामायां भैरवी ताराच्छिन्नमस्तासु भैरवे ।
मञ्जुघोषे तथा रौद्रे पञ्चाङ्गं नेष्यते बुधैः ।। ६२ ।।

तत्रापि गुह्यकालीविषये पञ्चायतनीदीक्षा एव । यथा विश्वसारे—

भूपुरेषु चतुष्कोणे पूजयेत् क्रमतः सुधीः ।
विष्णुं शिवं गणेशं च पूजयेच्च यथा क्रमात् ।। ६३ ।।

दीक्षायां चक्रविचारे दोषमाह गुप्तदीक्षातन्त्रे—

य: कुर्याच्चक्रगणनां दीक्षायां पशुपामरः।
स भ्रष्टः स च पापिष्ठः विष्ठायां जायते कृमिः॥ ६४॥

किं ऋणैः किं धनैर्वापि राश्यादिकविचारणे।
सिद्धसाध्यसुसिद्धारि(दि) विचारपरिवर्जितः॥ ६५॥

नास्ति सत्यं महेशानि नक्षत्र्यादिविचारणा।
राश्यादिगणनं नास्ति शङ्करेणेति भाषितम्॥ ६६॥

आगमकल्पद्रुमे—

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा।
तत्र लग्नादिकं किञ्चिन्न विचार्यं कथञ्चन॥ ६७॥

यामले—

शरत्काले युगाद्यायां ग्रहणे चन्द्रसूर्ययोः।
बोधने चैव दुर्गायाः कालाकालं न शोधयेत्॥ ६८॥

मत्स्यसूक्ते—

ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः।
सोमग्रहे विष्णुमन्त्रं सूर्ये शक्ति न चाचरेत्॥ ६९॥

यामले—

सूर्यग्रहे शक्तिमन्त्रं न प्रदद्याज्जिजीविषुः।
न गृह्णीयादपि तथा यदीच्छेदात्मनो हितम्॥ ७०॥

अत्र शक्तिपदं पञ्चमीपरम्। प्रकरणादित्युदयाकारः। अत एव—

श्रीकामकालीबीजानि लोपादौर्गश्च यो मनुः।
सूर्यस्योपग्रहे लब्धो नृणां शीघ्रफलप्रदः॥ ७१॥

इति यामलवचनमपि सङ्गच्छते। पराश्रीकामबीजानीति कुलमूलावतारे पाठः। पूर्ववचने शक्तिमन्त्रपदं श्रीबीजाद्यतिरिक्तमन्त्रपरमिति तु शिवदीक्षाटीकाकृतः। यामले—

लग्ने वाप्यथवालग्ने यत्र तत्र तिथावपि ।
गुरोराज्ञानुरूपेण दीक्षा कार्या विशेषतः ॥ ७२ ॥

न तिथिर्न व्रतं पूजा न स्नानं न जपक्रिया ।
दीक्षायां कारणं ज्ञानं स्वेच्छाप्राप्ते च सद्गुरोः ॥ ७३ ॥

सर्वे वाराः ग्रहाः सर्वे नक्षत्राणि च राशयः ।
यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥ ७४ ॥

अथ दशसंस्कारमाह शारदायाम्—

जननं जीवनं पश्चात्ताडनं बोधनं तथा ।
अथाभिषेको विमलीकरणाप्यने मनोः ॥ ७५ ॥

तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ ७६ ॥

मातृकावर्णास्तु "अकारादिक्षकरान्ता मातृकार्णाः प्रकीर्तिताः" इति तन्त्रगन्धर्ववचनात् । मातृकायन्त्रलेखनमाह—

भूमौ गोमयलिप्तायां विलिख्याष्टदलान्वितम् ।
चन्दनाद्यैः कठिन्या वा तात्तीयं कर्णिकागतम् ॥ ७७ ॥

दिशः स्वरान् केशरेषु वर्गानष्टदलेषु च ।
तस्माच्च गन्धपङ्केन भूम्यादौ यन्त्रमुद्धरेत् ॥ ७८ ॥

तार्त्तीये हेसौः—

कादिमान्ताः पञ्चवर्गा मातृकाः क्रमशोदिताः ।
यादिवान्ताः शादिहान्ता लक्षणे विलिखेत्ततः ॥ ७९ ॥

इति मातृकायन्त्रम्

प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ।
एतज्जीवनमित्याहुः सर्वमन्त्रविशारदाः ।। ८० ।।

दशधा शतधा वा जपः । यथा विश्वसारे—

पृथक् शतं वा दशधा मन्त्रवर्णान् जपेत् सुधीः ।
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।। ८१ ।।

प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ।
ताडनं ताडयेद् वर्णानखिलांश्चन्दनाम्भसा ।। ८२ ।।

शतं वा दशधा वापि बोधयेत्तु मनुं मतः ।
विलिख्य मन्त्रं तन्मन्त्री प्रसूनैः करवीरजैः ।। ८३ ।।

तन्मन्त्राक्षरसंख्यातैर्न्यादयान्तेन बोधनम् ।

यान्तेन रमिति बीजेन ।

अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ।। ८४ ।।

मन्त्रस्य चामुकं वर्णमभिषिञ्चामि हृद्युतम् ।
अभिषिञ्चेदष्टधा वा प्रत्येकमभिषेचनम् ।। ८५ ।।

शुभोदकेन दुग्धेन अभिषेकमुदाहृतम् ।
सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ।। ८६ ।।

मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम् ।
तारव्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः ।। ८७ ।।

मनुश्चतुर्दशस्वरो दण्डी अनुस्वारः । तेन ह्रौँ इति ।

कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।
तेन मन्त्रेण विधिवत् करणाप्यापनं मतम् ।। ८८ ।।
अमुकमन्त्रं तर्पयामि नम इत्यम्भसा च तम् ।

मधुना शक्तिमन्त्रेषु वैष्णवे चेन्दुमज्जलैः ॥ ८९ ॥
शैवे घृतेन दुग्धेन तर्पणं समुदीरितम् ।

दशधा तर्पयेत्तावदिति ।

तारमाया रमायोगे पुटितेन जपेन्मनुम् ॥ ९० ॥
शत अष्टोत्तरेणैव दीपयेत् साधकोत्तमः ।

तन्त्रान्तरे सप्तधा दीपनमिति ।

जप्यमानस्य मन्त्रस्य गोपनं न प्रकाशनम् ॥ ९१ ॥

इति मन्त्राणां दशसंस्काराः ।

विश्वसारे—

ग्रहीत्वा च महाविद्यां जपेज्जीवावधि प्रिये ।
महागुरुनिपातादौ न पूजायां विकल्पना ॥ ९२ ॥

मोहाद्वा यदि वा दैवात् पूजयेन्न च साधकः ।
तस्य सर्वविनाशः स्यान्मारयेत्तं सदाशिवः ॥ ९३ ॥

अशुचौ वा शुचौ वापि सर्वकालेऽपि सर्वदा ।
पूजयेत् परया भक्त्या नात्र कार्या विचारणा ॥ ९४ ॥

रुद्रयामले—

पूजयेन्मृतकेऽपि स्याज्जनने सरुजाऽपि वा ।
सर्वत्रैव विधिः प्रोक्तः सर्वकामफलप्रदः ॥ ९५ ॥

अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् ।
बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ॥ ९६ ॥

देवीविषये बाह्यपूजा कर्त्तव्या विशेषविधानात् । तथा चोक्तं वाराही-तन्त्रे—

तारायाश्चैव काल्याश्च त्रिपुरायाश्च सुव्रते ।
सूतके मृतके चैव न त्यजेयुर्जपार्चनम् ॥ ९७ ॥

यामले—

अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ।
न दोषो मानसे जाप्ये सर्वदेशेषु सर्वदा ।। ९८ ।।

विश्वसारे—

जागृत्शयान उत्तिष्ठन् भुञ्जानो गमनेऽपि वा ।
सिद्धमन्त्रे न दोषः स्यादशौचनियमेऽपि च ।
न कल्पना दिवारात्रौ न च संध्यावसानके ।। ९९ ।।

अथ गुरुमाहात्म्यम्—

गुरुः सर्वसुराधीशो गुरुः साक्षी कृताकृते ।
संपूज्य सकलं कर्म कुर्यात्तस्याज्ञया सदा ।। १०० ।।

गमनं पूजनं जापं भोजनं रमणं तथा ।
गृहीत्वाज्ञां गुरोः कुर्यात्तस्य सिद्धिर्विना जपात् ।। १०१ ।।

त्रिसन्ध्यं श्रीगुरोर्ध्यानं त्रिसन्ध्यं पूजनं गुरोः ।
त्रिसन्ध्यं भावयेन्नित्यं गुरुं परमकारणम् ।। १०२ ।।

स्वगुरुं हि विना देवि नान्यं च गुरुमर्चयेत् ।
प्रत्यक्षो वा परोक्षो वा प्रत्यहं प्रणमेद् गुरुम् ।। १०३ ।।

एकग्रामे स्थितो नित्यं त्रिसन्ध्यं प्रणमेद् गुरुम् ।
क्रोशमात्रं स्थितो भक्त्या गुरुं प्रतिदिनं नमेत् ।। १०४ ।।

अर्द्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधिः ।। १०५ ।।

तत्तत्संख्यागतैर्मासैः प्रणमेत् श्रीगुरुं प्रिये ।
यदि दूरे च चार्वङ्गि श्रीगुरुर्नगनंदिनि ।। १०६ ।।

संवत्सरस्य मध्ये तु पूजयेद् विधिनामुना ।
एकधोत्तरायणे काले एकधा दक्षिणायने ॥ १०७ ॥

एवं यो नाचरेद् देवि स भवेद् ब्रह्मराक्षसः ।
एकत्र गुरुणा सार्द्धं स्वपित्रोपविशेच्च यः ॥ १०८ ॥
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ।

तन्त्रे—

गुरुमालोकितः शिष्य उत्तिष्ठन्नासनं त्यजेत् ॥ १०९ ॥

जातिविद्याधनाढ्योऽपि दूरे दृष्ट्वा गुरुं मुदा ।
प्रणमेद् दण्डवद् भूमौ प्रदक्षिणमथाचरेत् ॥ ११० ॥

आयान्तमग्रतो गच्छेदागच्छन्तमनुव्रजेत् ।
प्रणम्य प्रवसेत् पार्श्वे तदागच्छेदनुज्ञया ॥ १११ ॥

मुखावलोकी सेवेत कुर्यादाज्ञादिमादरात् ।
असत्यं न वदेदग्रे न बहु प्रलपेदपि ॥ ११२ ॥

ऋणदानं तथादानं वस्तूनां क्रयविक्रयम् ।
न कुर्याद् गुरुणा सार्द्धं शिष्यो देवि कथञ्चन ॥ ११३ ॥

गुरुर्माता पिता स्वामी बान्धवाश्च सुहृद् गुरुः ।
इत्याधाय मनो नित्यं यजेत् सर्वात्मना गुरुम् ॥ ११४ ॥

गुरोरग्रे पृथक् पूजामौद्धत्यं च विवर्जयेत् ।
दीक्षां व्याख्यां प्रभुत्वं च गुरोरग्रे परित्यजेत् ॥ ११५ ॥

आसनं शयनं वस्त्रं भूषणं पादुकां तथा ।
छायां कलत्रमन्यत्र यद् दृष्टं तत् सुपूजयेत् ॥ ११६ ॥

यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ।
यथा गुरौ तथा स्वात्मन्येवं भक्तिक्रमः स्मृतः ।। ११७ ।।

गुरुशय्यासनं यानं पादुकोपानहौ तथा ।
स्नानोदकं तथाच्छायां लङ्घयेन्न कदाचन ।। ११८ ।।

अन्यत्रापि—

देवच्छायां गुरुच्छायां शक्तिच्छायां न लङ्घयेत् ।
यदि प्रमादतो देवि गुरोरग्रे प्रपूजयेत् ।। ११९ ।।

स याति नरकं घोरं सा पूजा निष्फला भवेत् ।
रिक्तहस्तेन नोपेयाद्राजानं देवतां गुरुम् ।। १२० ।।

फलं च पुष्पकादीनि यथाशक्त्या समर्पयेत् ।
भक्त्या शक्त्यनुसारेण गुरुमुद्दिश्य यत् कृतम् ।। १२१ ।।

स्वल्पमेव महत्तुल्यं तुल्यमाढ्यदरिद्रयोः ।
गुर्वर्थे कृपणो देवि रौरवं नरकं व्रजेत् ।। १२२ ।।

गुरुवाक्यानृतं कृत्वा आत्मवाक्यं तु स्थापयेत् ।
गुरुं जेतुं मनो यस्य पच्यते नरकार्णवे ।। १२३ ।।

गुरोर्नाम न भाषेत जपकालाद्रिते क्वचित् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नगनन्दिनि ।। १२४ ।।

भुञ्जते विबुधा भक्ता गुरोरुच्छिष्टमुत्तमम् ।
आगच्छेद् यदि चार्वङ्गि गुरुः शिष्यस्य मन्दिरे ।। १२५ ।।

शिष्यस्य मन्दिरं देवि कोटिसूर्यग्रहैः समम् ।
चन्द्रग्रहणकालं हि तद्दिनं वरवर्णिनि ।। १२६ ।।

गुरोर्दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।
गुरुं वा गुरुपुत्रं वा पत्नीं वा वरवर्णिनि ॥ १२७ ॥

विलङ्घ्य यदि चार्वङ्गि गच्छेत् साधकसत्तमः ।
तत्क्षणाच्चञ्चलापाङ्गि नरकं चोत्तरोत्तरम् ॥ १२८ ॥

उत्तरकल्पे—

साक्षाद्वापि परोक्षो वा गुरोराज्ञां समाचरेत् ।
परोक्षे तदनुज्ञानं विधानं शृणु शङ्करि ॥ १२९ ॥

पूजाकाले च चार्वङ्गि आगच्छेच्छिष्यमन्दिरम् ।
गुरुर्वा गुरुपुत्रो वा पत्नी वा वरवर्णिनि ॥ १३० ॥

तदा पूजां परित्यज्य पूजयेत् स्वगुरुं प्रिये ।
यद्यल्पं हि गुरोर्द्रव्यमदत्तं स्वीकरोत्यपि ॥ १३१ ॥

तिरश्चां योनिमागच्छेत् क्रव्यादैर्भक्षते सदा ।
सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च ॥ १३२ ॥

स्तुत्वा करपुटं कृत्वा मनसा ध्यानतत्परः ।

मन्त्रः—

विहितं विदधे नाथ विधेयं यत् कृपाकर ॥ १३३ ॥

अविरुद्धं भवेत्तत्र तत् त्वदीयप्रसादतः ।
इति मन्त्रेण संप्रार्थ्य ततः कर्म समाचरेत् ॥ १३४ ॥

महिषमर्दिनीतन्त्रे श्रीदेव्युवाच—

देवदेव महादेव कृपया परमेश्वर ।
गुरुपूजाविधानं मे विस्तराद् वद शङ्कर ॥ १३५ ॥

ईश्वर उवाच

दिव्यवीरं च चार्वङ्गि पूर्वोक्तं बहुशः प्रिये ।
मानवस्य क्रमं देवि संक्षेपान्निगदामि ते ॥ १३६ ॥

गुरुः परगुरुश्चैव परापरगुरुस्तथा ।
स्वगुरुः परमेशानि साक्षाद् ब्रह्म न संशयः ॥ १३७ ॥

तत्पिता परमगुरुः स्वयं विष्णुः क्षितौ सदा ।
तत् पिता परापरगुरुर्महेश्वरसमः सदा ॥ १३८ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
अतएव महेशानि साक्षाद् ब्रह्ममयो गुरुः ॥ १३९ ॥

अखण्डमण्डलाकारं सर्वव्यापि महेश्वरम् ।
सर्वेशं सर्वदं देवं प्रणमामि पुनः पुनः ॥ १४० ॥

पुरस्तात् पार्श्वयोः पृष्ठे नमस्तुभ्यं नमोनमः ।
त्रिसन्ध्यं श्रीगुरोर्ध्यानं त्रिसन्ध्यं पूजनं गुरोः ॥ १४१ ॥

त्रिसन्ध्यं भावयेन्नित्यं गुरुं परमकारणम् ।
गुरुं विना वरारोहे नास्ति सिद्धिः कदाचन ॥ १४२ ॥

गुरुं स्मृत्वा महेशानि दिवसे दिवसे प्रिये ।
पूजयेद् मानसैर्गन्धैर्धूपैर्दीपैस्तथोत्तमैः ॥ १४३ ॥

भक्ष्यैर्भोज्यैस्तथा पेयैर्दधिदुग्धैरनेकधा ।
पनसैर्नारिकेलैश्च तथा रम्भाफलैः प्रिये ॥ १४४ ॥

अन्नैर्नानाविधैर्देवि पूजयेत् स्वगुरुं प्रिये ।
स्वगुरुं हि विना देवि नान्यं च गुरुमर्चयेत् ॥ १४५ ॥

मत्स्यैर्मांसैर्महेशानि पुजयेद् भक्तितः प्रिये ।
गन्धैर्माल्यैश्च चार्वङ्गि पूजयेद् भक्तितः सदा ।। १४६ ।।

स्वर्णैश्च पट्टवस्त्रैश्च तथा कार्पाससम्भवैः ।
अविचित्रैर्विचित्रैश्च अतिसूक्ष्मैर्मनोहरैः ।। १४७ ।।

अलङ्कारैस्तथा देवि विविधैः स्वर्णनिर्मितैः ।
राजतैश्चैव चार्वङ्गि स्वगुरुं पूजयेत् सदा ।। १४८ ।।

आसनैर्विविधैर्देवि रक्तकम्बलसंयुतैः ।
तथा नानाविधैर्द्रव्यैः पूजयेत् स्वगुरुं सदा ।। १४९ ।।

गुरोर्मन्त्रं महेशानि प्रजपेत् सुरवन्दिते ।
गुरोः पत्नीं महेशानि पूजयेद् विधिनामुना ।। १५० ।।

गुरुवद् गुरुपुत्रेषु गुरुवत् तत्सुतेषु च ।
पूजयेत् प्रत्यहं भक्त्या अमुना विधिना प्रिये ।। १५१ ।।

गुरोरभावे चार्वङ्गि गुरुपुत्रं स्वयं शिवम् ।
तदभावे वरारोहे गुरुकन्यां च पूजयेत् ।। १५२ ।।

तदभावे च चार्वङ्गि गुरुस्नुषां प्रपूजयेत् ।
एषामभावे चार्वङ्गि गुरोर्गोत्रं प्रपूजयेत् ।। १५३ ।।

गोत्राभावे वरारोहे तथा मातामहस्य च ।
मातुलं मातुलानीं वा पूजयेद् विधिनामुना ।। १५४ ।।

यदि दूरे च चार्वङ्गि स्वगुरुर्नगनन्दिनि ।
संवत्सरस्य मध्ये तु पूजयेद्विधिनामुना ।। १५५ ।।

एकधोत्तरायणे काले एकधा दक्षिणायने ।
पूजयेद् गुरुदेवं च विधिना चामुना प्रिये ।। १५६ ।।

अपि नो पूजयेद् देवि अनेन विधिना प्रिये ।
प्रायश्चित्ती भवेद् देवि तत्क्षणात् स च साधकः ।। १५७ ।।

संवत्सरस्य मध्ये तु न गच्छेद् यदि साधकः ।
मन्दिरं गुरुदेवस्य सदा काशीपुरीसमम् ।। १५८ ।।

काशी समं महेशानि यः पश्येद् गुरुमन्दिरम् ।
शिवतुल्यो भवेद् देवि तत्क्षणात् स च साधकः ।। १५९ ।।

गुरोर्गेहं समासाद्य उच्छिष्टभक्षणं चरेत् ।
तदैव सहसा सिद्धिः साधकस्य भवेत् प्रिये ।। १६० ।।

अभोक्त्वा गुरुदेवस्य उच्छिष्टं वरवर्णिनि ।
विद्यां वा परमेशानि मन्त्रं वा नगनन्दिनि ।। १६१ ।।

न जपेत्तु कदाचित्तु कुत्रचित् क्वचिदेव हि ।
तन्मुखं चञ्चलापाङ्गि विष्ठाकूपसमं प्रिये ।। १६२ ।।

उच्छिष्टभक्षणाद् देवि मुखस्य शोधनं प्रिये ।
ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्च नगनन्दिनि ।। १६३ ।।

भुञ्जते विविधैर्भक्त्या गुरोरुच्छिष्टमुत्तमम् ।
गुरोरुच्छिष्टमन्नं च सदानन्दमयं प्रिये ।। १६४ ।।

गुरुं वा गुरुपुत्रं वा पत्नीं वा वरवर्णिनि ।
विलङ्घ्य यदि चार्वङ्गि नरकं चोत्तरोत्तरम् ।। १६५ ।।

मन्दिरं गुरुदेवस्य कुटीरं यदि पार्वति ।
कैलाशसदृशाकारं तदेव नगनन्दिनि ।। १६६ ।।

यद् यदिष्टतमं लोके साधकस्य शुचिस्मिते ।
तत्सर्वं गुरुवे दद्याद् भक्त्या परमयत्नतः ।। १६७ ।।

तदैव सहसा देवि मन्त्रसिद्धिः प्रजायते ।
गुरोराज्ञां समादाय प्रजपेदनिशं यदि ।। १६८ ।।

तदैव सहसा सिद्धिरष्टसिद्धीश्वरो भवेत् ।
पूजाकाले च चार्वङ्गि आगच्छेच्छिष्यमन्दिरम् ।। १६९ ।।

गुरुर्वा गुरुपुत्रो वा पत्नी वा वरवर्णिनि ।
तदा पूजां परित्यज्य स्वगुरुं पूजयेत् प्रिये ।। १७० ।।

देवतापूजनार्थं च यद्वा पुष्पादिकं प्रिये ।
तत्सर्वं गुरवे दत्त्वा पूजयेन्नगनन्दिनि ।। १७१ ।।

तदैव सहसा देवि वरदा प्रीतिमाप्नुयात् ।

रुद्रयामले—

गुरुर्वा गुरुपत्नी वा पुत्रो वापि समागतः ।। १७२ ।।

ज्येष्ठो वाप्यर्चनामध्ये शिष्यः सर्वार्चनां त्यजेत् ।
आज्ञया पूजयेच्छिष्य इति शास्त्रस्य निर्णयः ।। १७३ ।।

गन्धैः पुष्पैस्तथा धूपैस्तथा नैवेद्यकैरपि ।
पूजयेद् विविधैर्भक्त्या स्वगुरुं तत्सुतं च वा ।। १७४ ।।

गुरुदेवो हरः साक्षात्तत्पत्नी हरवल्लभा ।
गुरुपुत्रो गणेशः स्याद्विभाव्य पूजनं चरेत् ।। १७५ ।।

गुरुपत्नी महेशानि साक्षाद् देवीस्वरूपिणी ।
गणेशसदृशं देवि गुरुपुत्रं विभावयेत् ।। १७६ ।।

शिष्यस्य तद्दिनं देवि कोटिसूर्यग्रहैः समम् ।
चन्द्रग्रहणकालं हि तद्दिनं वरवर्णिनि ॥ १७७ ॥

गुरोर्दर्शनमात्रेण सर्वपापैः प्रमुच्यते ।
तत्क्षणाच्चञ्चलापाङ्गि दानं दद्याद्विचक्षणः ॥ १७८ ॥

स्वर्णगोतिलवस्त्रं च रजतं च विशेषतः ।
गुरोः प्रीतिं समुद्दिश्य दानं कुर्याद्विचक्षणः ॥ १७९ ॥

गुरोः प्रीतिं समुत्पन्ने देवता प्रीतिमाप्नुयात् ।
देवताप्रीतिमापन्ने मन्त्रसिद्धिर्भवेद् ध्रुवम् ॥ १८० ॥

गुरोः समीपे चार्वङ्गि न मिथ्या चोच्चरेत् क्वचित् ।
गुरोरङ्गे महेशानि देवताकारमुत्तमम् ॥ १८१ ॥

गुरोः क्रिया महेशानि पूजामूलं महत् पदम् ।
गुरोर्वाक्यं मूलमन्त्रं परं ब्रह्म स्वयं गुरुः ॥ १८२ ॥

अनेन विधिना देवि प्रत्यहं भावयेद् गुरुम् ।
तदैव सहसा सिद्धिर्जायते कमलानने ॥ १८३ ॥

इति श्रीपरिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिविरचितायां शाक्तानन्दतरङ्गिण्यां दीक्षानिर्णयो नाम द्वितीयोल्लासः ॥



## अथ तृतीयोल्लासः

ईश्वर उवाच—

विना चोपासनं देवि न ददाति फलं नृणाम् ॥

तन्त्रे—

ध्यातः स्मृतः पूजितो वा स्तुतो वा नमितोऽपि वा ।
ज्ञानातोऽज्ञानतो वापि पूजकानां विमुक्तिदः ॥ १ ॥

इत्यादिषु पूजादिकं विना चतुर्वर्गफलं न सम्भवति । निर्गुणब्रह्मणः केन प्रकारेण पूजादिकं कार्यम्, केन प्रकारेण च मुक्त्यादिकं दातुं शक्यम् (शक्यते ?) शरीररहितत्वात् । अत एव साधकानां हितार्थाय सगुणनिर्गुण-भेदाद् ब्रह्मणो द्वैविध्यमाह श्रीरामतापनीयश्रुतौ कुलार्णवे च ।

चिन्मयस्याद्वितीयस्य निष्फलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ २ ॥

अस्यार्थः—चिन्मयस्य ज्ञानमस्य । मार्कण्डेयपुराणे—

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत् ॥ ३ ॥

अद्वितीयस्य एकस्य । तथा चोक्तं योगिनीहृदये—

एको हि परमं ब्रह्म नानात्वेन निरूप्यते ।
स्थूलसूक्ष्मविभेदेन परं ब्रह्मस्वरूपिणी ॥ ४ ॥

गोपालतापिनीयश्रुतिरपि—

एक एव परं ब्रह्म मायया च चतुष्टयम् ॥ ५ ॥

तस्माद् ब्रह्मैव पुंरूपेण स्त्रीरूपेण माययैव नटवद् बहुधा भवति । "बहुरूप इव भाति मायया बहुरूपया" इति श्रुतेः । निष्कलस्य, कला माया, तया रहितस्य । आग्नेयपुराणे—

सकलो निष्कालो ज्ञेयः सर्वज्ञः परमो हरिः ।
देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः ॥ ६ ॥

हरिरित्युपलक्षणं यामले—

सगुणा निर्गुणा चेति महामाया द्विधा मता ।
सगुणा मायया युक्ता तया हीना तु निर्गुणा ॥ ७ ॥

अशरीरिणो मुखहस्तपादाद्यवयवावच्छिन्नशरीररहितस्य । भूतशुद्धौ—

निश्चलं परमं ब्रह्म कुतः प्रीतिः कुतः सुखम् ।
निराहारं निरीहं च रहितस्त्विन्द्रियेण च ॥
जन्म कर्माणि सर्वाणि ब्रह्मणो नास्ति भाविनी ॥ ८ ॥

प्रकृतेः सन्ति भाविनीति पाठश्च उपासकानां ज्ञानयोगभक्तियोगवतामित्यर्थः ।

लैङ्गे—

सर्वेषामेव मर्त्यानां विभोर्दिव्यवपुः शुभम् ।
सकलं भावनायोग्यं योगिनामपि निष्कलम् ॥ ९ ॥

योगिनां कर्मयोगज्ञानयोगभक्तियोगवतामित्यर्थः । आग्नेयपुराणे—

साधूनामप्रमत्तानां भक्तानां भक्तवत्सलः ।
उपकर्त्ता निराकारस्तदाकारेण जायते ॥ १० ॥
कार्यार्थं साधकानां च चतुर्वर्गफलार्थदः ।

तथा चोक्तं मार्कण्डेयपुराणे—

अराधिता सैव नृणां भोगस्वर्गापवर्गदा ॥ ११ ॥

बृहन्नारदीये—

भक्तानां मोक्षदानाय भवतो मूर्तिकल्पना ॥ १२ ॥

आराधना ध्यानपूजाभेदज्ञानात्मिका ध्यानभेदज्ञार्थं ब्रह्मणो रूपकल्पना इत्यर्थः । ध्यानं तु तत्तद् देवतायास्तत्तन्मन्त्रघटकीभूतं तत्तद् वर्णोत्पन्नमुखहस्तपादाद्यवयवावच्छिन्नशरीरज्ञानविषयार्थमिति तु निष्कर्षार्थः ।

गारुडेऽपि—

अमूर्तौ चित् स्थिरो न स्यात्ततो मूर्तिं विचिन्तयेत् ॥ १३ ॥

यामलेऽपि—

स्थूलसूक्ष्मविभेदेन ध्यानं तु द्विविधं भवेत् ।
सूक्ष्मं मन्त्रमयं देहं स्थूलं विग्रहचिन्तनम् ॥ १४ ॥
करपादोदरस्यापि रूपं यत् स्थूलविग्रहम् ।
सूक्ष्मं च प्रकृते रूपं परं ज्ञानमयं स्मृतम् ॥ १५ ॥
सूक्ष्मध्यानं महेशानि कदाचिन्नहि जायते ।
स्थूलध्यानं महेशानि कृत्वा मोक्षमवाप्नुयात् ॥ १६ ॥

यामले—

देवतायाः शरीरं तु बीजाद्युत्पद्यते ध्रुवम् ।
तत्तद्बीजात्मकं मन्त्रं जप्त्वा ब्रह्ममयो भवेत् ॥ १७ ॥
तदिष्टं भावयेद् देवि यथोक्तध्यानयोगतः ।
वर्णरूपेण सा देवी जगदाधाररूपिणी ॥ १८ ॥

बीजात् वर्णात् । बीजपरिभाषामाह कुलचूडामणौ–एकाक्षरीं समुद्धृत्य पूर्वं बीजं परं शक्तिरिति । पूर्वं कमिति परमीकारः । गान्धर्वे—

नित्यमेकाक्षरं ब्रह्म अक्षरं परमं पदम् ।
सकृज्जप्त्वाक्षरं मन्त्रं ब्रह्मभूयाय कल्पते ॥ १९ ॥
जप्त्वा तत् साधयेत् सर्वं बहुजापेन किं फलम् ॥ २० ॥

स्थूलः सूक्ष्म एक एव । तथा चोक्तं यामले—

घृतस्य द्विविधं देवि काठिन्यं स्वच्छता तथा ।
काठिन्यं स्वच्छतायां तु घृत एव न संशयः ॥ २१ ॥

पाद्मेऽपि—

दीपाद्युत्पद्यते दीपो यथा तत्तद् भविष्यति ।

इति वचनात्। अथवा पूज्यपूजकयोरभेदार्थं ब्रह्मणो रूपकल्पना।
तथा कौर्मे—

मन्यन्तु(न्ते)येषु(च)चा(आ)त्मानं विभिन्नं परमेश्वरात्।
न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः॥ २२॥

ईश्वर इत्युपलक्षणम्। तथा चोक्तं रुद्रयामले—

सर्वदेवमयीं देवीं सर्वदेवमयीं पराम्।
आत्मानं चिन्तयेद् देवीं परमानन्दरूपिणीम्॥ २३॥

अथ प्रसङ्गाद्योगज्ञानं लिख्यते—

अथापरं प्रवक्ष्यामि समाधिं भवनाशनम्।

भवनाशनं जन्मनाशनमित्यर्थः।

हृत्पद्मकर्णिकामध्ये ध्यायेत् सिंहं मनोहरम्॥ २४॥
सिंहोपरिस्थितं पद्मं रक्तं तस्योर्ध्वगः शिवः।
तस्योपरि महादेवी रमते कामरूपिणी॥ २५॥
सितः प्रोक्तो महादेवो ब्रह्मा लोहितपङ्कजः[1]।
हरिर्हरस्तु विज्ञेयो वाहनानि महौजसः॥ २६॥
ध्यायेच्च परमेशानि यथोक्तं ध्यानयोगतः।
देव्यात्मकं स्वमात्मानं भावयेद् यतमानसः॥ २७॥
तस्यान्यरूपं यद् यत्तत् स्वकीयमिति भावयेत्।
ऐक्यं सम्भावयेन्नित्यं स्वगुरुदेवतात्मनाम्॥ २८॥

श्रीक्रमेऽपि—

आत्मानं चिन्तयेद् देवीं शक्तिमाद्यास्वरूपिणीम्।
मनसा वचसा चैव कायिकेन च चिन्तयेत्॥ २९॥

---

१. रक्तः प्रोक्तोऽपि पङ्कज इति वा पाठः।

अन्यत्रापि—

आत्माऽभेदेन संचिन्त्य याति तन्मयतां नरः ।
सोऽहमित्यस्य सततं चिन्तनात्तन्मयो भवेत् ।। ३० ।।
अहं देवि न चान्योऽस्मि मुक्तोऽहमिति भावयेत् ।
रुद्रस्य चिन्तनाद्रुद्रो विष्णुः स्याद् विष्णुचिन्तनात् ।। ३१ ।।
दुर्गायाश्चिन्तनाद् दुर्गा भवत्येव न चान्यथा ।
एवमभ्यस्यमानस्तु अहन्यहनि पार्वति ।। ३२ ।।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
ध्यानयोगपरस्यास्य पूज्यो नास्ति कथञ्चन ।। ३३ ।।
विना न्यासैर्विना पूजां विना जप्यैः पुरक्रियाम् ।
ध्यानयोगाद् भवेत् सिद्धो नान्यथा खलु पार्वति ।। ३४ ।।
एतत्ते कथितं देवि ब्रह्मज्ञानमिदं महत् ।
विज्ञाय गुरुतो देवि संसारसागरं तरेत् ।। ३५ ।।
अहं ब्रह्मास्मि विज्ञानादज्ञानविलयो भवेत् ।
सोऽहमित्येव संचिन्त्य विहरेत् सर्वदा प्रिये ।। ३६ ।।
यथा फेणतरङ्गादि समुद्रादुत्थितं मुने ।
समुद्रे लीयते तद्वज्जगदात्मनि लीयते ।। ३७ ।।

इति गन्धर्वतन्त्रोक्तयोगः । तस्मात् साधकानां हितार्थाय ब्रह्म स्त्री पुं रूपं धत्ते । विष्णुयामले देवीं प्रति विष्णुवचनम्—

मातस्त्वत्परमं रूपं तन्न जानाति कश्चन ।
काल्याद्याः स्थूलं यद्रूपं तदर्चन्ति दिवौकसः ।। ३८ ।।

यामले—

स्त्रीरूपं वा स्मरेद् देवीं पुं रूपं वा स्मरेत् प्रिये ।
स्मरेद्वा निष्कलं ब्रह्म सच्चिदानन्दरूपिणम् ।। ३९ ।।

स्तनयोन्याद्यवयवावच्छिन्नशरीराः स्त्रीरूपावताराः। तद्यथा—

काली नीला महादुर्गा त्वरिता छिन्नमस्तका।
वाग्वादिनी चान्नपूर्णा तथा प्रत्यङ्गिरा पुनः ॥ ४० ॥

कामाख्या वासिनी बाला मातङ्गी शैलवासिनी।
इत्याद्याः सकला विद्याः कलौ पूर्णफलप्रदाः ॥ ४१ ॥

अन्यत्रापि—

उमेति केचिदाहुस्तां शक्तिर्लक्ष्मीति चापरे।
भारतीत्यपरे चैनां गिरिजेत्यम्बिकेति च ॥ ४२ ॥

दुर्गेति भद्रकीलीति चण्डी माहेश्वरी तथा।
कौमारी वैष्णवी चैव वाराह्यैन्द्रीति चापरे ॥ ४३ ।

ब्राह्मीति विद्या विद्येति मायेति च तथापरे।
प्रकृतिश्चापरा चैव वदन्ति परमर्षयः ॥ ४४ ॥

शिश्नाद्यवयवावच्छिन्नशरीरावच्छिन्नावताराः पुंरूपाः, यथा ब्रह्मविष्णु-शिवादयः। एवम्—

मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा।
रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥ ४५ ॥

इत्यादिः। नपुंसकं गृहस्थैरनुपास्यमेव, फलाजनकत्वात्।

गृहस्थानां च सर्वे स्युर्ब्रह्म वै ब्रह्मचारिणाम्।

गृहस्थानां च सर्वे स्युरित्युपादानात् शिवदुर्गाविष्णुपुरस्कारेण उपासना कार्या। तथा च विमलानन्दभाष्ये कूर्मपुराणम्—

मनुष्याणामुमा देवी तथा विष्णुः सदाशिवः ॥ ४६ ॥
या यस्याभिमता पुंसः सा हि तस्यैव देवता।
किन्तु कार्यविशेषेण पूजिता स्वेष्टदा नृणाम् ॥ ४७ ॥

नृणां मनुष्याणां अभेदेन पूजा कार्या। शैवे देवीं प्रति ईश्वरवाक्यम्—

एकं प्रशंसते यस्तु सर्वानेव प्रशंसति।
एकं निन्दति यस्तेषां सर्वानेव विनिन्दति ॥ ४८ ॥

ईश्वरस्य प्रशंसायां न सुखं निन्दायां वा न दुःखम्, सुखदुःखरहितत्वात्। किन्तु निन्दकस्य नरकमेव। तथा चोक्तं भाष्ये—

देवीविष्णुशिवादीनामेकत्वं परिचिन्तयेत्।
भेदकृन्नरकं याति यावदाहूतसम्प्लवम् ॥ ४९ ॥

आहूतसम्भवं प्रलयकालपर्यन्तमित्यर्थः। वाराहे—

यथा दुर्गा तथा विष्णुर्यथा विष्णुस्तथा शिवः।
एतत्त्रयमेकमेव न पृथग्भावयेत् सुधीः ॥ ५० ॥
योऽन्यथा भावयेदेतान् पक्षपातेन मूढधीः।
स याति नरकं घोरं रौरवं पापपूरुषः ॥ ५१ ॥

यामले—

ध्यानगम्यं प्रपश्यन्ति रुचिभेदात् पृथग्विधम् ॥ ५२ ॥

तन्त्रे—

एकैव हि महामाया नामभेदं समाश्रिता।
विमोहनाय लोकानां तस्मात् सममना भवेत् ॥ ५३ ॥
प्रवृत्तिमार्गसंस्थस्तु दीक्षाभेदेन पूजयेत्।
निर्वृत्तिं मार्गमाणस्तु भेदवादं विवर्जयेत् ॥ ५४ ॥

शिवविष्णोरुपासनां त्यक्त्वा देव्या उपासना कर्त्तव्या, कोमलान्तःकरणत्वात्, भुक्तिमुक्तिदातृत्वाच्च। शिवविष्णोरुपासनायां कायक्लेशेन मुक्तिमात्रम्। तथा च शारदायां भुवनेश्वरीं प्रति शिववाक्यम्—'आद्याप्यशेषजगतां नवयौवनासि शैलाधिराजतनयाप्यतिकोमलासि'। समयातन्त्रे—

कदाचित् कस्य मुक्तिः स्यात् कस्यचिद् भुक्तिरेव च।
एतस्या साधकस्याथ भुक्तिर्मुक्तिः करे स्थिता ॥ ५५ ॥

रुद्रयामले—

यत्रास्ति भोगो न च तत्र मोक्षो,
यत्रास्ति मोक्षो न च तत्र भोगः ।
शिवपदाम्भोज युगार्चकानां,
भोगश्च मोक्षश्च करस्थ एव ॥५६ ॥

योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्ष्यति ।
स्वप्नलब्धधनेनैव धनवान् स भवेद् यदि ॥५७॥

शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ।
तथान्यदर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्ष्यति ॥ ५८ ॥

इति श्रीपरिव्रजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यामभेदज्ञाननिर्णयस्तृतीयोल्लासः ॥

## अथ चतुर्थोल्लासः

### ईश्वर उवाच

यामले—

प्रातः कृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् ।
तस्य पूजा च विफला शौचहीना यथा क्रिया ॥ १ ॥

ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेद् गुरुदैवतम् ।
स्वमूर्द्धनि सहस्रारे शिवाख्यपरबिन्दुके ॥ २ ॥

ब्राह्म्यं मुहूर्त्तमाह यामले—

द्वौ दण्डौ रात्रिशेषे तु ब्राह्म्यं मुहूर्त्तकं विदुः ॥ ३ ॥

ध्यानं यथा—

शशाङ्कायुतसङ्काशं वराभयलसत्करम् ।
शुक्लाम्बरधरं श्रीमच्छुक्लमाल्यानुलेपनम् ॥ ४ ॥

वामोरौ रक्तशक्त्या च युतं देवाख्यमव्ययम् ।
शिवेनैक्यं समं नीय ध्यायेत् परगुरुं धिया ॥ ५ ॥

एवं ध्यात्वा पुनश्चैव पञ्चभूतमयैर्यजेत् ।
गन्धतत्त्वं प्रार्थिवं तु कनिष्ठाङ्गुलियोगतः ॥ ६ ॥

शब्दमयं महापुष्पं प्रथमाङ्गुलियोगतः ।
वायुरूपं महाधूपं तर्जनीभ्यां नियोजयेत् ॥ ७ ॥

तेजोरूपं महादीपं मध्यमाद्वययोगतः ।
अमृतं भोजनं तद्वदमृताङ्गुलियोगतः ॥ ८ ॥

नमस्कारेणाञ्जलिना वाग्भवात्ताम्बूलस्मृतम् ।
स्व स्व बीजेन सर्वं तु नमस्कारेण योजयेत् ॥ ९ ॥
गुरोर्मन्त्रं प्रयत्नेन प्रजपेत् सुरवन्दिते ।
वाणी च भुवनेशानी रमा चैव सुरेश्वरी ॥ १० ॥
तारत्रयमिदं प्रोक्तं गुरुमन्त्रं प्रतिष्ठितम् ।
ततः स्वगुरुं नमोऽन्तेनानन्दनाथमालिखेत् ॥ ११ ॥
रक्तशक्तिपदान्ते च अम्बापदमथालिखेत् ।
श्रीपादुकां समुच्चार्य पूजयामीति संजपेत् ॥ १२ ॥
तेजोरूपं समर्प्याथ स्तवेन तोषयेद् गुरुम् ।

श्यामारहस्ये—

मनसा गन्धपुष्पाद्यैः संपूज्य वाग्भवं जपेत् ॥ १३ ॥

कुब्जिकातन्त्रोक्तां स्तुतिं कुर्यात्—

ॐ नमस्तुभ्यं महामन्त्रदायिने शिवरूपिणे ।
ब्रह्मज्ञानप्रकाशाय संसारदुःखतारिणे ॥ १४ ॥
अतिसौम्याय दिव्याय वीरायाज्ञानहारिणे ।
नमस्ते कुलनाथाय कुलकौलिन्यदायिने ॥ १५ ॥
शिवतत्त्वप्रकाशाय ब्रह्मतत्त्वप्रकाशिने ।
नमस्ते गुरवे तुभ्यं साधकाभयदायिने ॥ १६ ॥
अनाचाराचारभावबोधाय भावहेतवे ।
भावाभावविनिर्मुक्तमूर्त्तये[1] गुरवे नमः ॥ १७ ॥
नमस्ते शम्भवे तुभ्यं दिव्यभावप्रकाशिने ।
ज्ञानानन्दस्वरूपाय विभवाय नमो नमः ॥ १८ ॥

---

१. भावाभावविनिर्मुक्तशक्तये इति वा पाठः ।

शिवाय शक्तिनाथाय विद्यानाथाय सच्चिदे ।
कामरूपाय कामाय कामकेलिकलात्मने ॥ १९ ॥

कुलपूजोपदेशाय कुलार्णवस्वरूपिणे ।
आरक्तनिजतच्छक्तिसमभावविभूतये ॥ २० ॥

नमस्तेऽस्तु महेशाय नमस्तेऽस्तु नमो नमः ।
इदं स्तोत्रं पठेन्नित्यं साधको गुरुदिङ्मुखः ॥ २१ ॥

प्रातरुत्थाय देवेशि ततो विद्या प्रसीदति ।
कुलसम्भवपूजायामादौ यो न पठेदिदम् ।
विफला तस्य पूजा स्यादभिचाराय कल्पते ॥ २२ ॥

इति कुब्जिकातन्त्रोक्तं श्रीगुरुस्तोत्रं समाप्तम् । एवं स्तुत्वा प्रणमेत्—

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ २३ ॥

अथ प्रसङ्गात् षट्चक्रव्यवस्था लिख्यते—

तिस्रः कोट्यस्तदर्द्धेन शरीरे नाड्यो मताः ।
तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः ॥ २४ ॥

प्रधाना मेरुदण्डोऽन्तश्चन्द्रसूर्याग्निरूपिणी ।
इडा वामे स्थिता नाडी शुक्ला तु चन्द्ररूपिणी ॥ २५ ॥

शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा ।
पिङ्गलाख्या च या दक्षे पुंरूपा सूर्यविग्रहा ॥ २६ ॥

दाडिमीकुसुमप्रख्या शिवाख्या चापरा मता ।
मेरुमध्यस्थिता या तु मूलदा ब्रह्मरन्ध्रगा ॥ २७ ॥

१. वामभागविभूषिते इति वा पाठः ।

सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी ।
सुषुम्नान्तर्गता चित्रा चन्द्रकोटिसमप्रभा ॥ २८ ॥

सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।
तस्या मध्ये ब्रह्मनाडी मृणालतन्तुरूपिणी ॥ २९ ॥

ब्रह्मरन्ध्रं तु तन्मध्ये हरवक्त्रात् सदाशिवम् ।
वामावर्तक्रमेणैव वेष्टितं विषतन्तुवत् ॥ ३० ॥

सुषुम्नाग्रन्थिसंस्थानि षट् पद्मानि यथा क्रमात् ।
आधाराख्यं मूलचक्रमतिरक्तं चतुर्दलम् ॥ ३१ ॥

वासान्तवर्णसंयुक्तं रक्तवर्णं मनोहरम् ।
कर्णिकायां स्थिता योनिः कामाख्या परमेश्वरी ॥ ३२ ॥

तद्योनिः परमेशानि इच्छाज्ञानक्रियात्मिका ।
अपराख्यं हि कन्दर्पमाधारे तत्त्रिकोणके ॥ ३३ ॥

स्वयम्भूलिङ्गं तन्मध्ये सरन्ध्रं पश्चिमाननम् ।
ध्यायेच्च परमेशानि शिवं श्यामलसुन्दरम् ॥ ३४ ॥

तेन मार्गेण कुण्डलिनी यातायातं करोति हि ।
भित्वा भित्वा पुरीं याति आयाति कुण्डली सदा ॥ ३५ ॥

तत्र विद्युल्लताकारा कुण्डली परदेवता ।
प्रसुप्तभुजगाकारा सार्द्धत्रिवलयान्विता ॥ ३६ ॥

शिवं वेष्ट्य महेशानि सर्वदा परितिष्ठति ।
येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ॥ ३७ ॥

मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ।
मूलमाधारषट्कानां मूलाधारं ततो विदुः ॥ ३८ ॥

लिङ्गमूले महापद्मे स्वाधिष्ठानं तु षड्दलम् ।
वादिलान्तार्णसंयुक्तं नाभौ तु मणिपूरकम् ।। ३९ ।।

डादिफान्तान्वितदलैर्वर्णैर्दशभिर्युतम् ।
हृदये द्वादशदलैरनाहतसरोरुहम् ।। ४० ।।

कादिठान्तदलैर्देवि तप्तहाटकसन्निभम् ।
तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमन्वितम् ।। ४१ ।।

शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।
तेनाहताख्यं तत्पद्मं योगिभिः परिकीर्त्तितम् ।। ४२ ।।

कण्ठदेशे विशुद्धाख्यं धूम्रवर्णं मनोहरम् ।
अकारादिस्वरोपेतैर्दलैः षोडशभिर्युतम् ।। ४३ ।।

विशुद्धिस्तन्यते यस्माज्जीवस्य हंसलोकनात् ।
विशुद्धपद्ममाख्यातमाकाशाख्यं महाद्भुतम् ।। ४४ ।।

आज्ञानाम भ्रुवोर्मध्ये चक्रं च द्विदलं परम् ।
अक्षद्वयक्षरसंयुक्तं निर्मलं सुमनोहरम् ।। ४५ ।।

इतराख्यं महालिङ्गं तन्मध्ये काञ्चनप्रभम् ।
आज्ञासंक्रमणं तत्र गुरोराज्ञेति विश्रुतम् ।। ४६ ।।

कैलासाख्यं तदूर्ध्वे तु बोधिनी तु तदूर्ध्वतः ।
तस्मादूर्ध्वमधोमुखं विकसितं पद्मं सहस्रच्छदम् ।। ४७ ।।

सहस्रारं महापद्मं नादबिन्दुचयान्वितम् ।
अकथादित्रिरेखासु अलक्षत्रयकोणके ।। ४८ ।।

तन्मध्ये परबिन्दुं च सृष्टिस्थितिलयात्मकम् ।
वामावर्त्तेन विलिखेदकथादित्रिकोणकम् ।। ४९ ।।

शून्यरूपं शिवं साक्षादिन्दुं परमकुण्डलीम् ।
सार्द्धत्रिवलयाकारा कोटिविद्युत्समप्रभा ॥ ५० ॥

यामले—

वृत्तं कुण्डलिनी शक्तिर्गुणत्रयसमन्विता ।
शून्यभागं महादेवि शिवशक्त्यात्मकं प्रिये ।
सर्पाकारा शिवं वेष्ट्य सर्वदा तत्र संस्थिता ॥ ५१ ॥

शिवशक्त्यात्मकं बिन्दुं भुक्तिमुक्तिफलप्रदम् ।
नादरूपेण सा देवी योनिरूपा सनातनी ॥ ५२ ॥

भूतशुद्धौ—

शिवविष्णुब्रह्ममयं बिन्दुयोनिं शुचिस्मिते ।
सर्वोपरि महेशानि बिदुं ब्रह्मस्वरूपिणम् ॥ ५३ ॥

भवो बिन्दुरिति ख्यातो भवनं च त्रिकोणकम् ।
भवनं भवसम्बन्धाज्जायते भुवनत्रयम् ॥ ५४ ॥

इति गन्धर्वमालिकावचनात् ।

पञ्चभूतानि देवेशि षष्ठे मानसमीश्वरि ।
षट्चक्रेषु स्थितान्येव क्रमाद् देवि विचिन्तयेत् ॥ ५५ ॥

सहस्रारं शिवपुरं सुखदुःखविवर्जितम् ।
सर्वतोऽलङ्कृतैर्दिव्यैर्न्नित्यपुष्पफलैर्द्रुमैः ॥ ५६ ॥

तत्र—

सदा शिवपुरं रम्यं कल्पवृक्षसुशोभितम् ।
पञ्चभूतात्मकं ब्रह्म गुणत्रयसमन्वितम् ॥ ५७ ॥

चतुःशाखचतुर्वेद नित्यपुष्पफलान्वितम् ।
पीतं कृष्णं तथा श्वेतं रक्तपुष्पं च पार्वति ॥ ५८ ॥

हरितं च विचित्रं च नानापुष्पं मनोहरम् ।
एवं कल्पद्रुमं ध्यात्वा तदधोरत्नवेदिकाम् ॥ ५९ ॥
तत्रोपरि च पर्यङ्कं नानारत्नोपशोभितम् ।
मन्दारपुष्परचितं नानागन्धानुमोदितम् ॥ ६० ॥
तत्रोपरि महादेवः सदा तिष्ठति सुन्दरि ।
ध्यायेत् सदाशिवं देवं शुद्धस्फटिकसन्निभम् ॥ ६१ ॥
बहुरत्नसमाकीर्णं दीर्घबाहुं मनोहरम् ।
सुखप्रसन्ननयनं स्मेरास्यं सततं प्रिये ॥ ६२ ॥
श्रवणे कुण्डलोपेतं रत्नहारेण शोभितम् ।
शोणपद्मसहस्रेण मालया शोभितं वपुः ॥ ६३ ॥
अष्टबाहुं त्रिनयनं शिवं पद्मदलेक्षणम् ।
पादयोर्नूपुरं रम्यं शब्दब्रह्ममयं वपुः ॥ ६४ ॥
एवं स्थूलवपुस्तस्य भावयेत् कमलेक्षणे ।
पद्ममध्ये स्थितं देवं निरीहं शब्दरूपवत् ॥ ६५ ॥
शब्दरूपमहादेवकृत्यं नास्ति कदाचन ।
एवं सर्वेषु चक्रेषु शक्तिरूपं विचिन्तयेत् ॥ ६६ ॥
ब्रह्मा रुद्रश्च विष्णुश्च ईश्वरश्च सदाशिवः ।
ततः परशिवश्चैव षट् शिवाः परिकीर्त्तिताः ॥ ६७ ॥

शक्तिमाह—

विशुद्धौ डाकिनी देवि अनाहते तु राकिणी ।
लाकिनी मणिपूरस्था काकिनी लिङ्गगोचरे ॥ ६८ ॥
आधारे शाकिनी देवी आज्ञायां हाकिनी तथा ।
आकिनी ब्रह्मरन्ध्रस्था सर्वकामफलप्रदा ॥ ६९ ॥

ध्यायेत् कुण्डलिनीं देवीं स्वयम्भूलिङ्गसंस्थिताम् ।
श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम् ।
विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्वरूपिणीम् ॥ ७० ॥

रक्तामिति सुन्दरी विषये ज्ञेयम् ।

हुङ्कारवर्णसम्भूता कुण्डली परदेवता ।
विभर्ति कुण्डली देहमात्मानं हंसमन्त्रतः ॥ ७१ ॥

प्रवृद्धवह्निसंयोगे मनसा मारुतैः सह ।
ऊर्ध्वं नयेत् कुण्डलिनीं जीवात्मसहितां पराम् ॥ ७२ ॥

गच्छन्ति ब्रह्मरन्ध्रेण भित्वा ग्रन्थिं चतुर्दश ।
षट्चक्रसन्धिमार्गेण सुषुम्नावर्त्मना तथा ॥ ७३ ॥

हंसेन मनुना देवीं सहस्रारं समानयेत् ।
सदाशिवो महादेवो यत्रास्ते परमेश्वरि ॥ ७४ ॥

तत्र गत्वा महादेवी कुण्डली परदेवता ।
देवीं रूपवतीं कामसमुल्लासविहारिणीम् ॥ ७५ ॥

मुखारविन्दगन्धेन मोदितं परमं शिवम् ।
प्रबोध्य परमेशानि तत्रोपरि वसेत् प्रिये ॥ ७६ ॥

शिवस्य मुखपद्मं हि चुचुम्बे कुण्डली शिवे ।
सदाशिवेन देवेशि क्षणमात्रं रमेत प्रिये ॥ ७७ ॥

अमृतं जायते देवि तत्क्षणात् परमेश्वरि ।
तदुद्भवामृतं देवि लाक्षारससमोपमम् ॥ ७८ ॥

तेनामृतेन देवेशि तर्पयेत् परदेवताम् ।
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ॥ ७९ ॥

आनयेत्तेन मार्गेण मूलाधारं पुनः सुधीः ।
यातायातं क्रमेणैव तत्र कुर्यान्मनोलयम् ।। ८० ।।

एवमभ्यस्यमानस्तु अहन्यहनि पार्वती ।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् ।
इत्युक्तं परमं योगं योनिमुद्राप्रबन्धनम् ।। ८१ ।।

यामले—

कुलयोषित् कुलं त्यक्त्वा पुनरेव कुलं विशेत् ।
रमते सेयमव्यक्ता पुनरेकाकिनी सती ।। ८२ ।।

सङ्केतपद्धत्याम्—

पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्त्तितः ।
रूपबिन्दुरितिख्यातं रूपातीतं च निष्कलम् ।। ८३ ।।

एतेन हंस इत्यक्षरद्वयं देव्याः पादपद्मयुगं कृत्वा षट्चक्रभेदक्रमेण सहस्रदलपद्मे नीत्वा चन्द्रमण्डलामृतेनाप्लाव्य तदमृतेन षट्चक्रक्रमस्थशिवशक्त्यादिनाप्लाव्य सोऽहमिति मन्त्रेण स्वस्थाने नयेदिति तु वाक्यार्थः । "सोऽहमिति च मन्त्रेण स्वस्थानमानयेत् सुधीः" इति यामलवचनात् ।

देव्युवाच

देवदेव महादेव सृष्टिस्थित्यन्तकारक ।
मूर्द्ध्नि पद्मसहस्रारं रक्तवर्णमधोमुखम् ।। ८४ ।।

तस्य मध्ये स्थितं ध्यायेद् गुरुं शान्तं सशक्तिकम् ।
मूलाधारे महाशक्तिं कुण्डलीरूपधारिणीम् ।। ८५ ।।

अधोवक्त्रक्रमेणैव सर्वपद्मेषु भावना ।
तदा कथं भवेत्तत्र चिन्तनं गुरुदेवयोः ।। ८६ ।।

आधारे द्वे स्थितिस्तत्र अधोभागे कथं भवेत् ।
अधोमुखे स्थितस्यापि चिन्तनं वा कथं भवेत् ।। ८७ ।।

श्रीमहादेव उवाच

यथायुक्तं त्वया देवि कथितं वीरवन्दिते ।
एवमेव तु सन्देहो जायते नात्र संशयः ॥ ८८ ॥

कथ्यते परमेशानि सन्देहोच्छेदकारणम् ।
तानि पद्मानि देवेशि सुषुम्नान्तः स्थितानि च ॥ ८९ ॥

तत्सर्वं पङ्कजं देवि सर्वतोमुखमेव च ।
प्रवृत्तिश्च निवृत्तिश्च द्वौ भावौ जीवसंस्थितौ ॥ ९० ॥

प्रवृत्तिमार्गः संसारी निवृत्तिः परमात्मनि ।
प्रवृत्तिर्भाव चिन्तायामधोवक्त्राणि चिन्तयेत् ॥ ९१ ॥

निवृत्तिर्योगमार्गेषु सदैवोर्ध्वंमुखानि च ।
एवमेव भावभेदादसन्देहोऽभिजायते ॥ ९२ ॥

इत्येतत् कथितं देवि मम ज्ञानविलोकितम् ।
अथान्यत् संप्रवक्ष्यामि गृहस्थानां च साधनम् ॥ ९३ ॥

मूलाधारे स्थितां देवीं कुण्डलीं परदेवताम् ।
भोगकाले महेशानि आजिह्वान्तं विभाव्य च ॥ ९४ ॥

शोधितान् मत्स्यमांसादीन् सम्मुखे स्थापयेद् बुधः ।
मूलमन्त्रं समुच्चार्य जुहोमि कुण्डलीमुखे ॥ ९५ ॥

प्रतिग्रासे महेशानि एवं कुर्याद् विचक्षणः ।
भोजनेच्छा भवेत्तस्य निर्लिप्तो जीवसंज्ञकः ॥ ९६ ॥

एवमेव प्रकारेण ऊद्ध्र्वपद्मं प्रजायते ।
गुरोः स्थितिं च चार्वङ्गि तथा सम्यक् प्रजायते ॥ ९७ ॥

भिद्यते हृदयग्रन्थिः छिद्यते सर्वसंशयः ।
गुर्वादिभावनाद् देवि तदा सिद्धिः प्रजायते ॥ ९८ ॥

स्वगेहे पायसं त्यक्त्वा भिक्षामटति दुर्गतिः ।
अत एव महेशानि वातुलत्वं प्रजायते ॥ ९९ ॥
इत्येतत् कथितं सारं मम ज्ञानविलोकितम् ।
अथ योगं प्रवक्ष्यामि येन देवमयो भवेत् ॥ १०० ॥
मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो ।
तावत् किञ्चिन्न सिद्ध्येत मन्त्रयन्त्रार्चनादिकम् ॥ १०१ ॥
स्वापकालो वामवाहः प्रबोधो दक्षिणावहः ।
मन्त्रिणां स्वापकाले तु जपोऽनर्थफलप्रदः ॥ १०२ ॥
प्रबोधकालं जानीयादुभयोरपि पार्वति ।
जागर्त्ति यदि सा देवि बहुभिः पुण्यसञ्चयैः ॥ १०३ ॥
तदा प्रसादमायान्ति मन्त्रयन्त्रार्चनादयः ।
योगयोगाद् भवेन्मुक्तिर्मन्त्रसिद्धिरखण्डिता ॥ १०४ ॥
सिद्धे मनौ परावाप्तिरिति शास्त्रस्य निर्णयः ।
जीवन्मुक्तश्च देहान्ते परं निर्वाणमाप्नुयात् ॥ १०५ ॥
संसारोत्तारणं मुक्तिर्योगशब्देन कथ्यते ।
प्राणायामैर्जपैर्यागैस्त्यक्तनिद्रा जगन्मयी ॥ १०६ ॥
चतुर्दलं स्यादाधारं स्वाधिष्ठानं तु षड्दलम् ।
नाभौ दशदलं पद्मं सूर्यसंख्यादलं हृदि ॥ १०७ ॥
कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलं तथा ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे महापथैः ॥ १०८ ॥
मातृकाक्षरसम्भूतं सहस्रारं सरोरुहम् ।
अधोवक्त्रं शुक्लवर्णं रक्तकिञ्जल्कभूषितम् ॥ १०९ ॥

इति वर्णं सुन्दरीविषये बोध्यम्, समयातन्त्रोक्तत्वात्, अन्यथा विरोधापत्तेः ।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवश्चैव षट्शिवाः परिकीर्त्तिताः ॥ ११० ॥

डाकिनी राकिनी चैव शाकिनी लाकिनी तथा ।
काकिनी हाकिनी चैव शक्तिरेषा प्रकीर्त्तिता ॥ १११ ॥

आधारे हृत्प्रदेशे च भ्रुवोर्मध्ये विशेषतः ।
स्वयम्भूसंज्ञो बाणाख्यस्तथैवेतरसंज्ञकः ॥ ११२ ॥

लिङ्गत्रयं महेशानि प्रधानत्वेन चिन्तयेत् ।
मूलाधारे स्थिता भूमिः स्वाधिष्ठाने जलं प्रिये ॥
मणिपूरे स्थितं तेजो हृदये मारुतस्तथा ॥ ११३ ॥

विशुद्धौ तु महेशानि आकाशं कमलेक्षणे ।
आज्ञाचक्रे महेशानि मनः सर्वार्थसाधकम् ॥ ११४ ॥

तदूर्ध्वे परमेशानि पद्ममूर्ध्वमुखं सदा ।
तत्रोपरि महेशानि ध्यायेत् सदाशिवं प्रभुम् ॥ ११५ ॥

ऊर्ध्वमुखमिति । अधोमुखसहस्रदलपद्मान्तर्गत ऊर्ध्वमुखद्वादशपद्मोपरि शिवं ध्यायेदित्यर्थः । तथा चोक्तं यामले ।

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ॥११६॥

अहं द्वादशार्णं द्वादशदलं सरसीरुहं पद्मं भजे । सरसीरुहं किं विशिष्टम् ? कुण्डलीविवरकाण्डमण्डितम् । मूलाधारविभूषितम् । पुनः किम्भूतम् ? ब्रह्मरन्ध्रसरसीरुहोदरे सहस्रार पद्ममध्ये नित्यमविनाभावसम्बन्धेन लग्नम् । पुनः किम्भूतम् ? अवदातं गौरम् । पुनः किम्भूतम् ? आश्चर्यं मनोहरं पूर्वोक्तक्रमेण शिवं ध्यायेत् ।

षट्चक्रं परमेशानि सदाशिवपुरं समम् ।
शक्तिपुरं महेशानि सदाशिवपुरोपरि ॥ ११७ ॥

स एव निर्वाणाख्यकलोपरिगतनिर्वाणशक्तेः परं शिवस्थानं शैवाः, परमपुरुषं वैष्णवगणा लपन्तीति, प्रायो हरिहरपदं केचिदपरे। पदं देव्या देवीचरणयुगलानन्दरसिका मुनीन्द्रा अप्यन्ये प्रकृतिपुरुषस्थानममलम्। तेन हंस इत्यक्षरद्वयरूपं पादपद्मयुगलं ध्यायेदित्यर्थः।

रमित्वा शम्भुना सार्द्धं कुण्डली परदेवता।
मूलाधारान्महेशानि सहस्रारे समानयेत्॥ ११८॥
शम्भुगतां परां शक्तिमेकीभावं विचिन्तयेत्।
ध्यायेत् कुण्डलिनीं तत्र इष्टदेवस्वरूपिणीम्॥ ११९॥
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्।
नवयौवनसम्पन्नां सर्वाभरणभूषिताम्॥ १२०॥
पूर्णचन्द्रनिभां रक्तां सदा चञ्चललोचनाम्।
नानारत्नयुतां धन्यां पादे नूपुरशोभिताम्॥ १२१॥
किङ्किणीं च तथा कट्यां रक्तकङ्कणमण्डिताम्।
कन्दर्पकोटिलावण्यां सदा मधुरहासिनीम्॥ १२२॥
एवं ध्यात्वा जपेन्मन्त्रं शतमष्टोत्तरं शिवे।
मातृकामालया जप्त्वा आज्ञाचक्रं समानयेत्॥ १२३॥
तत्रेतरे शिवलिङ्गेन योजयेत् कुण्डलीं पराम्।
ध्यात्वा ब्रह्ममयीं तत्र शतमष्टोत्तरं जपेत्॥ १२४॥
ततो विशुद्धौ तां नीत्वा शिवेन सह योजयेत्।
तामिष्टदेवतां ध्यात्वा जपेदष्टशतं प्रिये॥ १२५॥
हृत्पद्मे तां ततो नीत्वा बांणेन सह योजयेत्।
देवीरूपां च तां नीत्वा जपेदष्टोत्तरं शतम्॥ १२६॥
मणिपूरे तु तां नीत्वा शिवेन सह योजयेत्।
देवीरूपां तु तां ध्यात्वा शतमष्टोत्तरं जपेत्॥ १२७॥

स्वाधिष्ठाने ततो नीत्वा शिवेन सह योजयेत् ।
योजयित्वा जपेन्मन्त्रं देवीं ध्यात्वा प्रियंवदे ॥ १२८ ॥

शतमष्टोत्तरं जप्त्वा मूलाधारे तु तां नयेत् ।
तत्र लिङ्गं स्वयम्भुं च ध्यायेत् कुन्दसमप्रभम् ॥ १२९ ॥

शुक्लवर्णं चतुर्बाहुं पञ्चवक्त्रं त्रिलोचनम् ।
नानारत्नयुतं रम्यं वलयान्वितशोभितम् ॥ १३० ॥

प्रसन्नवदनं शान्तं नीलकण्ठविराजितम् ।
कपर्दिनं स्फुरत्सर्पभूषं कुन्दसमप्रभम् ॥ १३१ ॥

षट्चक्रे परमेशानि ध्यात्वा जगन्मयीं शिवाम् ।
भुजङ्गरूपिणीं देवीं नित्यां कुण्डलिनीं पराम् ॥ १३२ ॥

विषतन्तुमयीं देवीं साक्षादमृतरूपिणीम् ।
अव्यक्तरूपिणीं दिव्यां ध्यानगम्यां वरानने ।
ध्यात्वा जप्त्वा च देवेशि साक्षाद् ब्रह्ममयो भवेत् ॥ १३३ ॥

एवं द्वादशधा देवि यातायातं करोति यः ।
स मुक्तः सर्वपापेभ्यो मन्त्रसिद्धिर्न चान्यथा ॥ १३४ ॥

यत्र तत्र मृतश्चायं गङ्गायां श्वपचालये ।
ब्रह्मविद् ब्रह्मभूयाय कल्प्यते नान्यथा प्रिये ॥ १३५ ॥

### अथ प्रार्थना

अहं देवि न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं नित्यमुक्तः स्वभाववान् ॥१३६॥

परदेव्या हृदिस्थेन प्रेरितेन करोम्यहम् ।
न मे किञ्चित् क्वचिद् वापि कृत्यमस्ति जगत्त्रये ॥१३७॥

जानामि धर्मं न च मे प्रवृत्ति—
जानाम्यधर्मं न च मे निवृत्तिः ।
केनापि देवेन हृदि स्थितेन,
यथा नियुक्तोऽस्मि तथा करोमि ॥ १३८ ॥

त्रैलोक्य चैतन्यमधीश्वरेशि,
श्रीपार्वति त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं,
संसारयात्रामनुवर्त्तयिष्ये ॥ १३९ ॥

एवं सञ्चिन्त्य मनसा गृहान्निर्गत्य संयतः ।
आचम्य प्रयतो मन्त्री दन्तधावनमाचरेत् ॥ १४० ॥

गन्धर्वतन्त्रे—

दन्तकाष्ठमथादित्वा पूजयेद् यस्तु देवताम् ।
तत्पूजा विफला देवि मृते च नरकं व्रजेत् ॥ १४१ ॥

मन्त्रतन्त्रप्रकाशे—

विधायावश्यकं शौचमाचारं दन्तधावनम् ।
मुखप्रक्षालनादीनि कृत्वा स्नानं समाचरेत् ॥ १४२ ॥

अथ मुखप्रक्षालनमन्त्रो दक्षिणामूर्त्तौ—'क्लीं कामदेव सर्वजनप्रियाय नमः' । क्लीमात्मकं कामदेवं सर्वजनमालिखेत् ।

प्रियाय हृदयान्तोऽयं मनुर्देहविशुद्धये ।
चतुर्दशाक्षरैर्वक्त्रं क्षालयेत् सिद्धिहेतवे ॥ १४३ ॥

यामले—

स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् ।
तस्मात् स्नानं निषेवेत श्रीपुष्ट्यारोग्यवर्द्धनम् ॥ १४४ ॥

मन्त्रतन्त्रप्रकाशे—

अरुणे नोदिते मन्त्री तीर्थे वा विमले जले ।
वैदिकस्नानमाचर्य तान्त्रिकस्नानमाचरेत् ॥ १४५ ॥

परखाते यत्कर्तव्यं तदाह विश्वसारे—

परखाते तु कर्तव्यं पञ्चपिण्डोद्धरं सुधीः ।

मन्त्रमाह—

उत्तिष्ठ तिष्ठ पङ्कत्वं त्यज पुण्यं परस्य च ॥ १४६ ॥
पापानि विलयं यान्तु शान्ति देहि सदा मम ।

नीलतन्त्रे—

पुनर्निमज्य पयसि सङ्कल्पं च समाचरेत् ॥ १४७ ॥
ततः संकल्प्य मतिमान् नाभिमात्रोदके स्थितः ।
प्रीतये स्वेष्टदेवस्य स्नानं सर्वत्र कारयेत् ॥ १४८ ॥
इष्टदैवतपूजार्थं स्नानं कार्यं जलाशये ।

तन्त्रमन्त्रप्रकाशे—

अस्त्रेणानीय मृत्स्नां वै त्रिभागं तत्र कारयेत् ॥ १४९ ॥
शेषं तु पादनाभ्यन्तं तथैव परिलेपयेत् ।
अङ्गे षडङ्गं विन्यस्य प्राणायामपुरःसरम् ॥ १५० ॥
हृन्मन्त्राङ्कुशमन्त्राभ्यां तीर्थमावाह्य मण्डलात् ।
ब्रह्माण्डे यानि तीर्थानि करैः स्पृष्टानि ते रवे ॥ १५१ ॥
तेन सत्येन मे देव तीर्थं देहि दिवाकर ।
ॐ गङ्गे च यमुने चैव गोदावरि सरस्वती ॥ १५२ ॥
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।
ॐ आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि ॥१५३॥

एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ।
एवमावाह्य विधिवन्मूलमन्त्रेण मन्त्रयेत् ।। १५४ ।।
आमन्त्र्याम्भसि संयोज्य सोमसूर्याग्निमण्डलम् ।
विचिन्त्य मन्त्री तन्मध्ये निमज्जन्मूलमुच्चरन् ।। १५५ ।।
उत्थायाचम्य तत्पश्चात् षडङ्गन्याससंयुतः ।

यामले—

आत्मविद्याशिवैस्तत्त्वैराचामेत् साधकाग्रणीः ।। १५६ ।।
वह्निजायां परे दत्त्वा शुद्धेन पाथसा[1] प्रिये ।
अभिमन्त्र्य ततस्तोयं मूलमन्त्रेण साधकम् ।। १५७ ।।
क्षालयेत्तेन वपुषः कलुषं कुम्भमुद्रया ।
आत्मानं दशधा सिञ्चेन्मुद्रया कलशाख्यया ।। १५८ ।।
ससक्त्वोऽभिषिञ्चेद्वा मनुना मन्त्रितैर्जलैः ।
वामहस्ते कृता मुष्टिर्दक्षहस्तस्य पार्वति ।। १५९ ।।

ज्ञानार्णवे—

कलशाख्या भवेन्मुद्रा सर्वपापहरा शुभा ।

गौतमीये—

पीडयित्वा स्वरं चारु प्रक्षाल्याचम्य वाग्यतः ।। १६० ।।
धारयेद्वाससी शुद्धे पराधीनोत्तरीयके ।
अच्छिन्ने सदशे शुद्धे आचमेत् पीठसंस्थितः ।। १६१ ।।
मोक्षार्थी रक्तवस्त्रे द्वे भोगार्थी श्वेतवाससी ।
तिलकं रक्तगन्धेन चन्दनेन च वा प्रिये ।। १६२ ।।

---

१. पाथसा जलेन ।

देव्यस्त्रं विलिखेद् भाले ताराबीजं ततो हृदि ।
शक्तिं मध्यगतां कुर्यात् साधको नरपुङ्गवः ।। १६३ ।।

देव्यस्त्रं स्वस्वोपासितदेव्यस्त्रं लिखेदित्यर्थः ।

त्रिपुण्ड्रेण विना कुर्याद्यत् किञ्चिद् वैदिकीं क्रियाम् ।
सा निष्फला भवेद् भूय ब्रह्मणापि कृता यदि ।। १६४ ।।

इति भविष्यवचनात् । धर्मपुराणे—

वैष्णवो वाथ शैवो वा शाक्तो वा शैव एव वा ।
त्रिपुण्ड्रेण विना पूजां कुर्वाणो यात्यधोगतिम् ।। १६५ ।।

शिवधर्मे—

सितेन भस्मना कुर्याल्ललाटे यस्त्रिपुण्ड्रकम् ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ।। १६६ ।।

भस्मोपलक्षणं भविष्ये—

सर्वस्त्रिपुण्ड्रं वै कुर्याद् यज्ञभस्मेन सर्वदा ।
तदलाभे चन्दनेन मृदा वा वारिणापि वा ।। १६७ ।।

यत्किञ्चित् कुरुते कर्म विना विप्रस्त्रिपुण्ड्रकम् ।
व्यर्थमेव भवेत् सर्वं वन्ध्यास्त्रीसङ्गमो यथा ।। १६८ ।।

सच्छिद्रं कुरुते यस्तु पुण्ड्रं पाशुपतं द्विजः ।
धर्मार्थकाममोक्षेषु तस्य छिद्रं प्रजायते ।। १६९ ।।

वैदिकीं तान्त्रिकीं सन्ध्यां ततः कुर्यात् समाहितः ।
अशून्यं च करं कुर्यात् सुवर्णै रजतैः कुशैः ।। १७० ।।

सुवर्णरजतं चैव जपपूजादि कर्मसु ।
एष एवं कुशः शाक्तो न दर्भो वनसम्भवः ।
तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया ।। १७१ ।।

अथ सन्ध्यां प्रवक्ष्यामि तान्त्रिकीं सर्वसिद्धिदाम् ।
उपविश्याचमेन्मन्त्री पयोभिर्हीनबुद्बुदैः ।। १७२ ।।

ततश्च आत्मतत्त्वाय विद्यातत्त्वाय तत्परम् ।
शिवतत्त्वाय वै प्रोक्त्वा क्रमेण वह्निवल्लभा ।। १७३ ।।

मूलान्तमेभिराचामेत् पूर्वोत्तरमुखः सुधीः ।
आचमनं ततः कृत्वा प्राणायामं समाचरेत् ।। १७४ ।।

षडङ्गन्यासमाचर्य जले मूलं जपेत्ततः ।
कुशेन तज्जलं भूमौ त्रिधा मूर्द्ध्नि विनिक्षिपेत् ।। १७५ ।।

मूलमुच्चार्य देवेशि वामहस्ते जलं ततः ।
गृहीत्वा तज्जलं देवि तत्र मूलं समुच्चरन् ।। १७६ ।।

शिव-वायु-जलंपृथ्वीवह्निबीजैस्त्रिधा पुनः ।
अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ।। १७७ ।।

गलिताम्बु क्षिपेन्मूर्द्धनि शेषं दक्षे निधाय च ।
इडयाऽऽकृष्य देहान्तः क्षालितैः पापसञ्चयैः ।। १७८ ।।

कृष्णवर्णं तदुदकं दक्षनाड्या विरेचयेत् ।
दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च ।। १७९ ।।

पुरतो वज्रपाषाणे प्रक्षिपेदस्त्रमन्त्रतः ।
जले यन्त्रं समालिख्य तर्पयेत् परदेवताम् ।। १८० ।।

पूजयित्वा तत्र देवीं परिवारसमन्विताम् ।
गुरुपङ्क्तीः प्रतर्प्याथ तर्पयेदिष्टदेवताम् ।। १८१ ।।

उत्तराभिमुखो भूत्वा देवीमात्रं प्रतर्पयेत् ।
तृप्यतां जगतां माता भैरवस्तृप्यतां तथा ।। १८२ ।।

मूलान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।
स्वाहान्ते तर्पणं त्वेदं पञ्चविंशतिसंख्यया ।। १८३ ।।
तर्पणं च प्रकुर्वीत द्वितीयान्तमथोच्चरन् ।
पञ्चविंशतिसंख्या वा दशधा वा त्रिधापि वा ।। १८४ ।।
एकैकाञ्जलितोयेन परिवारांस्तु तर्पयेत् ।
दिनेशाय क्षिपेत्तिष्ठन् वारिणा चाञ्जलित्रयम् ।। १८५ ।।
सूर्यमन्त्रं समुच्चार्य ॐ ह्रीं हंस इत्यपि ।
मार्तण्डभैरवायेति प्रकाशशक्तिसंयुतम् ।। १८६ ।।
ङेऽन्तं समुच्चार्य ग्रहराशियुताय ठद्वयम् ।
त्रिधाञ्जलिं क्षिपेन्मन्त्री कर्मणां सिद्धिसिद्धये ।। १८७ ।।
तोयाञ्जलिं पुनः क्षिप्त्वा सूर्यमण्डलमध्यगाम् ।
आदित्यमण्डले देवीं ध्यायेत् सूर्यस्वरूपिणीम् ।। १८८ ।।
तद्वद् गायत्रीमुच्चार्य विसृजेदनयार्घकम् ।
गामत्रीं भावयेद् देवीं सूर्यासनकृताश्रयाम् ।। १८९ ।।
प्रातर्मध्याह्नसायाह्ने ध्यानं कृत्वा जपेत् सुधीः ।

बीजत्रयरूपां कुडलिनीं ध्यात्वा जपेदित्यर्थः ।

कुण्डलिनी त्रिधा देवि तथा बीजत्रयं त्रिधा ।। १९० ।।
तुरीयां कुण्डलीं मूर्द्धनि नित्यानन्दस्वरूपिणीम् ।
वाग्भवं मूलदेशे च द्रवस्वर्णनिभं स्मरेत् ।। १९१ ।।
वह्निकुण्डलिनीं नित्यां बालार्कसदृशारुणाम् ।
हृदये कामबीजं च सूर्यकोटिसमप्रभम् ।। १९२ ।।
सूर्यकुण्डलिनी तत्र नित्यानन्दस्वरूपिणी ।
भ्रूमध्ये शक्तिबीजं च कोटिचन्द्रसमप्रभम् ।। १९३ ।।

चन्द्रकुण्डलिनीं तत्र स्रवदमृतविग्रहाम् ।
बीजत्रयमयीं बिन्दौ तूर्यां बिन्दुत्रयात्मिकाम् ।। १९४ ।।
तूर्यकुण्डलिनीं देवीं केवलां ज्ञानविग्रहाम् ।

प्रातःकाले मूलाधारे—

बालार्कमण्डलाभासां भानुवह्नीन्दुलोचनाम् ।। १९५ ।।
पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां स्मरेत् ।

मध्याह्ने हृदये पद्मे—

मध्याह्ने चिन्तयेद् देवीं नवयौवनशोभिताम् ।। १९६ ।।

सायाह्ने भ्रूमध्ये—

सायाह्ने चिन्तयेद् देवीं त्रैलोक्यैकप्रभामयीम् ।
नवयौवनसम्पन्नामुज्ज्वलां परमां कलाम् ।। १९७ ।।
तामेव चिन्तयेद्रात्रौ भोगी भोगपरायणाम् ।

रात्रौ सहस्रारे—

गायत्रीं प्रजपेद् विद्वानष्टविंशतिसंख्यया ।। १९८ ।।
मनसा प्रजपेन्मन्त्रं गायत्रीं च विशेषतः ।

गान्धर्वे—

गायन्तं त्रायते यस्माद् गायत्री तेन चोच्यते ।। १९९ ।।
महापातकयुक्तोऽपि प्रजपेद् दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ।। २०० ।।
अष्टोत्तरशतावृत्त्या गायत्रीं जपते यदि ।
सर्वपापविनिर्मुक्तो भवेत् पूजाधिकारवान् ।। २०१ ।।
अष्टोत्तरशतावृत्त्या मूलमन्त्रं च संजपेत् ।

आर्द्रवस्त्रेण यत् कर्तव्यं तदाह यामले—

नाभिमात्रोदके स्थित्वा देवीमर्कगतां स्मरन् ।। २०२ ।।

जपेदष्टोत्तरशतं लभते महतीं श्रियम् ।
संहारमुद्रया चैव तीर्थमुद्वास्य वाग्यतः ।। २०३ ।।

शक्तिसन्ध्या मया प्रोक्ता कर्तव्या साधकोत्तमैः ।
ततो मौनी विशुद्धात्मा हृदि विद्यां परामृशन् ।। २०४ ।।

अबहिर्मनसो भूत्वा यागभूमिमथाविशेत् ।
सन्ध्यायां पतितायां वा गायत्रीं दशधा जपेत् ।। २०५ ।।

सन्ध्यां च त्रिकालं कुर्याद् यथा शैवागमेऽपि च ।
प्रातर्मध्याह्नसायाह्नसन्ध्यां कुर्याच्च मन्त्रवित् ।। २०६ ।।

सन्ध्यायास्त्वकरणे दोषमाह लक्ष्मीकुलार्णवे—

सन्ध्यायां तु विहीनायां न दीक्षाफलमाप्नुयात् ।। २०७ ।।

तान्त्रिकसन्ध्यायां शूद्रस्याप्यधिकारो विशुद्धेश्वरे—

सन्ध्यात्रयं सदा कुर्याद् ब्राह्मणो विधिपूर्वकम् ।
तन्त्रोक्तविधिपूर्वं तु शूद्रः सन्ध्यां समाचरेत् ।। २०८ ।।

**इति श्रीपरिव्राजकाचार्य परमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां प्रातःकृत्यनिर्णयो नाम चतुर्थोल्लासः ॥**



## अथ पञ्चमोल्लासः

### ईश्वर उवाच

आसनीयमाह गौरीयामले—

सलिले यदि कुर्वीत देवतानां प्रपूजनम् ।
तथाप्यासन आसीनो नोत्थितस्तु तथाचरेत् ॥ १ ॥

आसनं कल्पयित्वा तु मनसा पूजयेज्जले ।
आसनस्थो जपेत् सम्यङ् मन्त्रार्थगतमानसः ॥ २ ॥

सम्मोहनतन्त्रे—

रक्तासनोपविष्टस्तु लाक्षारुणगृहे स्थितः ।
मनः कल्पितरक्तो वा साधकः स्थिरमानसः ॥ ३ ॥

कुशकम्बलवस्त्राणां सिंहव्याघ्रमृगाजिनम् ।
कल्पयेदासनं धीमान् सौभाग्यज्ञानवर्द्धनम् ॥ ४ ॥

कौषेयं वाथ चार्मं वा चैलतौलमथापि वा ।
शरपत्रं तालपत्रं कम्बलं दर्भमासनम् ॥ ५ ॥

कृष्णाजिने ज्ञानसिद्धिर्मुक्तिः श्रीर्व्याघ्रचर्मणि ।
कृष्णाजिने गृहस्थानां नाधिकारः प्रचक्षते ॥ ६ ॥

न दीक्षितो विशेज्जातु कृष्णसाराजिने गृही ।
विशेद् यतिर्वानप्रस्थश्च ब्रह्मचारी तु भिक्षुकः ॥ ७ ॥

वस्त्रासने व्याधिनाशः कम्बले दुःखनाशनम् ।
जपध्यानतपोहानिर्वंस्त्रासनं करोति यः ॥ ८ ॥

तत्र वस्त्रनिषेधः केवलवस्त्रनिषेधपरकः, अन्यथा विरोधापत्तेः ।

कुशासने भवेदायुर्मोक्षः स्याद् व्याघ्रचर्मणि ।
अजिने च भवेत् पुत्री कम्बले सिद्धिरुत्तमा ॥ ९ ॥

शान्तिके धवले प्रोक्तः सर्वार्थं चित्रकम्बले ।
स्यात् पौष्टिके तु कौषेयं कम्बलैर्दुःखमोचनम् ॥ १० ॥

त्रिपुरापूजने शस्तं रक्तकम्बलमासनम् ।
नैतद् द्विहस्ततो दीर्घं सार्द्धहस्तान्न विस्तृतम् ॥ ११ ॥

न त्र्यङ्गुलात् समुच्छ्रायं पूजाकर्मणि संग्रहे ।
आसनं च ततः कुर्यान्नातिनीचं न चोच्छ्रितम् ॥ १२ ॥

तत्र गान्धर्वे—

धरण्यां दुःखसम्भूतिदौर्भाग्यं दारुजासने ।
आम्रनिम्बकदम्बानामासनं सर्वनाशनम् ॥ १३ ॥

बकुले किंशुके चैव पनसेषु हतश्रियः ।
वंशेष्टिकाश्मधरणीतृणबिल्वजनिर्मितम् ॥ १४ ॥

वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।
गाम्भारीनिर्मितं शस्तं नान्यदारुमयं शुभम् ॥ १५ ॥

चतुर्विंशत्यङ्गुलं दीर्घं कुर्यात् काष्ठासनं शिवे ।
षोडशाङ्गुलविस्तीर्णमुच्छ्रायं चतुरङ्गुलम् ॥ १६ ॥

कम्बलं चर्मजं चेलं महामायाप्रपूजने ।
प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च ॥ १७ ॥

त्रिपुरायाश्च रुद्रस्य विष्णोश्चापि कुशासनम् ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ॥ १८ ॥

यथोक्तमासनं कुर्यात् सर्वसिद्धिप्रदायकम् ।
न यथेष्टासनो भूयात् पूजाकर्मणि साधकः ।। १९ ।।
वंशाश्मधरणीदारुतृणपल्लवनिर्मितम् ।
वर्जयेदासनं धीमान् दारिद्रचव्याधिदुःखदम् ।। २० ।।

तन्त्रे—

काष्ठासने भवेद्रोगी वंशे वंशक्षयो भवेत् ।
शैलासने च वाग्रोधः पल्लवे मतिविभ्रमः ।। २१ ।।

अन्यत्रापि—

धरण्यां शोकसंयुक्तं काष्ठे व्यर्थश्रमो भवेत् ।
पद्मासनं स्वास्तिकाख्यं भद्रं व्रजासनं तथा ।। २२ ।।
वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ।
सव्यपादमुपादाय दक्षोपरि न्यसेत्ततः ।। २३ ।।
तथैव दक्षिणं सव्यस्योपरि च विधानवित् ।
पद्मासनमिदं प्रोक्तं जपकर्मसु शस्यते ।। २४ ।।
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत् प्रचक्षते ।। २५ ।।
सीमन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम् ।
वृषणाधः पार्श्वपादौ पाणिभ्यां परिबन्धयेत् ।। २६ ।।
भद्रासनं समुद्दिष्टं मुनिभिः सावकल्पितम् ।
उभौ पादौ क्रमादेव कुर्यात् प्रत्यङ्मुखाङ्गुली ।। २७ ।।
करौ निदध्यादाख्यातं व्रजासनमनुत्तमम् ।
एकपादमधः कृत्वा विन्यस्योरौ ततः परम् ।। २८ ।।
ऋजुकायो विशेन्मन्त्री वीरासनमितीरितम् ।
ऊर्ध्वपादौ स्थितौ देवि शिरोऽधः परिकीर्त्तितम् ।। २९ ।।

सर्वासनानां श्रेष्ठोऽयं देवैरपि सुदुर्लभम् ।
न युक्तमन्यथा पाददर्शनं सुरपूजने ॥ ३० ॥

रुद्रयामले—

नित्यं नैमित्तिकं काम्यं त्रिविधं पूजनं स्मृतम् ।

नीलतन्त्रे—

नित्यसेवारतो मन्त्री कुर्यान्नैमित्तिकार्चनम् ॥ ३१ ॥
नैमित्तिकार्चने सिद्धः कुर्यात् काम्यमथार्चनम् ।
उभयोः काम्यकर्माणि चेति शास्त्रस्य निश्चयः ॥ ३२ ॥

रुद्रयामले—

रात्रौ पूजां सदा कुर्यात् रात्रौ सिद्धिर्न संशयः ।
सफला रजनीपूजा दिव्यपूजा च निष्फला ॥ ३३ ॥
शक्तिमन्त्रं जपेद्रात्रौ विनापि पूजनं शुचिः ।
विशेषतो नीशीथे तु तत्रातिफलदो जपः ॥ ३४ ॥

बृहत्तोडलतन्त्रे—

निशायां योऽर्चयेत् कालीं तारां च भैरवीं तथा ।
आसमुद्रक्षितीशानां श्रेष्ठो भवति सर्वदा ॥ ३५ ॥

अन्यत्रापि—

मातङ्गीं च तथा बालां चामुण्डां छिन्नमस्तकाम् ।
भद्रकालीं च दुर्गां च जयदुर्गां तथैव च ॥ ३६ ॥
आसां जपश्च पूजा च रात्रौ चेत् क्रियते सदा ।
भुक्त्वा भोगानशेषांश्च सोऽवश्यं याति रुद्रताम् ॥ ३७ ॥

समयातन्त्रे—

दिवाप्रपूजननं देवि यथोक्तफलदं भवेत् ।
पूजनं लक्षगुणितं निशि नीरजलोचने ॥ ३८ ॥

अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव हि ।
सा महारात्रिरुद्दिष्टा कृता तत्राक्षयो भवेत् ॥ ३९ ॥

तन्त्रे—

गते तु प्रथमे यामे तृतीयप्रहारावधौ ।
निशायां च प्रजप्तव्यं रात्रिशेषे जपेन्नहि ॥ ४० ॥
प्रकटे शक्तिमन्त्रे च हानिः स्यादुत्तरोत्तरम् ।
पशुसन्निधिमासाद्य नित्यपूजां च वर्जयेत् ॥ ४१ ॥
पशोरग्रे कृतं यत्तु प्रमादान्निष्फला भवेत् ।
निजसाधकमध्ये तु न गोप्तव्यं कदाचन ॥ ४२ ॥

समयातन्त्रे—

स्त्रीसमीपे कृता पूजा जपश्च परमेश्वरि ।
कामरूपाच्छतगुणं समुदीरितमव्ययम् ॥४३॥

**इति श्रीपरिव्राजकाचार्य परमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यामासननिर्णयो नाम पञ्चमोल्लासः ॥**

## अथ षष्ठोल्लासः

### ईश्वर उवाच

आत्मस्थां देवतां त्यक्त्वा बहिर्देवं विचिन्वते ।
करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ॥ १ ॥
प्रत्यक्षीकृत्य हृदये बहिःस्थां पूजयेच्छिवाम् ।
यस्य यस्य च देवस्य यथा भूषणवाहनम् ॥ २ ॥
तदेव पूजने तस्य चिन्तयेत् परमेश्वरि ।
अथान्तर्यजनं वक्ष्ये येन देवमयो भवेत् ॥ ३ ॥
सुखासने समासीनः प्राङ्मुखो वा उदङ्मुखः ।
स्वकीयहृदये ध्यायेत् सुधासागरमुत्तमम् ॥ ४ ॥
रत्नद्वीपं च तन्मध्ये सुवर्णबालुकामयम् ।
मन्दारपारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ॥ ५ ॥
सर्वतोऽलङ्कृतैर्दिव्यैर्नित्यपुष्पफलद्रुमैः ।
नानासुगन्धकुसुमगन्धामोदितदिङ्मुखम् ॥ ६ ॥
उत्फुल्लकुसुमामोदप्रहृष्टभृङ्गसंकुलम् ।
कूजत्कोकिलसंगेन वाचालितदिगन्तरम् ॥ ७ ॥
सर्वतोऽलङ्कृतं दिव्यं लसत्काञ्चनपङ्कजम् ।
मौक्तिकैः कुसुमैः स्रग्भिर्दुकूलैः स्वर्णतोमरैः ॥ ८ ॥
तन्मध्ये संस्मरेद् देवि कल्पवृक्षं मनोहरम् ।
चतुःशाखाचतुर्वेदं गुणत्रयसमन्वितम् ॥ ९ ॥
पीतं कृष्णं तथा श्वेतं रक्तं पुष्पं च सुन्दरि ।
हरितं च विचित्रं च नानापुष्पविराजितम् ॥ १० ॥

कोकिलैर्भ्रमरैर्देवि शोभितं बहुपक्षिभिः ।
एवं कल्पद्रुमं ध्यात्वा तदधोरत्नवेदिकाम् ।। ११ ।।

तत्रोपरि महद्व्याप्तं चिन्तयेद्रक्तमण्डलम् ।
उद्यदादित्यसंकाशं रत्नसोपानमण्डितम् ।। १२ ।।

ध्वजावलीसमाकीर्णं चतुर्द्वारसमन्वितम् ।
नानारत्नादिशोभाढ्यं रत्नप्राकारमण्डितम् ।। १३ ।।

स्वस्वस्थानस्थितावस्थैर्लोकपालैरधिष्ठितम् ।
सिद्धचारणगन्धर्वैर्विद्याधरमहोरगैः ।। १४ ।।

किन्नरैरप्सरोभिश्च क्रीडद्भिः परिदिङ्मुखम् ।
नृत्यवादित्रनिरतैरमरस्त्रीगणैर्युतम् ।। १५ ।।

किङ्किणीजालसन्नद्धं पताकाभिरलङ्कृतम् ।
महामाणिक्यवैदूर्यरत्नचामरभूषितम् ।। १६ ।।

स्थूलमुक्ताफलोद्दामलम्बमानैरलङ्कृतम् ।
चन्दनागुरुकस्तूरीमृगमदविलेपितम् ।। १७ ।।

तन्मध्ये संस्मरेद् देवि महामाणिक्यवेदिकाम् ।
उद्यदर्केन्दुकिरणैश्चतुष्कोणप्रशोभिताम् ।। १८ ।।

ध्यायेत् सिंहासनं तत्र ब्रह्मविष्णुशिवात्मकम् ।
सिंहासने महेशानि प्रसूनतूलिकां न्यसेत् ।। १९ ।।

पीठपूजां ततः कृत्वा संकल्पोक्तक्रमेण तु ।
प्रेतपद्मासने तत्र चिन्तयेत् परमेश्वरीम् ।। २० ।।

आत्मनोऽभीष्टदेवताध्यानमिहोच्यते—

श्रीरत्नपादुके दत्त्वा नीत्वा तां स्नानमन्दिरे ।। २१ ।।

सिंहासनोपविष्टायामुद्वर्त्तनं समाचरेत् ।
कर्पूरागुरुकस्तूर्या यथा मृगमदेन च ॥ २२ ॥

रोचनाकुङ्कुममिश्रैर्नानागन्धसमन्वितैः ।
देव्या उद्वर्त्तनं कृत्वा गन्धतैलं विलेपयेत् ॥ २३ ॥

देव्याः शतसहस्रैस्तु स्वर्णकुम्भसहस्रकैः ।
आनीय वारिणा स्नातां चिन्तयेत् परदेवताम् ॥ २४ ॥

दुकूलैर्मार्जितं गात्रं दुकूले परिधे तथा ।
कङ्कत्या केशं संस्कुर्याद् विधिवद् बन्धनं तथा ॥ २५ ॥

पट्टगुच्छं केशपाशे नानारत्नोपशोभिताम् ।
ललाटे तिलकं दद्यात् सिन्दूरं केशमध्यगे ॥ २६ ॥

नागेन्द्रदन्तरचितं शङ्खं दद्यान्मनोहरम् ।
हस्ते केयूरकं चैव कङ्कणं कटकं तथा ॥ २७ ॥

पादाङ्गुलीयकं दद्यान्नानारत्नोपशोभितम् ।
पादयोर्नूपुरं दद्यान्नासाग्रे गजमौक्तिकम् ॥ २८ ॥

निवेदयेद् यथाशक्त्या पुष्पमालां च भूषणम् ।
सर्वाङ्गे लेपनं कुर्याद् गन्धचन्दनसिह्लकैः ॥ २९ ॥

काञ्चनाञ्चितकञ्चूलीशोभितं हृदयोपरि ।
समाधौ चिन्तयेद् देवीं भूतशुध्यादिकं दिशेत् ॥ ३० ॥

न्यासजालं विधायाथ समाधौ पूजयेत् सदा ।
षोडशैरुपचारैस्तु हृदिस्थां पूजयेच्छिवाम् ॥ ३१ ॥

रत्नसिंहासनं दद्यात् स्वागतं कुशलं वदेत् ।
पाद्यं च पादयोर्देवि शिरस्यर्घ्यं निवेदयेत् ॥ ३२ ॥

परामृतमाचमनीयं प्रदद्यान्मुखपङ्कजे ।
मधुपर्कं मुखे दद्यात्त्रिधा आचमनं मुखे ।। ३३ ।।

हेमपात्रगतं दिव्यं परमान्नं परिस्ततम् ।
कपिलाघृतसंयुक्तमन्नं व्यञ्जनसंयुतम् ।। ३४ ।।

सुधाम्बुधिं मांसशैलं मत्स्यराशिं फलानि च ।
भक्ष्यं भोज्यं तथा लेह्यं चव्यं चोष्यं तथैव च ।। ३५ ।।

सकर्पूरं च ताम्बूलं मानसं परिकल्पयेत् ।
आवरणं ततो देव्याः पूजनं मनसैव हि ।। ३६ ।।

इत्थमन्तः समाराध्य मनसैव जपेन्मनुम् ।
सहस्रादि जपं कृत्वा देव्यै मोदकमर्पयेत् ।। ३७ ।।

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एतदेव महादेव्याः पर्यङ्कं समुदाहृतम् ।। ३८ ।।

पयः फेणनिभां शय्यां नानापुष्पोपशोभिताम् ।
पुष्पशय्यां च संकुर्यात्तत्र देवीं सुरेश्वरीम् ।। ३९ ।।

चिन्तयेत् साधको योगी नानासुखविलासिनीम् ।
नृत्यगीतैः सवाद्यैश्च तोषयेत् परमेश्वरीम् ।। ४० ।।

ततो होमं प्रकुर्वीत पूजासाथैक्यहेतवे ।
अथ होमं प्रवक्ष्यामि येन चिन्मयतां लभेत् ।। ४१ ।।

अथाधारमये कुण्डे चिदग्नौ होमयेत्ततः ।
अन्तरात्मा परमात्मा ज्ञानात्मा परिकीर्तितः ।। ४२ ।।

एतद्रूपं चित्कुण्डं चतुरस्रं विभावयेत् ।
आनन्दमेखलारम्यं बिन्दुत्रिवलयाङ्कितम् ।। ४३ ।।

अर्द्धमात्रा योनिरूपं ब्रह्मानन्दमयो भवेत् ।
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ॥ ४४ ॥

सुषुम्नां मध्यतो ध्यात्वा कुर्याद् होमं यथाविधि ।
धर्माधर्मौ साधकेन्द्रो हविस्तेन प्रकल्पयेत् ॥ ४५ ॥

मूलमन्त्रं समुच्चार्य ततः श्लोकं जपेदमुम् ।
नाभिचैतन्यरूपाग्नौ हविषा मनसा श्रुचा ॥ ४६ ॥

ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ।
वह्निजायान्तमन्त्रेण दद्याच्च प्रथमाहुतिम् ॥ ४७ ॥

मूलमन्त्रोपरि श्लोकमपरं होमयेन्मनुम् ।
धर्माधर्मौ हविर्दीप्तमात्माग्नौ मनसा श्रुचा ॥ ४८ ॥

सुषुम्नावर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ।
वह्निजायान्तमन्त्रेण द्वितीयाहुतिमादिशेत् ॥ ४९ ॥

मूलमन्त्रं समुच्चार्य ततः श्लोकं जपेदमुम् ।
प्रकाशाकाशहस्ताभ्यां अवलम्ब्यात्मना श्रुचा ॥ ५० ॥

ज्ञानप्रदीपिते नित्यमक्षवृत्तिर्जुहोम्यहम् ।
वह्निजायान्तमन्त्रेण तृतीयाहुतिमाचरेत् ।
मूलमन्त्रं समुच्चार्य ततः श्लोकं जपेदमुम् ॥ ५१ ॥

अन्तर्निरन्तरनिरिन्धनमेधमाने,
मायान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ,
विश्वं जुहोमि वसुधादिशिवावसानम् ॥ ५२ ॥

अनेन मनुना हुत्वा पूर्णाहुतिरनन्तरम् ।
इदं तु पात्रभरितं महत्तापपरामृतम् ॥ ५३ ॥

पूर्णाहुतिमये वह्नौ पूर्णंहोमं जुहोम्यहम् ।
वह्निजायान्तमन्त्रेण दद्यात् पञ्चाहुतिं प्रिये ।। ५४ ।।
इत्यन्तर्यजनं कृत्वा साक्षाद् ब्रह्ममयो भवेत् ।
एवमेव महेशानि पूजयाम्यहमीश्वरीम् ।। ५५ ।।
योगिनो मुनयश्चैव पूजयन्ति सदा प्रिये ।
केवलं मानसेनैव नैव सिद्धो भवेद् गृही ।। ५६ ।।
सबाह्येन तु तत्त्वेन सिद्धो भवति तद् गृही ।

भूतशुद्धौ—

सर्वासु बाह्यपूजासु अन्तःपूजा विधीयते ।। ५७ ।।
अन्तःपूजा महेशानि बाह्यकोटिफलं लभेत् ।
सकृत्पूजा महेशानि बाह्यकोटिफलं लभेत् ।। ५८ ।।
किं तस्य बाह्यपूजायां सर्वं व्यर्थं कदर्थनम् ।
उपचाराद्यभावे च बाह्यपूजा कदर्थनम् ।। ५९ ।।
विनोपचारैर्या पूजा सा पूजा न प्रसीदति ।

तन्त्रान्तरे—

यदि वाह्यार्चनाद् द्रव्यसम्पत्तिरपि वर्त्तते ।। ६० ।।
अन्तर्यागं विधायेत्थं बहिर्यागविधिं चरेत् ।

यामले—

पूजाभावे महेशानि हृदये पूजयेच्छिवाम् ।। ६१ ।।
सर्वपूजाफलं देवि प्राप्नोति साधकः प्रिये ।

गन्धर्वतन्त्रे—

मनसापि महादेव्यै नैवेद्यं दीयते यदि ।। ६२ ।।
यो नरो भक्तिसंयुक्तो दीर्घायुः स सुखी भवेत् ।
माल्यं पद्मसहस्रस्य मनसा यः प्रयच्छति ।। ६३ ।।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
स्थित्वा देवीपुरे श्रीमान् सार्वभौमो भवेत् क्षितौ ॥ ६४ ॥

मनसापि महादेव्यै यस्तु कुर्यात् प्रदक्षिणम् ।
सदक्षिणे यमगृहे नरकाणि न पश्यति ॥ ६५ ॥

मनसापि महादेव्या यो भक्त्या कुरुते नतिम् ।
सोऽपि लोकान् विनिर्जित्य देवीलोके महीयते ॥ ६६ ॥

महामायां महादेवीमर्चयामि च भक्तितः ।
नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः ॥ ६७ ॥

नैवेद्यं देहि नियतमिति यो भाषते मुहुः ।
सोऽपि लोकान् विनिर्जित्य देवीलोके महीयते ॥ ६८ ॥

**इति श्रीपरिव्राजकाचार्य परमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यामन्तर्यागविधिर्नाम षष्ठोल्लासः ॥**



## अथ सप्तमोल्लासः

### ईश्वर उवाच

अथानन्दमयीं पूजां वक्ष्यामि गुप्ततान्त्रिकीम् ।
यां कृत्वा शिवसायुज्यं लभते साधकोत्तमः ॥ १ ॥

पूजागृहं समासाद्य साधकेन्द्रो महेश्वरि ।
प्रथमं जलमानीय पादप्रक्षालनं स्मृतम् ॥ २ ॥

उत्तराभिमुखो भूत्वा पादप्रक्षालनं चरेत् ।
दिवापूर्वमुखो भूत्वा रात्रौ कुर्यादुदङ्मुखः ॥ ३ ॥

देवीपूजां शिवस्यैव सदा कुर्यादुदङ्मुखः ।
प्रणवं पूर्वमुच्चार्यं तदितीति परं ततः ॥ ४ ॥

सदिति तु समुच्चार्यं कर्म कुर्याद् विचक्षणः ।
स्मरणात् कर्मणामाद्ये ब्रह्मभूयाय कल्पते ॥ ५ ॥

सर्वदा सर्वकार्येषु तान्त्रिके वैदिके तथा ।
स्वविद्यां संस्मरन् कुर्यात् क्रियां सर्वप्रचोदिताम् ॥ ६ ॥

स्थानशोधनमाह गन्धर्वतन्त्रे—

वीक्षणं धर्मबीजेन यज्ञभूमेः समीरितम् ।
प्रोक्षणं चास्त्रमन्त्रेण यागभूमेः समाचरेत् ॥ ७ ॥

अज्ञातं दूषितं स्नानं मार्जनादौ च यद् भवेत् ।
एवमादीनि सर्वाणि नश्यात्तल्लोकनात् प्रिये ॥ ८ ॥

मधुकैटभयोर्मेदः संघातैर्दृढतां गता ।
मेदिनी सर्वदा शुद्धा सुरपूजासु सर्वतः ॥ ९ ॥

तस्य दोषस्य मोक्षाय कामबीजं क्षितौ लिखेत् ।
पञ्चवर्णरजश्चिन्ता नानागन्धसमन्विता ॥ १० ॥

पुष्पप्रकरसंकीर्णा घण्टाचामरभूषिता ।
बालार्कसदृशी रम्या मनःसन्तोषकारिणी ॥ ११ ॥

एवं भूमिं समाश्रित्य पूजयेत् परमेश्वरीम् ।
मन्त्रैराचमनं कुर्याद् देवीं ध्यात्वा हृदम्बुजे ॥ १२ ॥

आसने उपविशेद् देवि बद्ध्वा वीरासनादिकम् ।
उपविश्य ततो मन्त्री द्रव्याणि स्थापयेत् पुरः ॥ १३ ॥

गन्धपुष्पाक्षतादींश्च दक्षे दीपांश्च सर्वतः ।
नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ॥ १४ ॥

घृतदीपं दक्षिणे तु तैलदीपं तु वामतः ।
वामतस्तु तथा धूम्रमग्रे वा न तु दक्षिणे ॥ १५ ॥

निवेदयेत् पुरो भागे गन्धपुष्पं च भूषणम् ।
सर्वं स्वदक्षिणे स्थाप्यं वामे चार्घ्यं निवेशयेत् ॥ १६ ॥

स्थापयेच्चर्व्यंचोष्यादिनैवेद्यादीनि सन्निधौ ।
करयोः क्षालनार्थाय पृष्ठे पात्रं विनिर्दिशेत् ॥ १७ ॥

स्वस्य शक्त्यनुरूपेण सर्वं सम्पाद्य यत्नतः ।
पूजाद्रव्याणि संप्रोक्ष्य मूलमन्त्रेण साधकः ॥ १८ ॥

दर्शयेद् धेनुमुद्रां च द्रव्यशुद्धिरितीरिता ।
नैवेद्यादिकं च यत्तु पुष्पगन्धादिकं च यत् ॥ १९ ॥

सर्वमाच्छादितं कार्यं यावदावाहयेत् पराम् ।
राक्षसाः प्रतिगृह्णन्ति निराच्छादनकं यतः ॥ २० ॥

### अथ शान्तिकुम्भप्रमाणम्

ऐशान्यां स्थापयेत् कुम्भं स्वर्णताम्रादिनिर्मितम् ।
दैर्घ्ये विंशत्यङ्गुलं तु ग्रीवां वेदाङ्गुलान्विताम् ॥ २१ ॥
कण्ठमर्द्धाङ्गुलं प्रोक्तं मुखमष्टाङ्गुलं स्मृतम् ।
दृढं समतलं कार्यं मानं तत्परिकीर्त्तितम् ॥ २२ ॥

कुम्भविधानं तु गौतमीये—

हैमं रौप्यं तथा ताम्रं मार्त्तिकं वा स्वशक्तितः ।
वित्तशाठ्यं न कर्तव्यं कृते निष्फलमाप्नुयात् ॥ २३ ॥
षट्त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् ।
षोडशं द्वादशं वापि ततो न्यूनं न कारयेत् ॥ २४ ॥

प्रोक्षणीस्थापनमाह गान्धर्वे—

पात्रमस्त्राम्बुभिः प्रोक्ष्य दक्षिणे स्थापयेत्ततः ।
शुद्धोदकेन संपूज्य मूलमन्त्रं जपेत् सुधीः ॥ २५ ॥
प्रोक्षयेत्तेन सकलं प्रोक्षणीस्थेन वारिणा ।

आधारस्थजलशोधनमाह गान्धर्वे—

मण्डलं वामतः कृत्वा जलेन चतुरस्त्रकम् ॥ २६ ॥
ॐ वषट्काराद्यं च मण्डले स्थापयेद् घटम् ।
चन्द्रसूर्याग्निमण्डलं संपूज्य परमेश्वरि ॥ २७ ॥
आनन्दभैरवं तत्र पूजयेदानन्दभैरवीम् ।
यदन्यदूषणं पात्रं तोये वा ज्ञानतो भवेत् ॥ २८ ॥
तत्सर्वं नाशमायाति पूजार्थं तर्जनं भवेत् ।
अर्घ्यवारि परिष्कृत्य तत्क्रमं कथ्यतेऽधुना ॥ २९ ॥
अस्त्रेण पात्रं प्रक्षाल्य हृन्मन्त्रेण प्रपूरयेत् ।
मन्त्रयेत् प्रणवेनैव सामान्यार्घ्यमिदं स्मृतम् ॥ ३० ॥

प्रणवेन दशधा मन्त्रयेदित्यर्थः ।

फटा द्वारं प्रोक्षयेच्च बीजेनाभ्यर्चयेत् सुरान् ।
गां वां क्षां यां च बीजानि उक्तानि परमेश्वरि ।। ३१ ।।
गणेशबटुकक्षेत्रपालांश्च योगिनीं यजेत् ।
पूजयेत् साधकश्रेष्ठः प्रतिद्वारमिति क्रमात् ।। ३२ ।।

विश्वसारे—

एषां पूजां विलङ्घ्याथ न सिद्धिः स्याद् युगे युगे ।
उत्तरादिक्रमेणैव द्वारपालान् समाचरेत् ।। ३३ ।।
ब्रह्माणं वास्तुदेवांश्च पूजयेद् गृहमध्यतः ।
आसने मण्डलं कृत्वा संपूज्यावाहयेत् सुधीः ।। ३४ ।।
विशोध्य वाक्कायचित्तं भूमिं सम्यग् विशोधयेत् ।
ॐ पवित्रवज्रभूमे हुं फट् स्वाहेति मन्त्रतः ।। ३५ ।।
अनन्तरं देशिकेन्द्रो दिव्यदृष्टयाऽवलोकनैः ।
हुं फट् स्वाहेति मन्त्रेण ऊर्ध्वोर्ध्वमप्यधस्तथा ।। ३६ ।।
दिव्यानुत्सारयेद् विघ्नानस्त्रेण चान्तरीक्षगान् ।
पार्ष्णिघातैस्त्रिभिर्भौमानिति विघ्नान्निवारयेत् ।। ३७ ।।

विश्वसारे—

अनिमेषचक्षुषा दृष्टिर्दिव्यदृष्टिः प्रकीर्त्तिता ।

करशुद्धिर्यामले—

प्रागुदीचिमुखो वापि सुपुष्पैर्मार्जयेत् करम् ।
मूलमुच्चार्य देवेशि तत्पुष्पं वामतस्त्यजेत् ।। ३८ ।।

मन्त्रमाह यामले—

भौतिकः शशिकलासमन्वितो वह्निषोडशकला समन्वितः ।
ङेन्तमस्त्रमथ फट्समन्वितं शुद्धाय मनुरयं प्रकीर्त्तितः ।।३९।।

भौतिकः ऐकारः, शशिकला नादबिन्दुर्वह्निरेफस्तेन ऐँ रः अस्त्राय फट्। शुद्धाय करशुद्धायेत्यर्थः। गन्धर्वतन्त्रेऽपि—

गृहीत्वा रक्तपुष्पं च सगन्धं साधकोत्तमः।
अनेनैव तु मन्त्रेण पुष्पं हस्ततलस्थितम् ॥ ४० ॥

सम्मार्ज्यं सव्यहस्तेन वामेन पाणिना ततः।
निर्मञ्छ्य कामबीजेन जिघ्रेत्तु वाग्भवेन तु ॥ ४१ ॥

ऐश्यान्यां निःक्षिपेदेतच्छ्वबीजेन पार्वति।

तत्रैव—

मर्दनात् करयोः शुद्धिर्निर्मञ्छनात्तु पृष्ठयोः ॥ ४२ ॥

घ्राणाद् देवाश्च तुष्यन्ति तीर्थानां च समागमः।
क्षेपणात् सर्वविघ्नानां दूरसंस्थानमेव च ॥ ४३ ॥

दुर्गन्धोच्छिष्टसंस्पर्शदूषणं करयोस्तु यत्।
अज्ञातरूपं तत् सर्वं नाशयेद् विधिनाऽमुना ॥ ४४ ॥

करशुद्धिं समासाद्य कुर्यात्तालत्रयं ततः।
ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः ॥ ४५ ॥

दिग्बन्धनं छोटिकाभिर्दशभिः कारयेत् सुधीः।
विघ्नमुत्सारणं कृत्वा ततः पुष्पं विशोधयेत् ॥ ४६ ॥

कृताञ्जलिपुटो भूत्वा वामे गुरुत्रयं नमेत्।

गुरुत्रयमाह तन्त्रे—

गुरुं परमगुरुं चैव परापरगुरुं तथा ॥ ४७ ॥

दशपार्श्वे गणेशं च मूर्द्धनि देवीं नमेत् प्रिये।

गन्धर्वे—

भूतशुद्धिमृषिन्यासं पीठन्यासं तथैव च ॥ ४८ ॥

करांङ्गयोः षडङ्गानि मातृकान्यासमेव च।
विद्यान्यासं महेशानि यैश्च देवमयो भवेत् ॥ ४९ ॥

एतदेव हि नित्यं स्यात् काम्यं चान्य त् प्रकीर्त्तितम्।
देव एव यजेद् देवं नादेवो देवमर्चयेत् ॥ ५० ॥

न देवः पूजयेद् देवं न पूजाफलभाग् भवेत्।

वशिष्ठरामायणे—

अविष्णुः पूजयेद् विष्णुं न पूजाफलभाग् भवेत् ॥ ५१ ॥

विष्णुर्भूत्वाऽर्चयेद् विणुं महाविष्णुरिति स्मृतः।

भारते—

नाविष्णुः कीर्त्तयेद् विष्णुं नाविष्णुर्विष्णुमर्चयेत् ॥ ५२ ॥

नाविष्णुः संस्मरेद् विष्णुं नाविष्णुर्विष्णुमाप्नुयात्।

भविष्ये—

नारुद्रः संस्मरेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ॥ ५३ ॥

नारुद्रः कीर्त्तियेद्रुद्रं नारुद्रो रुद्रमाप्नुयात्।
नादेवी कीर्तयेद् देवीं नादेवी तां समर्चयेत् ॥ ५४ ॥

न्यासात्तदात्मको भूत्वा देवो भूत्वा तु तं यजेत्।

आग्नेये—

रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद् विष्णुपूजनात् ॥ ५५ ॥

सूर्यः स्यात् सूर्यपूजनाच्छक्त्यादिः शक्तिपूजनात्।

शक्तिपूजनात् शक्त्यादिपूजनात्। आदिपदाद् गणेशादिपरिग्रहः।

येनैव न्यासमात्रेण देववज्जायते नरः ॥ ५६ ॥

प्राणायामैस्तथा ध्यानैर्न्यासैर्देवशरीरभृत्।
न्यासानां प्रचुरत्वेन फलानामपि भूरिता ॥ ५७ ॥

स्वभावतः सदा शुद्धं पञ्चभूतात्मकं वपुः ।
मलमूत्रसमायुक्तं सर्वदेव महेश्वरि ॥ ५८ ॥

तस्यैव हि विशुध्यर्थं वाय्वग्निसलिलाक्षरैः ।
शोषदाहौ तथा भस्मप्रोत्सारणामृतवर्षणम् ॥ ५९ ॥

आप्लावनं च कर्त्तव्यं पूरकेन च कुम्भकैः ।
शरीराकारभूतानां मलानां यद्विशोधनम् ॥ ६० ॥

अव्यंक्तब्रह्मसंस्पर्शाद् भूतशुद्धिरियं शिवे ।
भूतशुद्धिं विधायेत्थमर्घ्यादिस्थापनं चरेत् ॥ ६१ ॥

विदध्यान्मातृकान्यासं मन्त्रन्यासमनन्तरम् ।
प्राणायामं ततः कुर्यादृष्यादिन्यासमाचरेत् ॥ ६२ ॥

न्यासौ कराङ्गयोः कृत्वात्मानं भगवतीं स्मरेत् ।
प्राणायामं ततः कुर्यात्तु त्रयमिदं स्मृतम् ॥ ६३ ॥

अर्घ्यं संस्थापयेन्मन्त्री यथान्यासं विधानतः ।
त्रिकोणषट्कोणवृत्तचतुरस्राणि कारयेत् ॥ ६४ ॥

पुष्पैरभ्यर्च्य तन्मन्त्री तत्राधारं निवेशयेत् ।
मं वह्निमण्डलाय दशकलात्मने नमः ॥ ६५ ॥

पूजयित्वार्घ्यपात्रं तु तत्रैव स्थापयेत् बुधः ।
फडिति प्रक्षालनं कृत्वा पूजयेत् साधकोत्तमः ॥ ६६ ॥

अं अर्कमण्डलाय नम इत्यपि च पूजयेत् ।
मूलेनापूर्य देवेशि विमलेन जलेन तु ॥ ६७ ॥

ॐ सोममण्डलाय षोडशकलात्मने नमः ।
पूजयित्वा षडङ्गानि न्यसेत् साधकसत्तमः ॥ ६८ ॥

तत्राक्षतानि पुष्पाणि दूर्वादि च विनिक्षिपेत् ।
मूलमन्त्रं जपेत् स्पृष्ट्वा अङ्गमन्त्रं प्रविन्यसेत् ॥ ६९ ॥

हृन्मन्त्रेणाभिसंपूज्य हस्ताभ्यां छादयेदपः ।

हस्ताभ्यामिति मत्स्यमुद्रया इत्युक्तम् ।

अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठयेत् ॥ ७० ॥

धेनुमुद्रां समासाद्य बोधयेच्चक्रमुद्रया ।
अमृतं तज्जलं चिन्त्य द्रव्यसंप्रोक्षणं चरेत् ॥ ७१ ॥

शिवविषये गृहिणां सगर्भैव दूर्वा यथा ।
अन्तःशून्यां त्रिपत्राञ्च यो दद्यान्मच्छिरोपरि ॥ ७२ ॥

जन्मन्यत्र दरिद्रः स्यादन्ते च नरकं व्रजेत् ।
आदौ द्रव्याणिसंस्कृत्य पश्चात्तन्त्रोदितान्न्यसेत् ॥ ७३ ॥

मातृकाविविधा प्रोक्ता परा चाप्यपरा तथा ।
सुषुम्नान्तः परा ज्ञेया अपरा देहमाश्रिता ॥ ७४ ॥

## अथ मातृकाषडङ्गन्यासः

ज्ञानार्णवे—

अं आं मध्ये कवर्गं तु इं ईं मध्ये चवर्गकम् ।
उं ऊँ मध्ये टवर्गं तु एं ऐं मध्ये तवर्गकम् ॥ ७५ ॥

ओं औं मध्ये पवर्गं तु अं अः मध्ये यवर्गकम् ।
मूलादिब्रह्मरन्ध्रान्तं ध्यायेद् देवीं चिदात्मिकाम् ॥ ७६ ॥

बिन्दुश्रुतसुधासारैस्तर्पयन्मातृकां न्यसेत् ।
अथान्तर्मातृकान्यासं शृणुष्व कमलानने ॥ ७७ ॥

द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडश विन्यसेत् ।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥ ७८ ॥

दशपत्राम्बुजे नाभौ उकारादीन् न्यसेद् दश ।
षट्पत्रलिङ्गमध्यस्थवकारादीन् न्यसेच्च षट् ॥ ७९ ॥

आधारे चतुरो वर्णान् न्यसेद् वादीन् चतुर्दले ।
अक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ॥ ८० ॥

एकैकवर्णमुच्चार्यं मूलाधाराद् ध्रुवान्तिकम् ।
नमोऽन्तमिति विन्यास आन्तरः परिकीर्तितः ॥ ८१ ॥

शारदायाम्—

बाह्यं वै मातृकान्यासं शृणुष्वावहिता मम ।
ललाटसुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः ॥ ८२ ॥

ओष्ठदन्तोत्तमाङ्गास्यदोः यत्सन्ध्यग्रकेषु च ।
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽशके ॥ ८३ ॥

ककुद्यंशे च हृत्पूर्वपाणिपादयुगे तथा ।
जठराननयोर्न्यस्येन्मातृकार्णान् यथाक्रमम् ॥ ८४ ॥

मातृकान्यासमुद्रामाह मानसोल्लासे—

मनसा वा न्यसेन्न्यासान् पुष्पैरेवाथवा न्यसेत् ।
अङ्गुष्ठानामिकायोगान्न्यसेद्वा सर्वकर्मसु ॥ ८५ ॥

गौतमीये—

चतुर्धा मातृका प्रोक्ता केवला बिन्दुसंयुता ।
सविसर्गा सोभया च रहस्यं कथयामि ते ॥ ८६ ॥

विद्याकरी केवला च सोभया भुक्तिदायिका ।
सविसर्गा पुत्रदात्री सबिन्दुर्बिन्दुदायिनी ॥ ८७ ॥

बिन्दुदायिनी मोक्षदायिनीत्यर्थः ।

धनं यशस्यमायुष्यं कलिकल्मषनाशनम् ।
यः कुर्यान्मातृकान्यासं स एव श्रीसदाशिवः ॥ ८८ ॥

अथ विद्यान्यासः

नवरत्नेश्वरे

मूर्द्ध्नि मूले च हृदये नेत्रत्रितय एव च ।
श्रोत्रयोर्युगले देवि मुखे च भुजयोः पुनः ॥ ८९ ॥
पृष्ठजानुनि नाभौ च विद्यान्यासं समाचरेत् ।
एवं न्यासकृतः साक्षात् पशुः पशुपतिः स्वयम् ॥ ९० ॥

फेत्कारिणीतन्त्रे—

ॐ कारं सम्पुटीकृत्य मूलेन व्यापकं न्यसेत् ।
पञ्चधा नवधा वापि न्यसेद्वा सप्तधा तथा ॥ ९१ ॥

मूलमुच्चार्य शिरआदिपादपर्यन्तं पादादिशिरोऽन्तं हृदादिमुखान्तं व्यापकं न्यसेदित्यर्थः । इति विद्यान्यासः ।

विशुद्धेश्वरे—

प्राणायामत्रयं कुर्याद् विद्यया तदनन्तरम् ।
पूरकं वामनाड्यां तु कुर्यात् षोडशधा जपैः ॥ ९२ ॥
कुम्भकं मध्यनाड्यां तु चतुःषष्ठिजपात्ततः ।
रेचकं पिङ्गलायां तु तदर्द्धंजपसंख्यया ॥ ९३ ॥
विपरीतं ततः कुर्याद् यथाशक्त्या तु साधकः ।
तदशक्तौ चतुर्थ्याऽपि प्राणसंयमनं चरेत् ॥ ९४ ॥

चतुर्थ्यापीति मूलविद्यायाश्चतुर्वारजपेन पूरकम्, षोडशवारजपेन कुम्भकम्, अष्टवारजपेन रेचकमित्यर्थः । तत्राप्यशक्तौ समयाङ्कमातृकायाम्—

इडया पूरयेद् वायुं सकृच्च मूलविद्यया ।
मध्यनाड्या कुम्भयेच्च वेदसंख्या वरानने ॥ ९५ ॥
नेत्रसंख्याक्रमेणैव रेचयेत् पिङ्गलाध्वना ।
पुनः पुनः क्रमेणैव यथा वारत्रयं भवेत् ॥ ९६ ॥

बाह्यादापूरणं वायोरुदरे पूरकं भवेत् ।
बहिर्यद्रेचनं वायोरुदराद्रेचको हि सः ॥ ९७ ॥

ज्ञानार्णवे—

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ ९८ ॥

प्राणायामं विना देवि पूजने नास्ति योग्यता ।

यामले—

ऋषिन्यासं मूर्द्धनि देशे छन्दं तु मुखपङ्कजे ॥ ९९ ॥
देवतां हृदये चैव बीजं तु गुह्यदेशके ।
शक्तिं तु पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत् ॥ १०० ॥
ऋषिच्छन्दो देवतानां विन्यासेन विना यदा ।
जप्यते साधकोऽप्येष तत्र तन्न फलं लभेत् ॥ १०१ ॥

तत्तत्प्रकरणीयमृषिच्छन्द इत्यादिकं न्यसेदित्यर्थः । कराङ्गन्यासमाह

शारदायाम्—

अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः सजातिभिः ।

अङ्गैस्तत्तत्कल्पोक्तमन्त्रैः, सजातिभिः नम आदिभिः ।

ज्ञानार्णवे—

नमः स्वाहा वषट् हुँ वौषट्फडन्ताः सजातयः ॥ १०२ ॥
हृच्छिरः शिखाकवचनेत्रत्रयं तथास्त्रकम् ।

शारदायाम्—

अस्त्रं तत्तलयोर्न्यस्य कुर्यात्तालद्वयादिकम् ॥ १०३ ॥
दिशस्तेनैव बध्नीयाच्छोटिकाभिः समन्ततः ।

अथाङ्गन्यासः

हृदयादिषु संन्यस्येदङ्गमन्त्रांस्तथा सुधीः ॥ १०४ ॥

हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ॥ १०५ ॥
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात्।
षडङ्गमन्त्रमित्युक्तं षडङ्गेषु नियोजयेत् ॥ १०६ ॥

रुद्रयामले—

हृदयं मध्यमानामातर्जनीभिः स्मृतं शिरः।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा स्मृता ॥ १०७ ॥
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम्।
प्रोक्ताङ्गुलीभ्यामस्त्रं स्यादङ्गक्लृप्तिरियं मता ॥ १०८ ॥

तिसृभिरिति तर्जनीमध्यमानामाभिः—

तर्जनीमध्यमानामा प्रोक्ता नेत्रत्रये क्रमात्।

भैरवतन्त्रे

षडङ्गानि न्यसेन्मन्त्री त्रिःसकृद्वा यथाक्रमम् ॥ १०९ ॥

तन्त्रे—

अङ्गन्यासकरन्यासौ मायया दीर्घया चरेत्।

सारावल्याम्—

यद्बीजाद्या भवेद् विद्या तद्बीजेनाङ्गकल्पना ॥ ११० ॥

कुलचूडामणौ—

एकाक्षरमुद्धृत्य पूर्वं बीजं परं शक्तिरिति।
षड्दीर्घभाजा बीजेन कुर्यादङ्गादिकल्पना ॥ १११ ॥

कालीविद्यायां स्वच्छन्दसङ्ग्रहे—

स्वरं विहाय बीजे तु दीर्घषट्कानि योजयेत्।
षडङ्गानि विधेयानि सर्वत्रायं विधिः स्मृतः ॥ ११२ ॥
पूजाजपार्चनहोमाः सिद्धमन्त्राहुता अपि।
अङ्गन्यासेन विहीना न दास्यन्ति फलान्यमी ॥ ११३ ॥

इति नित्यन्यासः

ततः स्वस्वकल्पोक्तषोढान्यासं कुर्यात्

षोढान्यासशरीरस्तु भवेद् गङ्गाधरः स्वयम् ।
अवश्यं प्रत्यहं कार्यं न पूजा न जपस्तथा ॥ ११४ ॥

कृतेऽपि साधकश्रेष्ठो महादेवसमो भवेत् ।
कृतन्यासोऽकृतन्यासं प्रणमेद् यदि पार्वति ॥ ११५ ॥

तत्क्षणादकृतन्यासो विदीर्णहृदयो भवेत् ।
यं नमन्ति महादेवि षोढापुटितविग्रहाः ॥ ११६ ॥

अल्पायुः स भवेत् सद्यो देवता कम्पते भिया ।
न्यासं निवर्त्तयेद् देवि षोढान्यासपुरःसरम् ॥ ११७ ॥

गन्धर्वतन्त्रे—

आत्मानं परमं ध्यायेद् दिव्यस्त्रीभिरलङ्कृतम् ।
दिव्यमूर्ध्नि महाच्छत्रं सहस्रदलनिर्मितम् ॥ ११८ ॥

रत्नासनोपविष्टं तु लाक्षारुणगृहस्थितम् ।
ताम्बूलरक्तवदनं नानागन्धसमन्वितम् ॥ ११९ ॥

चन्दनागुरुदिग्धाङ्गो रक्तचन्दनभूषितः ।
सर्वालङ्कारभूषाढ्यो देवीरूपकृतविग्रहः ॥ १२० ॥

सुगन्धिपुष्पाभरणवस्त्रादिभिरलङ्कृतः ।
तस्य हस्तगतासिद्धिर्नान्यस्य च कदाचन ॥ १२१ ॥

ततो देवीं हृदम्भोजे ध्यायेत्तद्गतमानसः ।
पुष्पं गृहीत्वा देवेशि मुद्रया तु त्रिखण्डया ॥ १२२ ॥

तां कुर्याद् हृदयासन्ने निमील्य लोचनद्वयम् ।
समकायशिरोग्रीवो भूत्वा स्थिरतरो बुधः ॥ १२३ ॥

ध्यानं समारभेन्मन्त्री सर्वपापप्रणाशनम् ।
ततो हृत्पद्मके देवीं गन्धादिभिः समर्चयेत् ॥ १२४ ॥

एनां तु मानसैर्भोगैर्गन्धपुष्पप्रदीपकैः ।
नैवेद्यैर्बलियुक्तैश्च पूजयेद्वै यथाविधि ॥ १२५ ॥

ततो वै मानसं जापं कुर्याद्धोमादिमेव च ।
नमस्कृत्य तथा स्तुत्वा बहिर्यजनमाचरेत् ॥ १२६ ॥

ततो हृदयपद्मान्तः स्फुरन्तीं परमेश्वरीम् ।
सुषुम्नावर्त्मना नीत्वा शिवस्थाने महेश्वरीम् ॥ १२७ ॥

तत्रानन्देन संयोज्य केवलानन्दरूपिणीम् ।
ततो वै हृदयासन्ने पुष्पस्थाने समानयेत् ॥ १२८ ॥

तामाज्ञास्थानमानीय वहन्नाड्या विरेचयेत् ।
नासया दक्षया देवि वायुबीजेन मन्त्रवित् ॥ १२९ ॥

करस्थकुसुमे देवीं स्थापयेदासनोपरि ।
एह्येहि भगवत्यम्बे भक्तानुग्रहविग्रहे ॥ १३० ॥

योगिनीभिः समं देवि रक्षार्थं मम सर्वदा ।
देवेशि भक्तिसुलभे परिवारसमन्विते ॥ १३१ ॥

यावत्त्वां पूजयामीशे तावत्त्वं सुस्थिरा भव ।
देवीं ध्यात्वा समावाह्य तत्तन्मुद्राः प्रदर्शयेत् ॥ १३२ ॥

तत्तन्मुद्रा आवाहनादिपञ्चमुद्राः ।

शालग्रामे मणौ चाप्सु वह्नौ मनसि पुष्पके ।
एषु चावाहनं नास्ति अत्र देवाः सदा स्थिताः ॥ १३३ ॥

यामले—

आदौ मूलं समुच्चार्य पश्चाद् देवं समुच्चरेत् ।
सम्प्रदानं तदन्ते तु त्यागार्थकपदं ततः ॥ १३४ ॥

तत्कल्पोक्तक्रमेणैव पूजयेत् परमेश्वरीम् ।
नार्चयेदेकहस्तेन पञ्चानां नखदर्शनम् ॥ १३५ ॥

निष्फला कीर्तिता साहि सर्वत्रापि न शोभते ।
चरणाधारणाभ्यन्तर्वक्षोमौलिषु पञ्चसु ॥ १३६ ॥

पञ्चाञ्जलीन् प्रसूनैश्च विकीर्याथ महेश्वरि ।
देवीपदाम्बुजद्वन्द्वे त्रिभिः पुष्पाञ्जलीन् क्षिपेत् ॥ १३७ ॥

श्रीपादुकां पूजयामीति त्रिधा पुष्पं विनिक्षिपेत् ।
अङ्गुष्ठानामिकायोगाद् दक्षे पुष्पाणि पातनम् ॥ १३८ ॥

तर्पणं तु मुखे दद्यात्रिवारं मूलविद्यया ।
अङ्गुष्ठानामिकायोगाच्छिवशक्त्यात्मकः परम् ॥ १३९ ॥

तयोः संयोगमात्रेण द्रव्यं स्यादमृतोपमम् ।
तेनामृतेन दिव्येन तर्पयेत् परदेवताम् ॥ १४० ॥

षडङ्गं पूजयेत्तत्र देव्या देहेऽथवा पुनः ।
हृदये हृदयाङ्गं तु शिरोऽङ्गं शिरसि तथा ॥ १४१ ॥

शिखायां तु शिखा प्रोक्ता कवचं सर्वदेहके ।
नेत्रे नेत्रत्रयं प्रोक्तं दिशास्वस्त्रमुदीरयेत् ॥ १४२ ॥

नमः स्वाहा वषट् हुँ च वौषट् फड्जातिसंयुतम् ।
षडङ्गयुवतीत्यादि देव्या देहेषु संस्थिता ॥ १४३ ॥

तन्त्रे—

दृष्ट्वा हृदयमाग्नेय्यामैशान्यां तु शिरो यजेत् ।
नैरृत्यां च शिखा पूज्या वायव्यां कवचं यजेत् ॥ १४४ ॥

अभ्यर्च्य पुरतो नेत्रं दिक्षु चास्त्रमथार्चयेत् ।
प्रधानतनुरूपाणि षडङ्गानि प्रपूजयेत् ॥ १४५ ॥

शारदाटीकायाम्—

वायव्यदिशिपर्यन्तं गुरुपङ्क्तिं समर्चयेत् ।

गुरुपङ्क्त्यज्ञाने यामले—

अविज्ञातगुरुर्देवि गुरुं च परमं गुरुम् ॥ १४६ ॥

परापरगुरुं चैव परमेष्ठिगुरुं तथा ।

आग्नेयादिकोणमाह तन्त्रगन्धर्वे—

ईशानमग्निकोणं स्याद् वायुकोणं तथेशकम् ॥ १४७ ॥

राक्षसं वायुकोणं स्यादग्निश्च राक्षसं भवेत् ।

गन्धर्वतन्त्रे—

अथवा वश्ययः सर्वा देवीरूपं विचिन्तयेत् ॥ १४८ ॥

निःसरन्ति यथा नित्यं सूर्यविद्यान्मरीचयः ।
देव्यस्तथा समुत्पन्ना महादेव्याः शरीरतः ॥ १४९ ॥

श्रीपात्रामृततोयेन रश्मिवृन्दं प्रतर्पयेत् ।
प्राचीं दिशिं विजानीयात् पूजयेदंगदेवताः ॥ १५० ॥

स्वस्थानमाश्रिता देवाः सर्वाभीष्टफलप्रदाः ।
स्वस्थानवर्जिता देवाः शोकदुःखफलप्रदाः ॥ १५१ ॥

प्रा च्यादिदिशमाह नवरत्नेश्वरे—

पूज्यपूजकमध्ये तु पूर्वा शैवव्यस्थिता ।
पूज्यस्य दक्षिणे दक्षा चोत्तरे चोत्तरा तथा ॥ १५२ ॥

पश्चिमे पश्चिमो ज्ञेया पूजायां सर्वतः शिवे ।

सर्वत इति षडङ्गपूजायाम् ।

आत्मनः सम्मुखं चैव देवतायाश्च सम्मुखम् ॥ १५३ ॥

देवस्य मस्तकं कुर्यात् कुसुमेनार्चितं सदा ।
पूजाकाले देवतायाः नो परिभ्रामयेत् करम् ।। १५४ ।।

त्रिपुराविषये—

पुरन्दरमुखो मन्त्री पूजयेत्त्रिपुरां यदि ।
देवीपृष्ठं भवेत् प्राची प्रतीची त्रिपुरापुरः ।। १५५ ।।

कृताञ्जलिः श्रीमत्यमुकिदेवि आवरणांस्ते पूजयामीत्यनुज्ञां लब्ध्वा आवरणं पूजयेत् ।

पद्मपत्रे ततश्चक्रे देव्या अग्रदलादितः ।
वामावर्त्तेन देवेशि क्रमेण परिपूजयेत् ।। १५६ ।।

स्वकल्पोक्तक्रमेणैव पूजयेदङ्गदेवताः ।

कुलार्णवे—

त्रिवारं पूजयेद् वापि सकृद् वापि यथेच्छया ।। १५७ ।।

यामले—

देव्यस्त्रं पूजयेद् दिक्षु पुनर्देवीं प्रपूजयेत् ।
सवाहनाः सवर्णाद्याः परिवाराद्यास्ततः परम् ।। १५८ ।।
सर्वोपचारैः संपूजिताः सन्त्विति मनुं जपेत् ।
ततः सन्तोष्य देवेशीं गन्धपुष्पाक्षतादिभिः ।। १५९ ।।
विशेषार्घ्येण सन्तर्प्य परमानन्दभाववान् ।
ध्यात्वा कामकलां देहे विद्याजपं समाचरेत् ।। १६० ।।
मन्त्रार्थस्मृतिपूर्वं तु सहस्रादि जपं चरेत् ।

बृहच्छ्रीक्रमे—

न जपेत्त्रिशतान्यूनं साधकस्तु कदाचन ।। १६१ ।।

तन्त्रे—

सहस्रं वा शतं वापि दश वापि जपं तथा ।
कुर्यादस्याधिकं तेषामिति जपविधिः स्मृतः ।। १६२ ।।

जपं समर्पयेद् देवि गन्धपुष्पार्घ्यवारिभिः ।
तेजोमयं जपं देव्या वामहस्ते निवेदयेत् ॥ १६३ ॥

गुह्यातिगुह्यगोप्तृत्वमिति मन्त्रेण मन्त्रवित् ।
ततो निराजनं कुर्याद् दशवारं तु दीपकैः ॥ १६४ ॥

स्तुवन् प्रदक्षिणीकृत्य दण्डवत् प्रणमेद् भुवि ।
आत्मार्पणेन मनुना कुर्यादात्मार्पणं प्रिये ॥ १६५ ॥

तदुक्तं यामले—

इतः पूर्वमिति प्रोच्य प्राणबुद्धीति चोच्चरेत् ।
देहधर्माधिकारतोऽपि जाग्रत्स्वप्नसुषुप्तिषु ॥ १६६ ॥

समावस्थासु मनसा वाचा च कर्मणेति च ।
हस्ताभ्यामथ पद्भ्यां च तथोदरेण संस्मरेत् ॥ १६७ ॥

शिश्ना यत् स्मृतमित्येतद् यदुक्तं यत् कृतं तथा ।
सर्वमित्यपि तद् ब्रह्मार्पणमस्त्वग्निवल्लभा ॥ १६८ ॥

प्रणवं च मदीयं मां सकलं साध्यदेवताम् ।
ङेन्तां समर्पितं तारं तत्सदित्यपि संस्मरेत् ॥ १६९ ॥

अर्घ्योदकाक्षतैर्मूलैर्देव्यै पूजां समर्पयेत् ।
पूजितास्त्वित्यनेनैव देव्यै पूजां समर्पयेत् ॥ १७० ॥

देव्या गृहीतमित्येवं भावयेद् यतमानसः ।

विश्वसारे—

अज्ञानाद्वाप्रमादाद्वा वैकल्यात् साधनस्य च ॥ १७१ ॥

यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ।
द्रव्यहीनं क्रियाहीनं श्रद्धाभक्तिविवर्जितम् ॥ १७२ ॥

तत्सर्वं कृपया देवि क्षमस्व त्वं दयानिधे ।
यन्मया क्रियते कर्म महद्वा स्वल्पमेव च ॥ १७३ ॥
तत् सर्वं च जगद्धात्रि क्षन्तव्यमयमञ्जलिः ।

कुलार्णवे—

कृताञ्जलिर्महेशानि रक्षामन्त्रं पठेत् सुधीः ॥ १७४ ॥

ॐकालीविदध्यान्मम रक्षां तथाकरालीममदेहरक्षाम् ।
दुर्गाहिहासैर्मम शत्रुनाशनं करोतु तारा विदधातु राज्यम्॥ १७५ ॥

स्तोत्रैः स्तुत्वा पठेद् देवी कवचं सर्वकामदम् ।
पठेत् सहस्रनामाख्यं स्तोत्रं मोक्षस्य साधनम् ॥ १७६ ॥
कवचं हि विना देवि शूद्रस्तु जपमाचरेत् ।

कवचं हि विना स्वाहाप्रणवयुक्तं कवचं विनेत्यर्थः ।

देवीं प्रदक्षिणीकृत्य नमस्कृत्य विसर्जयेत् ॥ १७७ ॥
विज्ञाय पश्चात् स्वां विद्यां स्वीयहृत्सरसीरुहे ।
सुषुम्नावर्त्मना पुष्पमाघ्रापयेद् वासयेत्ततः ॥ १७८ ॥
क्षमस्वेति च मन्त्रेण हृदि देवीं विसर्जयेत् ।

भैरवतन्त्रे—

संहारमुद्रया देवि क्षमस्वेति विसर्जयेत् ॥ १७९ ॥
तन्नैवेद्यं शतांशं वा सहस्रांशं च भैरवि ।
दद्यादुच्छिष्टचाण्डाल्यै स्वाहेति मनुना ततः ॥ १८० ॥

अथवा—

निर्माल्येन यजेद् देवीमीशो निर्माल्यवासिनीम् ।
निर्माल्यं शिरसा धार्यं सर्वाङ्गे चानुलेपनम् ॥ १८१ ॥
नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ।
शताभिमन्त्रितं पुष्पं चन्दनं मूर्द्धनि भालतः ॥ १८२ ॥

धृत्वावश्यं नयेद् वश्यं त्रैलोक्यमपि दर्शनात् ।
यं यं स्पृशति पादेन यं यं पश्यति चक्षुषा ।। १८३ ।।

स एव दासतां याति यदि शत्रुसमो भवेत् ।
अनेन तिलकं कुर्यात् ।
सद्यः पर्युषितं वापि निर्माल्यं न प्रदुष्यति ।। १८४ ।।

ब्रह्मरन्ध्रे गुप्तस्थाने यन्त्रलेपं तु धारयेत् ।
उदके तरुमूले वा निर्माल्यं तस्य सन्त्यजेत् ।। १८५ ।।

रुद्रयामले—

पूर्वजन्मार्जितैः पुण्यैर्ज्ञात्वैनां परदेवताम् ।
यो भजेद् भक्तिमात्रेण तस्य श्रीसम्पदां पदम् ।। १८६ ।।

यत्पूजाराधनमात्रेण जीवन्मुक्तिः प्रजायते ।
इति वचनात् ।
देव्याः पूजा द्विधा प्रोक्ता स्थूलमभ्यन्तरं तथा ।। १८७ ।।

स्थूलं मन्त्रमयं पूजा स्थूलविग्रहचिन्तनम् ।
मानसैरुपचारैस्तु या पूजा साभ्यन्तरं प्रिये ।। १८८ ।।

कर्मयोगं विना देवि ज्ञानयोगं न सिध्यति ।
ज्ञानेन कर्मणा वापि सिद्धिर्भवति नान्यथा ।। १८९ ।।

**इति श्रीपरिव्राजकाचार्यपरमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां नित्यपूजानिर्णयो नाम सप्तमोल्लासः ।।**

## अथाष्टमोल्लासः

### ईश्वर उवाच

अथ वक्ष्ये महेशानि माला तु तन्त्रवर्त्मना ।
नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ॥ १ ॥

काम्यमपि करे कुर्यान्मालाभावे च सुन्दरि ।

अथ करमाला यामले—

अनामायास्त्रयंपर्व कनिष्ठायास्त्रिपर्विका ॥ २ ॥

मध्यमायास्त्रयंपर्व तर्जनीमूलपर्वणि ।
प्रादक्षिण्यक्रमेणैव जपेद् दशसु पर्वसु ॥ ३ ॥

शक्तिमाला समाख्याता सर्वमन्त्रप्रदीपिका ।
पर्वद्वयं तु तर्जन्या मेरुं तद्विद्धि पार्वति ॥ ४ ॥

तर्जन्यग्रे तथा मध्ये यो जपेत्तत्र मानवः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोबलम् ॥ ५ ॥

श्रीविद्यायाम्—

अनामामध्यमयोश्च मूलाग्रं च द्वयं द्वयम् ।
कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व महेश्वरि ॥ ६ ॥

अनामायामध्यमायाश्च मेरुःस्याद् द्वितयंस्मृतम् ।
प्रदक्षिणक्रमाद् देवि जपेत्त्रिपुरसुन्दरीम् ॥ ७ ॥

हृदये हस्तमारोप्य तीर्यक् कृत्वा कराङ्गुलीम् ।
आच्छाद्य वाससा हस्तो दक्षिणेन सदा जपेत् ॥ ८ ॥

अङ्गुलीं न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।
अङ्गुलीनां वियोगाच्च छिद्रे च श्रवते जपः ॥ ९ ॥

अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्वसन्धिषु यज्जप्तं तत् सर्वं निष्फलं भवेत् ॥ १० ॥

यामले मणिनियममाह—

अष्टोत्तरशतमणिभिर्निर्मिता या तु मालिका ।
राज्यं वितनुते नित्यं देहान्ते मोक्षदायिनी ॥ ११ ॥

पञ्चविंशतिभिर्मोक्षं त्रिंदद्भिर्धनसिद्धये ।
चतुर्दशमयी मोक्षदायिनी भोगवर्द्धिनी ॥ १२ ॥

सर्वेऽर्थाः सप्तविंशत्या पञ्चविंशत्याभिचारके ।
पञ्चाशद्भिः कार्यसिद्धिस्तथा च चतुरुत्तरैः ॥ १३ ॥

अष्टोत्तरशतैः सर्वसिद्धिरुक्ता मनीषिभिः ।
त्रिपुराया जपे शस्ता रुद्राक्षैः रक्तचन्दनैः ॥ १४ ॥

भैरवीविषये वाराहीतन्त्रे—

सुवर्णमणिभिर्माला स्फाटिकी शङ्खनिर्मिता ।
प्रवालैरेव वा कुर्यात् पुत्रजीवं विवर्जयेत् ॥ १५ ॥

श्मशानधुस्तूरैर्मालां कुर्याद् धूमावतीविधौ ।
रक्तेन चन्दनेनापि बालामालां प्रकल्पयेत् ॥ १६ ॥

दन्तेन कालिकायास्तु राजदन्तेन मेरुणा ।
उग्रताराजपे शस्तां महाशङ्खस्य मालिका ॥ १७ ॥

उन्मुख्याश्च तथा ज्ञेया मालिका सिद्धिदायिका ।
शाक्तानां स्फाटिकी माला रक्तचन्दनसम्भवा ॥ १८ ॥

रुद्राक्षमालिका नित्यं चतुर्वर्गफलप्रदा ।
निर्मितारुप्यमणिभिर्जपमालेप्सितप्रदा ॥ १९ ॥
हिरण्मयैरचितामाला सर्वान् कामान् प्रयच्छति ।
प्रवालैर्विहिता माला प्रयच्छेद् विपुलं धनम् ॥ २० ॥
सौभाग्यं स्फाटिकीमाला मौक्तिकैर्विहिता तथा ।
निर्मिता शङ्खमणिभिः कुरुते कीर्त्तिमव्ययाम् ॥ २१ ॥
सर्वैर्विरचिता माला सदा स्यान्मुक्तये नृणाम् ।
गोपनीयानिशं देवि जपमालेप्सितासये ॥ २२ ॥

मुण्डमालायाम्—

रुद्राक्षैर्वा यदि जपेन्दिद्राक्षैः स्फाटिकैस्तथा ।
नान्यन्मध्ये प्रकर्त्तव्यं पुत्रजीवादिकं च यत् ॥ २३ ॥
यद्यन्यत्तु प्रयुञ्जीत मालायां जपकर्मणि ।
तस्य कामं च मोक्षं च नो ददाति प्रियङ्करी ॥ २४ ॥

रुद्रयामले—

रुद्राक्षैः शक्तिमन्त्रं च मन्त्री यः प्रजपेत् प्रिये ।
स दुर्गतिमवाप्नोति निष्फलस्तस्य संजपः ॥ २५ ॥

विशेषमाह तत्रैव—

कालिकाच्छिन्नमस्ता च त्रिपुरा तारिणी तथा ।
एताः सर्वा न दृश्यन्ति जपाद्रुद्राक्षमालया ॥ २६ ॥

रुद्रयामले—

दिवा नैव च जप्तव्या रुद्राक्षमालया क्वचित् ।
पुरश्चर्यादृते चात्र दूषणं च वरानने ॥ २७ ॥
अरुद्राक्षधरो भूत्वा यद् यद् कर्म च वैदिकम् ।
करोति जपहोमादि तत् सर्वं निष्फलं भवेत् ॥ २८ ॥

फलमाह तन्त्रदेवप्रकाशिकायाम्—

पर्वादष्टगुणं विद्यात् पुत्रजीवैर्दशाधिकम् ।
शतं स्याच्छङ्खमालाभिः प्रवालैश्च सहस्रकम् ॥ २९ ॥
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ॥ ३० ॥
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत् ।
श्वेतपद्माक्षमालाभिर्जपे स्यादमितं फलम् ॥ ३१ ॥
समासेनाक्षमालायां विधानमिह कथ्यते ।
यथालाभं यथाबुद्धि अक्षाण्यादाय यत्नतः ॥ ३२ ॥
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि न जीर्णानि कदाचन ॥ ३३ ॥
गव्यैश्च पञ्चभिस्तानि प्रक्षाल्य च पृथक् पृथक् ।
द्विजस्त्रीनिर्मितं सूत्रं शुभ्रं ग्रन्थिविवर्जितम् ॥ ३४ ॥
कार्पासनिर्मितं वापि पट्टसूत्रेण वा पुनः ।
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितं भवेत् ॥ ३५ ॥
कार्पाससम्भवं सूत्रं धर्मकामार्थमोक्षदम् ।
त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः ॥ ३६ ॥
मूलास्त्रे च पठन् सूत्रं बीजं प्रक्षालयेत्ततः ।
मणिमेकैकमादाय सूत्रीं तत्र तु योजयेत् ॥ ३७ ॥
मुखे मुखं तु संयोज्य पुच्छे पुच्छं तु योजयेत् ।
तत्स्वजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ॥ ३८ ॥
एकैकमणिमादाय ब्रह्मग्रन्थिं प्रकल्पयेत् ।
ग्रन्थयेन्मालिकां चैव हृदि तारमनुं स्मरन् ॥ ३९ ॥

स्वयमेव जपेन्मन्त्रमन्यः प्रणवमुच्चरेत् ।
सार्द्धंद्वयावर्त्तनेन ग्रन्थिं कुर्यादथो दृढम् ।। ४० ।।
ब्रह्मग्रन्थि ततो दद्यान्नागपाशमथापि वा ।
गोपुच्छसदृशीं कुर्यादथ सर्पाकृतिर्भवेत् ।। ४१ ।।
ग्रन्थिहीनं न कर्त्तव्यं मेरुपृष्ठे न दुष्यति ।
दूषणं यत्र नास्त्येवं ग्रन्थिहीनैरनित्यशः ।। ४२ ।।
कालिकात्वरितयोश्च रुद्राक्षः षट्कभेदकः ।
तोडलावनवासिन्यां वाराह्याश्च विशेषतः ।। ४३ ।।
अन्यस्याश्चण्डिकादेव्या ग्रन्थिहीना विधीयते ।
एवं निर्माय मालां वै शोधयेन्मुनिसत्तमः ।। ४४ ।।
अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः ।
सर्वं तद्विफलं विन्द्यात् क्रुद्धा भवति चण्डिका ।। ४५ ।।
अथोच्यते प्रतिष्ठा हि मालायास्तन्त्रवर्त्मना ।
गुरुं ततः प्रणम्यादौ संस्कुर्याज्जपमालिकाम् ।। ४६ ।।
शुभे लग्ने शुभे वारे शुभर्क्षे च शुभे तिथौ ।
प्रतिष्ठां कारयेन्मत्री स्वयं वा गुरुणापि वा ।। ४७ ।।
नित्यं कर्म ततः कृत्वा सामान्यार्घ्यं विधाय च ।
पञ्चगव्ये क्षिपेन्मालां शिवमन्त्रेण मन्त्रिणा ।। ४८ ।।

शिवमन्त्रमाह यामले –

शान्तं शत्रुस्वारारूढं नादबिन्दुविभूषितम् ।
कथितं शिवमन्त्रं च साधकानां हिताय च ।। ४९ ।।

शत्रुस्वरः औकारः ।

शीतलेन जलेनैव स्नापयेत्तदनन्तरम् ।
क्षालयेत् पञ्चगव्येन सद्योजातेन मार्जयेत् ।। ५० ।।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।
भवे भवेऽनादिभवे भवोद्भवाय वै नमः ॥ ५१ ॥
क्षालयेदीशसूक्तेन लिम्पेत्तत्पुरुषेण तु ।
गन्धैरनल्पैर्मतिमानघोरेण तु धूपयेत् ॥ ५२ ॥
अघोरेण तु सूक्तेन शतान्न्यूनं तु मन्त्रयेत् ।
वामदेवेन मन्त्रेण समीकुर्याद्विचक्षणः ॥ ५३ ॥
अश्वत्थपत्रैर्नवकैः पद्माकारं प्रकल्पयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ॥ ५४ ॥
संस्कृत्यैनां बुधो मालां तत् प्राणांस्तत्र स्थापयेत् ।

तत्प्राणान् आराध्यदेवताप्राणान् ।

तत्र देवीं प्रपूज्यैव परिवारगणैः सह ॥ ५५ ॥
अनुलोमविलोमेन मातृकार्णेन मन्त्रयेत् ।
मेरुं प्रेतेन संमन्त्र्य भावयेद् देवतात्मिकाम् ॥ ५६ ॥

प्रेतेन प्रेतबीजेनेत्यर्थः । हेसौं इति बीजेन ।

वह्निं संस्कृत्य विधिवदष्टोत्तरशतं हुनेत् ।
हुतशेषं प्रतिहुतौ प्रदद्याद् देवताधिया ॥ ५७ ॥
होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
ताराक्षमालाधिपतये सुसिद्धिं देहि देहि मे ॥ ५८ ॥
सर्वमन्त्रार्थसाधिनीति साधय द्वितयं ततः ।
सर्वसिद्धिं परिकल्पय परिकल्पय मे स्वाहा ॥ ५९ ॥
इत्थं सुसंस्कृता माला जपकर्मणि सर्वदा ।
अभीष्टकं ददात्यर्थं सर्वकामफलप्रदम् ॥ ६० ॥
गुरुं संपूज्य तद्धस्ताद् गृह्णीयादक्षमालिकाम् ।
जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ॥ ६१ ॥

ऐँ ह्रीं अक्षमालिकायै हृन्मन्त्रेण प्रपूजयेत् ।
पूजयित्वा ततो मालां गृह्णीयाद् दक्षिणे करे ।। ६२ ।।

हृत्समीपे समानीय न तु वामेन संस्पृशेत् ।
मध्यमाया मध्यभागे स्थापयित्वा समाहितः ।। ६३ ।।

अङ्गुष्ठस्थामक्षमालां चालयेन्मध्यमाग्रतः ।
अङ्गुष्ठेन भवेत्तस्य निष्फलं तज्ज्पः सदा ।। ६४ ।।

अशुचिर्न स्पृशेन्मालां करभ्रष्टां न कारयेत् ।
तर्जन्या न स्पृशेदेनां गुरोरपि न दर्शयेत् ।। ६५ ।।

भुक्तौ मुक्तौ तथा पुष्टौ मध्यमायां जपेत् सुधीः ।
एकैकस्य जपस्यैव चालयेद् देशिकोत्तमः ।। ६६ ।।

जप्त्वाक्षमालां सकलां भ्रामयेदखिलान् मणीन् ।
प्रदक्षिणं पुनः कृत्वा प्रारभ्यैवं समाचरेत् ।। ६७ ।।

आदावेकं ततः सप्त सप्तसप्तक्रमेण तु ।
एवं क्रमेण देवेशि जपेदष्टोत्तरं शतम् ।। ६८ ।।

स्थूलावधि जपेन्मन्त्रं सूक्ष्मभागे समर्पयेत् ।
हस्तौ च वाससाच्छाद्य दक्षिणेन सदा जपेत् ।। ६९ ।।

एवं सूक्ष्मावधि-स्थूल्यन्तं जपः संहारः ।

न स्वयं वामहस्तेन जपमालां तु संस्पृशेत् ।
जपकाले जपं कृत्वा शुद्धस्थाने सदा न्यसेत् ।। ७० ।।

जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।
अदीक्षितद्विजेनापि स्पृष्टा चेत् शुद्धिमाचरेत् ।। ७१ ।।

न धारयेत् करे कण्ठे मूर्द्धि्न च जपामलिकाम् ।
उरुपादाधरस्पृष्टा चापसव्यप्रचालिता ।। ७२ ।।

अगुप्ता चालिता वापि पुनः संस्कारमर्हति ।
जपमाला मया देवि कथिता भुवि दुर्लभा ।
सदा गोप्या प्रयत्नेन यदि त्वं मम वल्लभा ॥ ७३ ॥

अथ वर्णमाला

माला पञ्चाशिका प्रोक्ता सूत्रं शक्तिशिवात्मकम् ।
कुण्डलीग्रथिता शक्तिः कलान्ते मेरुसंस्थितिः ॥ ७४ ॥

चित्रिणी विषतन्त्वाभा ब्रह्मनाडीगतान्तरा ।
तया संग्रथिता मध्ये साक्षाज्जाग्रत्स्वरूपिणी ॥ ७५ ॥

अन्तर्विभ्रमभासमानभुजगीं सुप्तोत्थवर्णोज्ज्लां ।
आरोहत्प्रतिरोहतः शतमयीं वर्गाष्टकेनोत्तराम्[१] ॥ ७६ ॥

अनुलोमविलोमेन मन्त्रवर्णविभेदतः ।
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितं मनुम् ॥ ७७ ॥

कुर्याद्वर्णमयीं मालां सर्वमन्त्रप्रकाशिनीम् ।
चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ॥ ७८ ॥

सबिन्दुं वर्णमुच्चार्य पश्चान्मन्त्रं जपेत् सुधीः ।
अष्टोत्तरशतं मन्त्रं ज्ञानेन संजपेत् सुधीः ॥ ७९ ॥

वर्गाणामष्टवर्णेन अष्टवारं जपेत् सुधीः ।
अकचटतपयशा इत्येवं चाष्टवर्गकम् ॥ ८० ॥

**इति श्रीपरिव्राजकाचार्य परमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां मालानिर्णयोनामाष्टमोल्लासः ॥**

---

१. श्लोकार्धोऽयम्मूले ।

## अथ नवमोल्लासः

### ईश्वर उवाच

जपविधानमहं वक्ष्ये शृणुष्व कमलानने ।
जपार्थं सर्वमन्त्राणां विन्यासं च लिपिं विना ॥ १ ॥
कृतं तन्निष्फलं विद्यात्तस्मादादौ न्यसेत् प्रिये ।
जपादौ च जपान्ते च प्राणायामं समाचरेत् ॥ २ ॥

विशुद्धेश्वरे—

जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिका ।
निजकर्णागोचरो यो मानसः स जपः स्मृतः ॥ ३ ॥
उपांशुर्निजकर्णस्य गोचरं परिकीर्त्तितः ।
निगदस्तु जनैर्वेद्यास्त्रिविधो जप ईरितः ॥ ४ ॥

अन्यत्रापि—

यदुच्चनीचोच्चरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद् व्यक्तं जपयज्ञः स वाचिकः ॥ ५ ॥
उच्चारयेन्मन्त्रमीषत् किञ्चिदोष्ठौ प्रचालयन् ।
किञ्चिच्छब्दमयं ब्रूयादुपांशुः स जपः स्मृतः ॥ ६ ॥
धिया यदक्षरश्रेण्या वर्णाद् वर्णं पदात् परम् ।
शब्दानुचिन्तनाभ्यासः स उक्तो मानसो जपः ॥ ७ ॥
उच्चैर्जपाद् विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
तस्मादपि विशिष्टः स्यात् सहस्रं मानसो जपः ॥ ८ ॥
देवतां चित्तगां कुर्यात् कुर्याच्च हृदयं स्थिरम् ।
ओष्ठौ तु सम्पुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ॥ ९ ॥

ध्यायेच्च मनसा वर्णान् जिह्वोष्ठौ न विचालयेत् ।
न कम्पेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत् ॥ १० ॥
मन्त्रोद्धारक्रमेणैव मन्त्रं जपति साधकः ।
तदा सिद्धिं विजानीत न सिद्धिश्चान्यथा भवेत् ॥ ११ ॥

मन्त्रोद्धारक्रमेणैव मन्त्रघटकीभूतस्वरव्यञ्जनवर्णज्ञानक्रमेणेत्यर्थः । एवकारोऽवधारणार्थः ।

आदौ ध्यानं ततो मन्त्रं ध्यानस्यान्ते मनुं जपेत् ।
ध्यानमन्त्रसमायुक्तः शीघ्रं सिध्यति साधकः ॥ १२ ॥

कुलार्णवे—

मनसा पठितं स्तोत्रं वाचा वापि मनुं जपेत् ।
उभयोर्निष्फलं देवि भिन्नभाण्डोदकं यथा ॥ १३ ॥

भूतशुद्धौ—

यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता ।
चिन्तयित्वा तदाकारं मनसा जपमाचरेत् ॥ १४ ॥
शनैः शनैरविस्पृष्टं न द्रुतं न विलम्बितम् ।
क्रमेणोच्चारयेद् वर्णानाद्यन्तक्रमयोगतः ॥ १५ ॥
अतिह्रस्वो व्याधिहेतुरतिदीर्घो वसुक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥ १६ ॥

कुलार्णवे—

तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।
तत्पदार्थानुसन्धानं कुर्वन्मन्त्रं जपेत् प्रिये ॥ १७ ॥

रुद्रयामले—

कथं मन्त्राश्च सिध्यन्ति मन्त्रार्थाज्ञानिनः प्रिये ।

तन्त्रे यथा—

पशुभावविहीनस्य न तस्य भजते फलम् ॥ १८ ॥

तथार्थानभिज्ञो देवि न जपस्य फलमश्नुते । तस्मान्मन्त्रार्थमन्त्रदेवतयोरभेदज्ञानमावश्यकम् । तथा चोक्तं यामले—

मन्त्रार्थं देवतारूपं चिन्तनं परमेश्वरि ।
वाच्यवाचकभावेन अभेदो मन्त्रदेवयोः ॥ १९ ॥

वाच्या हि देवता देवमन्त्रो हि वाचकः स्मृतः ।
वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति ॥ २० ॥

प्रकान्तरमाह भूतशुद्धौ—

मन्त्रार्थं परमेशानि सावधानावधारय ।
आधारे चिन्तयेद् विद्यां गुरुस्फटिकसन्निभाम् ॥ २१ ॥

बन्धूकरुचिरां लिङ्गे नाभौ स्फटिकसन्निभाम् ।
हृदि मारकतश्यामां हरिद्वर्णां विशुद्धके ॥ २२ ॥

आज्ञायां चिन्तयेद् विद्यां चतुर्वर्णानुरञ्जिताम् ।
षट्चक्रे परमेशानि ध्यानात् साधकसत्तमः ॥ २३ ॥

रुद्रयामले—

मन्त्रं नीत्वा गुरोः पार्श्वे गुरुभक्तिपुरःसरः ।
मन्त्रस्य श्रोत्रास्यनेत्रप्राणान् विज्ञाय यत्नतः ॥ २४ ॥

मन्त्राणां कीलकं ज्ञात्वा कुर्यान्मन्त्रपुरष्क्रियाम् ॥ २५ ॥

न चैतद्वचनं पुरश्चरणविषय एवेति बोद्धव्यम्, श्रोत्रादीनां ज्ञानाभावे मन्त्रजापमात्रनिषेधात् । तथा मन्त्रकोषे—

श्रोत्रादीनां ज्ञानाभावे मन्त्रजापं करोति यः ।
दारिद्र्यं च विपत्तिं च नरकं प्राप्नुयात्तु सः ॥ २६ ॥

अन्यत्रापि—

हृन्नेत्रविहीनो मन्त्रो दारिद्र्यः क्लेशदायकः ॥ २७ ॥

तन्त्रान्तरे—

श्रोत्रास्यहृदयं नेत्रज्ञानान्मोक्षमवाप्नुयात् ।
सद्यः सिद्धिः सर्वविधा स्यात् साक्षाच्छिव एव स ॥ २८ ॥

भूतडामरे इन्द्रियमनोविशुद्धिमनोस्तदास्यादिकं वक्ष्ये—

श्रृणु देवि प्रवक्ष्यामि कालीमन्त्रमनुक्रमात् ।
बिन्दुः श्रोत्रं नाद आस्यं ककारं हृदयं विदुः ॥ २९ ॥

वह्निर्नेत्रं कीलकं च दीर्घीकारं प्रियंवदे ।
तकारं तारिणीमन्त्रे हृदयं विद्धि पार्वति ॥ ३० ॥

हकारं विद्धि सर्वत्र शक्तिपक्षे सुरेश्वरि ।

उत्तरकल्पे—

प्राणविद्या महाविद्या सा विद्या मुक्तिदायिका ॥ ३१ ॥

श्यामाया द्वाविंशत्यक्षरीविद्यायां विशेषमाह उत्तरतन्त्रे—

क्रींकारो मस्तकं देवि क्रींकारश्च ललाटकम् ।
नेत्रत्रयं क्रींकारेण हुंकारेण च नासिका ॥ ३२ ॥

हुंकारो मुखपद्मं स्याद् द्रींकारः कर्णयुग्मकम् ।
द्रींकारेण भवेद् ग्रीवा दकारश्चिबुकं भवेत् ॥ ३३ ॥

क्षिकारेण भवेद् दन्तो णेकारेणौष्ठयुग्मकम् ।
काकारेण स्तनद्वन्द्वं लिकारः पृष्ठदेशकः ॥ ३४ ॥

केकारेण भवेद् बाहुः क्रींकारेणोदरो भवेत् ।
क्रींकारो नाभिदेशः स्यात् क्रींकारश्च नितम्बकः ॥ ३५ ॥

हूंकारो योनिरूपः स्याद् हुंकारेणोरुयुग्मकम् ।
द्रींकारो जानुयुग्मं स्याद् द्रींकारो गुल्फदेशकः ॥ ३६ ॥

स्वाशब्देन पदद्वन्द्वं हाकारेण नखं तथा ।

तारविद्यायां यामले—

वाग्देव्याः समुदायः स्यादाहृतिः प्रणवो मुखम् ।। ३७ ।।

माया अधः स्थितो बिन्दु लोचने समुदाहृतौ ।
हसकारौ श्रुती दीर्घस्वरौ हृदयरूपिणौ ।। ३८ ।।

फट्कारौ योन्युदरौ अकारेण स्तनद्वयम् ।
रेफयुग्मपदद्वन्द्वं तकारं भाललोचनम् ।। ३९।।

भुजवेदस्वरूपं च नादयुग्ममुदाहृतम् ।
कूर्चप्राणा एकजटायाः शरीरं सर्वमिष्यते ।।
कूर्चं मुखं तु विज्ञेयमन्यमन्त्रेषु पार्वति ।। ४० ।।

महोग्रायाः प्रणवं मुखमन्यमन्त्रेषु प्रणवरहितमन्त्रेषु एकजटायाः कूर्चं मुखम् । तेन तत्तन्मन्त्रघटकीभूततत्तद्वर्णोत्पन्नमुखनासौष्ठदन्तावलीहस्तपाद-योन्याद्यवयवावच्छिन्नशरीरं ज्ञानविषयीकृत्य जपेदित्यर्थः ।

कामधेनुतन्त्रे—

अथान्यत् संप्रवक्ष्यामि कामिनीतत्त्वमद्भुतम् ।
शृणु तत्त्वं महेशानि ककारस्यातिदुर्लभम् ।। ४१ ।।

रहस्यं परमाश्चर्यं त्रिकोणानां संशृणु ।
वामरेखा भवेद् ब्रह्मा विष्णुर्दक्षिणरेखिका ।। ४२ ।।

अधोरेखा भवेद्रुद्रो मात्रा साक्षात् सरस्वती ।
अङ्कुशा कुण्डली यातु कोटिविद्युल्लताकृतिः ।। ४३ ।।

कुण्डली अङ्कुशाकारा मध्यशून्यं सदाशिवः ।
जवायावकसङ्काशा वामरेखा वरानने ।। ४४ ।।

शरच्चंद्रप्रतीकाशा दक्षरेखा च मूर्तिमान् ।

तन्त्रान्तरे—

अधोरेखा भवेद्रुद्रो महामकरतद्युतिः ॥ ४५ ॥

शङ्खदुग्धसमाभासा मात्रा साक्षात् सरस्वती ।
अङ्कुशा कुण्डली यातु कोटिविद्युल्लताकृतिः ॥ ४६ ॥

कोटिचंद्रप्रतीकाशं मध्यशून्यं सदाशिवः ।
अङ्कुशा कुण्डली यातु पराशक्तिश्च मूर्त्तिमान् ॥ ४७ ॥
शून्येषु परमेशानि सर्वव्यापी सदाशिवः ।
ईश्वरो यस्तु देवेशि कला चतुष्टयात्मकः ॥ ४८ ॥
इच्छाशक्तिर्भवेद् ब्रह्मा विष्णुस्तु ज्ञानशक्तिमान् ।
क्रियाशक्तिर्भवेद्रुद्रः सर्वप्रकृतिर्मूर्त्तिमान् ॥ ४९ ॥
आत्मविद्याशिवैस्तत्त्वैः सदाशिव प्रतिष्ठिता(तः)।
शून्येषु संस्थिता काली कैवल्यपददायिनी ॥ ५० ॥
मर्दिनी संस्थिता तस्य दक्षभागे च मूर्त्तिमान् ।
वामभागे स्थिता लक्ष्मीश्चतुर्वर्गप्रदायिनी ॥ ५१ ॥

तासां गर्भे स्थिता सा च सुन्दरी परदेवता ।
त्रयाणां गर्भसम्भूता त्रिपुरा अत एव हि ॥ ५२ ॥
परमात्मस्वरूपत्वात्तासां गर्भे प्रतिष्ठिता ।
अन्याश्च भेदवत् सर्वाः कालिकाद्याश्च पार्वति ॥ ५३ ॥

अत्र स्थित्वा सृजेद् ब्रह्मा विष्णुः पालनतत्परः ।
रुद्रः संहारकर्त्ता च ईश्वरस्तु सदाशिवः ॥ ५४ ॥

ईश्वरो यस्तु देवेशि त्रिकोणे तस्य संस्थितिः ।
त्रिकोणमेतत् कथितं योनिमण्डलमुत्तमम् ॥ ५५ ॥

ककाराज्जायते देवि सर्वैश्च वरवर्णिनि ।
ककारात् सर्वमुत्पन्नं कामं कैवल्यमेव च ॥ ५६ ॥

अर्थवज्जायते देवि तथा धर्मबलाद् यथा ।
सर्वासां देवतानां च ककारं मूलमेव च ॥ ५७ ॥

आसनं त्रिपुरादेव्याः ककारं पञ्चदैवतम् ।
ककारात् काम सा कामरूपिणी स्फुरदव्यया ॥ ५८ ॥

माता सा सर्वदेवानां कैवल्यपददायिनी(म्?) ।
कैवल्यं प्रपदे यस्याः कामिनी सा प्रकीर्त्तिता ॥ ५९ ॥

जवाद्यावकसिन्दूरसदृशीं कामिनीं पराम् ।
चतुर्भुजां त्रिनेत्रां च बाहुबल्लीविराजिताम् ॥ ६० ॥

कदम्बकोरकाकारस्तनद्वयविभूषिताम् ।
शङ्खकनककेयूरैरङ्गदैरुपशोभिताम् ॥ ६१ ॥

रत्नहारैः पुष्पहारैः शोभितां परमेश्वरीम् ।
एवं हि कामिनीं ध्यात्वा ककारं दशधा जपेत् ॥ ६२ ॥

प्रफुल्लं च ततो जप्त्वा जपस्य फलभाग् भवेत् ।
एतत्ते कथितं देवि ! ककारतत्त्वमद्भुतम् ॥ ६३ ॥

एतत्तु कालिकाबीजं प्रफुल्लं शृणु सुन्दरि ।
पृथ्वीबीजं ततो धृत्वा वामाक्षिसंयुतं कुरु ॥ ६४ ॥

बिन्द्वर्द्धसंयुतो भूत्वा प्रफुल्लं भवति प्रिये ।
लकारः पृथिवी साक्षात् सर्वरत्नप्रदायिनी ॥ ६५ ॥

पीताङ्गीं पीतवसनां पीतविद्युल्लताकृतिम् ॥
सुखप्रसन्नवदनां रत्नकुण्डलमण्डिताम् ॥ ६६ ॥

एवं हि संस्मरेद् बीजं तदूर्ध्वे कामिनीं पराम् ।
ककारसंयुतं कृत्वा प्रफुल्लं भावयेत् प्रिये ॥ ६७ ॥

मर्दिनी या महेशानि ! सा वामा परमेश्वरि ! ।
प्रतप्तकाञ्चनाभासां दशबाहुसमन्विताम् ॥ ६८ ॥

त्रिभङ्गललिताकारां जटाजूटविभूषिताम् ।
त्रिलोचनां चन्द्ररेखां महिषासुरमर्दिनीम् ॥ ६९ ॥

सिंहासनगतां देवीं भावयेद् वैष्णवोत्तमः ।
बहुरूपमयीं देवीं ककारं(रां) कामिनीं पराम् ॥ ७० ॥

शुक्लवर्णां रक्तवर्णां(पीतवर्णां)पीतचम्पकहासिनीम् ।
हरिद्वर्णां कृष्णवर्णां नानाचित्रस्वरूपिणीम् ॥७१॥

उत्पत्तेः कारणं भूमेर्देवानां चैव पार्वति ।
बीजमेतन्महागुह्यं विष्णोर्जन्मस्थलं सदा ॥ ७२ ॥

तदूर्ध्वे नादतत्त्वं च योनिरूपां सनातनीम् ।
प्रतप्तकाञ्चनाभासां त्रिकोणां शशिशेखराम् ॥ ७३ ॥

शृङ्गाररससन्दोहैः पूरितां परमेश्वरीम् ।
तदूर्ध्वे भावयेद् बिन्दुं शिवशक्तिमयं सदा ॥ ७४ ॥

शून्यरूपः शिवः साक्षाद् बिन्दुः परमकुण्डली ।
शून्यभागः कलायुक्तो बिन्दुश्च मोक्षदोऽव्ययः ॥ ७५ ॥

सार्द्धत्रिवलयाकारा कोटिविद्युत्समप्रभा ।
सर्पाकारा शिवं वेष्ट्य तत्रैव संस्थिता सदा ॥ ७६ ॥

एवं हि संस्मरेद् भक्त्या बीजशक्तिसमाश्रिताम् ।
बीजात् तु जायते ब्रह्मा ज्ञानात्मा परमेश्वरः ॥ ७७ ॥

८

शब्दब्रह्ममयो भूत्वा ईश्वरः कार्यंकारणम् ।
कृष्णस्य चञ्चलापाङ्गि ! माता सा कामिनी परा ।। ७८ ।।

बीजाच्चैवाङ्कुरे जाते बीजं निष्फलतां व्रजेत् ।
एतद् बीजं वरारोहे ! सदा सारमयं विभु ।। ७९ ।।

लकारसंयुतं भूत्वा प्रसूते हरिमव्ययम् ।
स्वयं शक्तिर्हरिर्भूत्वा जायते नात्र संशयः ।। ८० ।।

कारकसंयुता भूत्वा शक्तिराविरभूत् स्वयम् ।
जन्मकर्माणि सर्वाणि प्रकृतेरस्ति भामिनि ।। ८१ ।।

जपे ध्याने च पूजायां प्रकृतिः सुप्रतिष्ठिता ।
ककारस्थोर्ध्वकोणे तु प्राणो वायुः प्रतिष्ठितः ।। ८२ ।।

अपानो वामकोणे च संस्थितश्च सदा प्रिये ।
समानो दक्षिणे कोणे शुद्धस्फटिकसन्निभः ।। ८३ ।।

उदानस्त्वङ्कुशाकारे मात्रायां व्यान एव च ।
एतत् ते कथितं देवि ! ककारतत्त्वमद्भुतम् ।। ८४ ।।

नवतत्त्वं ककारस्य ज्ञात्वा यः कुरुते जपम् ।
स जपश्चञ्चलापाङ्गि ! जप एव न संशयः ।। ८५ ।।

एतत् तत्त्वमविज्ञाय प्रजपेद् यदि कोटिधा ।
न तज्जप्तं वरारोहे ! सदा त्वावर्त्तनं भवेत् ।। ८६ ।।

## नवतत्त्वनिरूपणम्

देवतत्त्वं प्राणतत्त्वं बिन्दुतत्त्वं च सुन्दरि ।
ज्ञानतत्त्वं शक्तितत्त्वं योनितत्त्वं तथैव च ।। ८७ ।।

नवतत्वमिदं प्रोक्तं कामधेनुमतं प्रिये ।
कीलितो नहि देवो हि विद्या मन्त्रश्च सर्वथा ।। ८८ ।।

न शप्तः परमेशानि ! न विद्धो वरवर्णिनि ।
सर्वेषां जङ्गमादीनां स्थावराणां तु योगिनि ! ॥ ८९ ॥
देवता मातृका माया सृष्टिस्थित्यन्तकारिणी ।
एकाक्षरविहीनत्वाद् ब्रह्महत्या वरानने ॥ ९० ॥
कस्य स्याद् वशगा देवी हृदये भावयेत् प्रिये ।
भावनादक्षरश्रेण्याः साक्षात् ब्रह्म न संशयः ॥ ९१ ॥
अक्षरे दूषणं नास्ति शप्तादि कमलानने ।
दूषणं यत् कृतं देवि ! हृदिस्थं भावयेत् प्रिये ॥ ९२ ॥
रक्षणार्थं सुराणां च ह्यात्मनो गोपनाय च ।
मानवाः परमेशानि ! वराकाः क्षुद्रबुद्धयः ॥ ९३ ॥
मानवस्य च रक्षार्थं रक्षार्थं पन्नगस्य च ।
मयैव निर्मितौ देवि ! विद्यामन्त्रौ पुरैव हि ॥ ९४ ॥
अत एव महेशानि ! ह्यसुराः क्षयमागताः ।
तस्मात् सर्वंप्रयत्नेन जपं कुरु वरानने ॥ ९५ ॥

## मन्त्रार्थनिरूपणम्

यामले—

देवतायाः शरीरं तु बीजादुत्पद्यते ध्रुवम् ॥ ९६ ॥

भूतशुद्धौ—

ध्यानेन परमेशानि ! यद्रूपं समुपस्थितम् ।
तदेव परमेशानि ! मन्त्रार्थं विद्धि पार्वति ॥ ९७ ॥

मन्त्रस्थानमाह तन्त्रे—

स्थानस्था वरदा मन्त्रा ध्यानस्थाश्च फलप्रदाः ।
ध्यानस्थानविनिर्मुक्ताः सुसिद्धा अपि वैरिणः ॥ ९८ ॥

### मन्त्रस्थानम्

मन्त्रस्थानं प्रवक्ष्यामि शृणु देवि वरानने ।
सकलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम् ॥ ९९ ॥

कलाभिन्नं कलातीतं षोढामन्त्रं शिवोऽब्रवीत् ।
सकलं ब्रह्मरन्ध्रस्थं तदधो विद्धि निष्कलम् ॥ १०० ॥

मानसः सूक्ष्ममाख्यातो हृत्स्थः सकलनिष्कलः ।
बिन्दुस्थितः कलाभिन्नः कलातीतस्तदूर्ध्वतः ॥ १०१ ॥

कला कुण्डलिनी चैव नादः शक्तिः शिवोदिता ।
षट्कस्थानस्थितामन्त्राःस्थानस्थाःपरिकीर्त्तिताः॥ १०२ ॥

ध्यानन्तु स्वरव्यञ्जनभेदेन मन्त्रघटकीभूतवर्णचिन्तनमेवेत्यर्थः ।

भूतशुद्धौ—

चैतन्यरहितं मन्त्रं यो जपेत् स च पापकृत् ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ १०३ ॥

### मन्त्रचैतन्यादिनिरूपणम्

चैतन्यं सर्वमन्त्राणां शृणुष्व कमलानने ।
सहस्रारं शिवपुरं कल्पवृक्षं मनोहरम् ॥ १०४ ॥

चतुर्वेदचतुःशाखं नित्यं पुष्पफलान्वितम् ।
पीतं रक्तं तथा श्वेतं कृष्णं च हरितं तथा ॥ १०५ ॥

भ्रमरैः कोकिलैर्देवि ! बहुपुष्पोपशोभितम् ।
एवं कल्पद्रुमं ध्यात्वा तदधो रत्नवेदिकाम् ॥ १०६ ॥

तत्रोपरि महेशानि ! पर्यङ्कं सुमनोहरम् ।
नानापुष्पसंयुतया रचितं हेममालया ॥ १०७ ॥

तत्रोपरि महादेवं महाकुण्डलिनीयुतम् ।
एवं ध्यात्वा जपेन्मन्त्रं महादेवि ! त्रिवर्गदम् ॥ १०८ ॥

आनन्दाश्रूणि पुलको देहावेशः सुरेश्वरि ।
गद्गदोक्तिश्च सहसा जायते नात्र संशयः ॥ १०९ ॥

सकृदुच्चरितेऽप्येवं मन्त्रे चैतन्यसंयुते ।
शते सहस्रे लक्षे वा कोटिजापेन तत्फलम् ॥ ११० ॥

इत्येतत् कथितं देवि ! मन्त्रचैतन्यमुत्तमम् ।
विष्णुमन्त्रे तथा शैवे शक्तिमन्त्रे सुरेश्वरि ॥
मन्त्रार्थं मन्त्रचैतन्यं यत्नतः समुपाचरेत् ॥ १११ ॥

### योनिमुद्रा

योनिमुद्रामाह मन्त्रमुक्तावल्याम्—

उपविश्यासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ।
षट्चक्रं चिन्तयेद् देवि ! प्राणायामपुरःसरम् ॥ ११२ ॥

चतुर्दलं स्यादाधारं स्वाधिष्ठानं तु षड्दलम् ।
नाभौ दशदलं पद्मं सूर्यसंख्यादलं हृदि ॥ ११३ ॥

कण्ठे स्यात् षोडशदलं भ्रूमध्ये द्विदलं तथा ।
सहस्रदलमाख्यातं ब्रह्मरन्ध्रे महापथे ॥ ११४ ॥

आधारे कन्दमध्यस्थं त्रिकोणमतिसुन्दरम् ।
त्रिकोणमध्ये देवेशि ! कामबीजं सुलक्षणम् ॥ ११५ ॥

कामबीजोद्भवं तत्र स्वयम्भुलिङ्गमुत्तमम् ।
तस्योपरि पुनर्ध्यायेत् चित्कलां हंसमाश्रिताम् ॥ ११६ ॥

ध्यायेत् कुण्डलिनीं देवीं स्वयम्भुलिङ्गवेष्टिताम् ।
चित्कलां तां कुण्डलितां तेजोरूपां जगन्मयीम् ॥ ११७ ॥

आधारादीनि पद्मानि भित्त्वा तेजःस्वरूपिणीम् ।
हंसेन मनुना देवीं ब्रह्मरन्ध्रं नयेत् सुधीः ।। ११८ ।।
सदाशिवेन देवी सा क्षणमात्रं रमेत् प्रिये ।
अमृतं जायते देवि ! तत्क्षणात् परमेश्वरि ।। ११९ ।।
तदुद्भवामृतं देवि ! लाक्षारससमोपमम् ।
तेनामृतेन देवेशि ! तर्पयेत् परदेवताम् ।। १२० ।।
षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ।
आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ।। १२१ ।।
ततस्तु परमेशानि ! अक्षमालां विचिन्तयेत् ।
चित्रिणी विसतन्त्वाभा ब्रह्मनाडीगतान्तरा ।। १२२ ।।
तया संग्रथिता मध्ये साक्षाज्जाग्रत्स्वरूपिणी ।
अनुलोमविलोमेन मन्त्रवर्णविभेदतः ।। १२३ ।।
मन्त्रेणाऽन्तरितान् वर्णान् वर्णेनाऽन्तरितं मनुम् ।
कुर्याद् वर्णमयीं मालां सर्वमन्त्रप्रकाशिनीम् ।। १२४ ।।
चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ।
सबिन्दुवर्णमुच्चार्य पश्चान्मन्त्रं जपेत् सुधीः ।। १२५ ।।
अकरादिलकारान्तमनुलोम इति स्मृतम् ।
पुनर्लकारमारभ्य श्रीकण्ठान्तं मनुं जपेत् ।। १२६ ।।
विलोम इति विख्यातं क्षकारं केवलं जपेत् ।
वर्गाणामष्टवर्णेन त्वष्टवारं जपेत् सुधीः ।। १२७ ।।
अ-क-च-ट-त प-य-शा इत्येवं याष्टवर्गकाः ।
अष्टोत्तरशतं मूलमन्त्रं चानेन संजपेत् ।। १२८ ।।

योनिमुद्रा महेशानि ! तव स्नेहात् प्रकाशिता ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनाऽपि तस्य सिद्धिर्न जायते ।। १२९ ।।

मन्त्रशिखानिरूपणम् ।

मन्त्रशिखामाह यामले—

शृणु देवि ! प्रवक्ष्यामि सर्वज्ञानोत्तमोत्तमम् ।
यस्य विज्ञानमात्रेण क्षिप्रं विद्या प्रसीदति ।। १३० ।।

मूलकन्दे तु या देवी भुजगाकाररूपिणी ।
तद्भ्रमावर्त्तवातो यः प्राण इत्युच्यते बुधैः ।। १३१ ।।

झिल्लीवाऽव्यक्तमधुरा कूजन्ती सततोत्थिता ।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती स्वकेतनम् ।। १३२ ।।

यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।
तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदीपिका ।। १३३ ।।

तमः पूर्णे गृहे यद्वन्न किञ्चित् प्रतिभासते ।
शिखाहीनास्तथा मन्त्रा न सिध्यन्ति कदाचन ।। १३४ ।।

शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ।
विना येन न सिद्धिः स्याद् वर्षकोटिशतैरपि ।।
तस्मात् त्वयापि गिरिजे ! गोपनीयः प्रयत्नतः ।। १३५ ।।

अशौचभङ्गः

रुद्रयामले—

जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सूतकद्वयसंयुक्तो न मन्त्रः सिद्धिदायकः ।। १३६ ।।

जपादौ जातसूतकं जपान्ते च मृतसूतकमिति सूतकद्वयमित्यर्थः ।

यामले—

ब्रह्मबीजं मनोर्दत्त्वा चाद्यन्ते परमेश्वरि ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ॥ १३७ ॥

सूतकद्वयमुक्तये मनोराद्यन्ते ब्रह्मबीजं प्रणवं दत्त्वा जपादौ सप्तवारं जपान्ते च सप्तवारं तं मनुं जपेदित्यर्थः ।

सूतकद्वयमुक्तो यः स मन्त्रः सर्वसिद्धिदः ।
चतुर्दशः स्वरो देवि ! पुण्यः सिद्धिप्रदायकः ।
नादबिन्दुसमोपेतो दीर्घप्रणव उच्यते ॥ १३८ ॥

### स्त्रीशूद्राणामशौचभङ्गः

तन्त्रोक्तः प्रणवः सोऽपि स्त्रीशूद्राणां प्रशस्यते ।
तस्मात् स्त्रीणां च शूद्राणां स एव परिकीर्त्तितः ॥ १३९ ॥

भूतशुद्धौ—

तन्त्रोक्तं प्रणवं देवि ! वह्निजायां सुरेश्वरि ।
प्रजपेत् सततं शूद्रो नात्र कार्या विचारणा ॥ १४० ॥

तेन प्रणवपुटितमन्त्रजपस्थले स्त्री शूद्रश्च औंकारपुटितं कृत्वैव मन्त्रं जपेत् । तन्त्रोक्ता वह्निजाया तु हृदयमेव (नमः) स्वाहास्थाने च नमःपदं प्रयोज्य न्यासजपादिकं कुर्यादिति ज्ञेयम् ।

### गणनाविधिः

गणनाविधिमाह यामले—

गणनाविधिमुल्लङ्घ्य यो जपेत् तज्जपं यतः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः ॥ १४१ ॥
नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यां तु कारयेत् ॥ १४२ ॥
लाक्षाकुशीदसिन्दूरं गोमयं च करीषकम् ।
विलोड्य गुटिकां कृत्वा जपसंख्यां तु कारयेत् ॥ १४३ ॥

इति श्रीपरिव्राजकाचार्य परमहंसतीर्थावधूत श्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां जपलक्षणादिनिर्णयोनाम नवमोल्लासः ॥

## अथ दशमोल्लासः

### ईश्वर उवाच

### महासेतुनिरूपणम्

अथ महासेत्वादीनां प्रयोजनमाह—

महासेतुं विना देवि ! यो जपेत् स तु पापभाक् ।
आदौ जप्त्वा महासेतुं ततः सेतुं ततो मनुम् ॥
एवं क्रमैर्वरारोहे ! यथेष्टं जपमाचरेत् ॥ १ ॥

सेतुमङ्गलतन्त्रे—

यो जपेत् परमेशानि ! विना सेतुं महामनुम् ।
तस्य सर्वार्थहानिः स्याद् मृते च नरकं व्रजेत् ॥ २ ॥

### महासेतुः

महासेतुमाह यामले—

महासेतुश्च देवेशि ! सुन्दर्या भुवनेश्वरी ।
कालिकायाः स्वबीजं तु ताराद्या कूर्चं उच्यते ॥
अन्येषां तु वधूबीजं महासेतुर्वरानने ॥ ३ ॥

वधूबीजमाह रुद्रयामले—

आकाशाद्यं चतुर्थाद्यं यकारान्तं च संहतम् ।
लक्ष्मीबिन्दुयुतं देवि ! वधूबीजमुदाहृतम् ॥ ४ ॥

आकाशाद्यं सकारः, चतुर्थाद्यं तकारः, यकारान्तं रेफः । संहतं एतत् त्रितयसंयुक्तम् । लक्ष्मीः ईकारः, बिन्दुरनुस्वारः, ताभ्यां युतम् । एतेन स्त्रीमिति सेतुनिरूपणम् ।

महासेतुं विना देवि ! न जप्तव्यं कदाचन ।
शतकोटिजपेनाऽपि तस्य सिद्धिर्न जायते ॥ ५ ॥

सेतुमन्त्रं महेशानि ! सर्वेषां कुल्लुकां शृणु ।
सेतुविद्या महेशानि ! साक्षाद् ब्रह्मस्वरूपिणी ॥ ६ ॥

अदावन्ते च देवेशि ! जपेत् तां तु जपोन्मनाः ।
ततः सिद्धो भवेद् देवि मन्त्रो विद्या विशेषतः ॥ ७ ॥

अन्यथा विफलं देवि निश्चयं वचनं मम ।
पार्श्वयोः सेतुमाधाय जपकर्म समाचरेत् ॥ ८ ॥

निःसेतुसलिलं यद्वत् क्षणान्निम्नं प्रसर्पति ।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् ॥ ९ ॥

आदावन्ते चेति । मन्त्रोर्जपात् आदौ तदन्ते च सेतुविद्यां जपेदित्यर्थः ।

## सामान्यसेतुनिरूपणम्

सामान्यसेतुमाह—

विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।
वैश्यानां तु फडर्णः स्यान्माया शूद्रस्य कथ्यते ॥ १० ॥

## विशेषसेतुनिरूपणम्

वशेषसेतुमाह यामले—

शृणु देवि ! प्रवक्ष्यामि सुन्दर्याः सेतुमुत्तमम् ।
मायाबीजं समुद्धृत्य सौभाग्यं च ततः परम् ॥ ११ ॥

पुनर्मायां समुद्धृत्य विधेयं त्र्यक्षरी परा ।
सुन्दरी विषये सेतुः कथितः परमेश्वरि ॥ १२ ॥

सौ स्वरूपम् । भाग्यं विसर्गः । मन्त्रो यथा ह्रीं सौः ह्रीं इति ।

अथ वक्ष्ये महेशानि भैरव्याः सेतुमुत्तमम् ।
हरप्रियां समुद्धृत्य सुरसां च ततः परम् ॥ १३ ॥

औदर्यसंयुतं कृत्वा बिन्द्वर्धं संयुतं कुरु।
इयं विद्या वरारोहे ! भैरव्याः सेतुरूपिणी ॥ १४ ॥

मन्त्रो यथा हस इति।

प्रणवं पूर्वमुद्धृत्य हृल्लेखां तदनन्तरम्।
एषा च द्वयक्षरी विद्या ताराया सेतुरुच्यते ॥ १५ ॥

मन्त्रो यथा—ॐ ह्रीं इति।

श्यामाया—

ऐश्वर्यबीजमुद्धृत्य कूर्चबीजं समुद्धरेत्।
पुनरैश्वर्यमुद्धृत्य बिन्द्वर्धं संयुतं कुरु ॥ १६ ॥
सेतुरेषा महेशानि ! श्यामायाः परिकीर्त्तिता।

मन्त्रो यथा—ऐं हूं ऐं इति।

भुवनेश्या—

प्रणवं प्रथमं देवि ! हृल्लेखा द्वितयं ततः ॥ १७ ॥
ततश्च परमेशानि ! प्रणवद्वयमुद्धरेत्।
भुवनेश्याः महेशानि ! विधेयं सेतुरुच्यते ॥ १८ ॥

मन्त्रो यथा—ॐ ह्रीं ह्रीं ओं ओं इति।

अन्नदायाः—

अथ वक्ष्ये महेशानि ! चान्नदासेतुमुत्तमम्।
आदौ मायां समुच्चार्य वह्निजायां समुद्धरेत् ॥ १९ ॥

मन्त्रो यथा—ह्रीं स्वाहा इति।

महिषमर्दिन्याः—

अथ वक्ष्ये महेशानि ! मर्दिन्याः सेतुमुत्तमम्।
हंस(वर्णं)रूपं समुद्धृत्य रञ्जिन्युपरि संस्थितम् ॥ २० ॥

ईतिवर्णयुतं कृत्वा बिन्द्वर्द्धसंयुतं कुरु।
ततश्च परमेशानि! बह्निजायां समुद्धरेत् ॥ २१ ॥
त्र्यक्षरीयं सेतुविद्या मर्दिन्याः परिकीर्त्तिता।

मन्त्रो यथा—ह्रीं स्वाहा इति।

विष्णोः—

प्रणवं पूर्वमुद्धृत्य वासवाद्यं ततः परम् ॥ २२ ॥
इन्दिरासंयुतं कुर्याद् यत्नतः परमेश्वरि।
ष्णात्मकमक्षरं चोक्त्वा ततः परमुदीरयेत् ॥ २३ ॥
बालिबीजं समुद्धृत्य एतिधासंयुतं कुरु।
पुनः प्रणवमुद्धृत्य विष्णोः सेतुः शुचिस्मिते ॥ २४ ॥

मन्त्रो यथा—ॐ विष्णवे ॐ इति।

श्रीकृष्णस्य—

प्रणवं पूर्वमुद्धृत्य मन्मथं तदनन्तरम्।
पुनः प्रणवमुद्धृत्य सेतुमन्त्रं मनोहरम् ॥ २५ ॥
श्रीकृष्ण विषये सेतुस्त्र्यक्षरः समुदाहृतः।

मन्त्रो यथा—ॐ क्लीं ॐ इति।

रामस्य—

शृणुकमलपत्राक्षि! सेतुं रामस्य सुन्दरम् ॥ २६ ॥
प्रणवं पूर्वमुद्धृत्य राजहंसं ततः परम्।
आचार्यसंयुतं कृत्वा बिन्द्वर्धसंयुतं कुरु ॥ २७ ॥
पुनः प्रणवमुद्धृत्य विद्येयं सेतुरूपिणी।
त्र्यक्षरीयं महाविद्या सेतुविद्या प्रकीर्तिता ॥ २८ ॥

मन्त्रो यथा—ॐ रां ॐ इति।

शिवस्य—

हंसयुक्तं समुद्धृत्य समुद्ररूपिणं ततः।
चंद्रार्द्धसंयुतं देवि कुरु यत्नेन पार्वति ॥ २९ ॥

एषा च द्वयक्षरी विद्या शिवस्य सेतुरूपिणी।

मन्त्रो यथा—हंसः इति।

अन्येषु देवीदेवेषु प्रणवः सेतुरुच्यते ॥ ३० ॥

सर्वेषां शूद्रजातीनामौङ्कारः सेतुरुच्यते।

अथ कवचसेतुः

यत्र यत्र विनिर्दिष्टः सेतुमन्त्रः शुचिस्मिते ॥ ३१ ॥

तं मन्त्रं त्रिगुणं कृत्वा सेतुमन्त्रं कुरुप्रिये।
कवचस्य महेशानि ! सेतुर्भवति सुन्दरि ॥ ३२ ॥

सेतुं विना महेशानि ! कवचं यः पठेन्नरः।
स भक्ष्यो जायते देवि। योगिनीनां शुचिस्मिते ॥ ३३ ॥

वैष्णवे गाणपत्ये च शैवे शाक्ते सुचिस्मिते।
आदावन्ते महासेतुं दत्त्वा तु कवचं पठेत् ॥ ३४ ॥

कुल्लुकाप्रयोजनम्

अथ कुल्लुकाप्रयोजनमाह रुद्रयामले—

अज्ञात्वा कुल्लुकां देवि ! महामंत्रं जपेत्तु यः।
तस्य नश्यन्तिचत्वारि आयुर्विद्यायशोबल(धन)म् ॥ ३५ ॥

कुल्लुकां च न जानाति महामंत्रं जपेन्नरः।
पञ्चत्वं जायते तस्य अथवा वातुलो भवेत् ॥ ३६ ॥

अज्ञात्वा कुल्लुकामेतां जपते योऽधमः प्रिये।
पञ्चत्वमाशु लभते सिद्धिहानिश्च जायते ॥ ३७ ॥

तथा जपादिकं सर्वं निष्फलं नात्र संशयः ।
तस्मात् सर्वंप्रयत्नेन प्रजपेन्मूर्ध्नि कुल्लुकाम् ॥ ३८ ॥

वाराहीतन्त्रे—

जपं समारभेन्मन्त्री कुल्लुकाद्यं यथाविधि ।
पूजां जपं समाप्यैव स्तुत्वा च कवचं पठेत् ॥ ३९ ॥

## कुल्लुकानिरूपणम्

विशुद्धेश्वरतन्त्रे—

गुह्याद् गुह्यतरं देवि ! तव स्नेहेन कथ्यते ।
तारायाः कुल्लुका देवि ! महानीलसरस्वती ॥ ४० ॥

मन्त्रो यथा—ह्लीं स्त्रीं हूँ इति ।

पञ्चाक्षरी कालिकायाः कुल्लुका परिकीर्त्तिता ।
काली कूर्चं वधूर्माया फडन्ता परमेश्वरि ॥ ४१ ॥

मन्त्रस्तु—क्रीं हूँ स्त्रीं ह्रीं फट् इति ।

छिन्नायास्तु महेशानि ! कुल्लुकाऽष्टाक्षरी भवेत् ।
वज्रवैरोचनीये च अन्ते वर्म प्रकीर्त्तयेत् ॥ ४२ ॥

मन्त्रस्तु—वज्रवैरोचनीये हूँ इति ।

प्रसादबीजं शम्भोस्तु मञ्जुघोषे षडक्षरी ।
ललाटवचनं चैव ध्यर्णं चंद्रयुतं स्मरेत् ॥ ४३ ॥

मन्त्रस्तु शिवस्य—हौं इति । मञ्जुघोषस्य तु—अरवचनधीं इति ।

भुवनेश्याश्च ह्रीं बीजं विष्णोर्वै चाष्टवर्णिका ।
नमो नारायणायेति प्रणवाद्या च कुल्लुका ॥ ४४ ॥

भुवनेश्वर्याः—ह्रीं इति । विष्णोः—ॐ नमो नारायणायेति ।

वर्मबीजं तु भैरव्याः कुल्लुका परिकीर्त्तिता ।

मन्त्रो यथा—हूँ इति ।

श्रीमत्त्रिपुरसुन्दर्याः कुल्लुका द्वादशाक्षरी ॥ ४५ ॥

वाग्भवं कामबीजं च लज्जां च त्रिपुरे ततः ।
भगवतिपदं पश्चादन्ते ठद्वयमुद्धरेत् ॥ ४६ ॥

मन्त्रस्तु—ऐं क्लीं ह्रीं त्रिपुरे भगवति स्वाहा इति ।

अथवा—

वाग्भवं प्रथमं बीजं कामराजमनन्तरम् ।
लज्जाबीजं क्रोधबीजं फडन्तं च समुद्धरेत् ॥ ४७ ॥

मन्त्रस्तु—ऐं क्लीं ह्रीं हूँ फट् इति ।

अथवा कामबीजाख्या कुल्लुका परिकीर्तिता ।

मन्त्रस्तु—क ए ई ल ह्रीं इति ।

सरस्वत्या वाग्भवं च अन्नदाद्यास्त्वनङ्गकम् ॥ ४८ ॥

सरस्वत्याः—ऐं इति । अन्नदायाः—क्लीं इति ।

मातङ्ग्या प्रथमं बीजं माया धूमावतीं प्रति ।

मातङ्ग्याः—ॐ इति । धूमावत्याः—ह्रीं इति ।

बगलाया वधूबीजं लक्ष्म्याश्च निजबीजकम् ॥ ४९ ॥

बगलायाः—स्त्रीं इति । लक्ष्म्याः—श्रीं इति ।

धनदाया वधूबीजं कुल्लुका परिकीर्त्तिता ॥ ५० ॥

मन्त्रो यथा—स्त्रीं इति ।

अपरेषां च देवानां स्वमन्त्रः परिकीर्त्तितः ।
अन्यासां तु पराबीजं कुल्लुका परमेश्वरि ॥ ५१ ॥

रामस्य—

प्रणवं पूर्वमुद्धृत्य राजहंसं ततः परम् ।
आचार्यसंयुतं कृत्वा बिन्द्वर्द्धसंयुतं कुरु ॥ ५२ ॥

पुनः प्रणवमुद्धृत्य विद्येयं सेतुरूपिणी ।
एतां विद्यां वरारोहे ! मन्मथैः पुटितां कुरु ॥ ५३ ॥

तदा भवति देवेशि ! रामस्य स्वर्गदुर्लभा ।
पञ्चाक्षरी महाविद्या सर्वतन्त्रेषु गोपिता ॥ ५४ ॥

मन्त्रस्तु—क्लीं ॐ रां ॐ क्लीं इति ।

इत्येवं कथिता देवि ! संक्षेपात् कुल्लुका मया ।

सेतुमङ्गलतन्त्रे—

वाग्भवं पूर्वमुद्धृत्य मन्मथं तदनन्तरम् ॥ ५५ ॥
भृगुबीजं समुद्धृत्य मनुसर्गयुतं कुरु ।
सुन्दरीविषये बोध्या कुल्लुकेयं महेश्वरि ! ॥ ५६ ॥

मन्त्रो यथा—ऐं क्लीं सौं इति ।

कामधेनुं समुद्धृत्य लोकबन्धां ततः परम् ।
वामनीयकबीजं तु पुनरुद्धृत्य सुन्दरि ॥ ५७ ॥
इति बीजयुतं कृत्वा बिन्द्वर्द्धसंयुतं कुरु ।
कुल्लुकेयं महाविद्या भैरव्या परिकीर्त्तिता ॥ ५८ ॥

मन्त्रस्तु—क ल रीं इति ।

ताराया:—

मायाबीजं समुद्धृत्य ततश्च प्रणवद्वयम् ।
पुनर्मायां समुद्धृत्य कुल्लुकाजपमाचरेत् ॥ ५९ ॥
कुल्लुकाजपमात्रेण सर्वसिद्धीश्वरो भवेत् ।

मन्त्रो यथा—ह्रीं ॐ ॐ ह्रीं इति ।

कालिकाया:—

पञ्चाक्षरी कालिकाया: कुल्लुका परिकीर्तिता ॥६०॥
काली कूर्चं वधूर्माया फडता परमेश्वरि ।

मन्त्रो यथा—क्लीं हूँ स्त्रीं ह्रीं फट् इति ।

भुवनेश्या:—

कालकूटप्रशमनीबीजमुद्धृत्य सुन्दरि ॥ ६१ ॥

वामनीयकबीजेन संयुतं कुरु सुन्दरि ।
बिन्द्वर्द्धसंयुतं कृत्वा त्रिगुणं कुरु सुन्दरि ॥ ६२ ॥

एषा विद्या महेशानि ! कुल्लुका विष्णुपूजिता ।

मन्त्रो यथा—ह्रीं ह्रीं ह्रीं इति ।

आद्यन्ते परमेशानि ! कूर्चबीजद्वयं कुरु ॥ ६३ ॥

तदा भवति विधेयं मर्दिन्याः कुल्लुका प्रिये ।

आद्यन्ते ॐ ह्रीं स्वाहा । ॐ इति मन्त्रस्याद्यन्तयोः हूँ इति बीजं कृत्वेत्यर्थः । तेन हूँ ॐ ह्रीं स्वाहा ॐ हूँ इति ।

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ॥ ६४ ॥

एवं कृते महेशानि ! प्रभुत्वं प्राप्नुवन्ति ते ।
अन्यथा पशुवद् देवि ! न जपेत्तु कदाचन ॥ ६५ ॥

इति श्रीपरिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां सेतुमहासेतुकुल्लुकानिर्णयोनाम दशमोल्लासः ॥

## अथैकादशोल्लासः

### ईश्वर उवाच

### मुखशोधनम्

मुखशोधनमाह सारस्वततन्त्रे—

अथ वक्ष्ये महेशानि ! मुखशोधनमुत्तमम् ।
यन्न कृत्वा वरारोहे ! जपपूजा वृथा भवेत् ।। १ ।।

अशुद्धजीह्वया देवि ! यो जपेत् स तु पापभाक् ।
दशधा प्रजपित्वा वै मुखशोधनमाचरेत् ।। २ ।।

देव्युवाच

देव देव ! महादेव ! शूलपाणे पिनाकधृत् ।
पृथक् पृथग् देवतानां कथयस्व दयार्णव ।। ३ ।।

शोधनं सर्वविद्यानां मुखस्य दशनस्य च ।

श्रीमहादेव उवाच

महात्रिपुरसुन्दर्याः शृणुष्व मुखशोधनम् ।। ४ ।।

श्रीबीजं प्रणवो लक्ष्मीस्तारः श्रीः प्रणवस्तथा ।
इमं षडक्षरं मन्त्रं सुन्दर्या दशधा जपेत् ।। ५ ।।

मन्त्रस्तु—श्रीं ॐ श्रीं ॐ श्रीं ॐ इति ।

बालायाः शृणु चार्वङ्गि ! मुखशोधनमुत्तमम् ।
वाग्भवं भुवनेशी च वाग्भवं सुरवन्दिते ।। ६ ।।

एषा च त्र्यक्षरी विद्या सदामृतमयी प्रिये ।

मन्त्रस्तु—ऐं ह्रीं ऐं इति ।

भैरव्याः शृणु चार्वङ्गि ! मुखशोधनमुत्तमम् ।। ७ ।।

प्रणवं च ह्सौः बीजं प्रणवं सुरवन्दिते ।
इमं त्र्यक्षरमन्त्रं च प्रथमं दशधा जपेत् ॥ ८ ॥

मन्त्रस्तु—ॐ ह्सौः ॐ इति ।

शृणु सुन्दरि ! श्यामायाः मुखशोधनमुत्तमम् ।
निजबीजत्रयं देवि ! प्रणवत्रितयं ततः ॥ ९ ॥
कामत्रयं बह्निबिन्दुरतिचन्द्रार्द्धभूषितम् ।
एषा नवाक्षरी विद्या मुखशोधनकारिणी ॥ १० ॥

मन्त्रस्तु—क्रीं क्रीं क्रीं ॐ ॐ ॐ क्रीं क्रीं क्रीं इति ।

तारायाः शृणु चार्वङ्गि ! अपूर्वं मुखशोधनम् ।
जीवनी मध्य(मा)गा ह्लज्जा भुवनेशी ततः परम् ।
त्र्यक्षरीयं महाविद्या जिह्वाग्रेऽमृतवर्षिणी ॥ ११ ॥

मन्त्रस्तु—ह्रीं हूँ ह्रीं इति ।

अपूर्वं शृणु चार्वङ्गि ! भुवनामुखशोधनम् ।
द्वादशस्वरमुद्धृत्य नादबिन्दुयुतं कुरु ॥ १२ ॥
तत् त्रिकं दशधा जप्त्वा भुवनेशीं जपेत् सुधीः ।
त्र्यक्षरीयं समाख्याता नानासुखविलासिनी ॥ १३ ॥

मन्त्रस्तु—ऐं ऐं ऐं इति ।

दुर्गायाः शृणु चार्वङ्गि ! मुखशोधनमुत्तमम् ।
द्वादशस्वरमुद्धृत्य बिन्दुयुक्तं च तत् त्रिकम् ॥ १४ ॥

मन्त्रस्तु—ऐं ऐं ऐं इति ।

अथ देवि ! प्रवक्ष्यामि बगलामुखशोधनम् ।
वाग्भवं भुवनेशानो वाग्बीजं सुरवन्दिते ॥ १५ ॥

एषा तु त्र्यक्षरी विद्यासदाऽमृतमयी प्रिये ।

मन्त्रस्तु—ऐं ह्रीं ऐं इति ।

मातङ्ग्या शोधनं देवि ! अङ्कुशं वाग्भवं तथा ॥ १६ ॥

बीजं चाङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरात्मकम् ।
त्र्यक्षरीयं समाख्याता मुखशोधनदुर्लभा ॥ १७ ॥

मन्त्रस्तु—क्रौं ऐं क्रौं इति ।

अपरैकं शृणु प्रौढे ! लक्ष्म्याश्च मुखशोधनम् ।
श्रियाश्च परमेशानि ! बीजान्ते कमलानने ॥ १८ ॥

पुनः श्रीबीजमुद्धृत्य मुखशोधनमाचरेत् ।
इयं सप्ताक्षरी विद्या चतुर्वर्गमयी सदा ॥ १९ ॥

श्रीं कमलानने श्रीं इति ।

अपरैकं प्रवक्ष्यामि दुर्गाया मुखशोधनम् ।
वाग्बीजपुटिता माया दुर्गे स्वाहा ततः प्रिये ॥ २० ॥

भुवनेशी पुनश्चैव वाग्बीजद्वयमेव च ।
इयं दशाक्षरी विद्या सदा मम हृदि स्थिता ॥ ११ ॥

मन्त्रस्तु—ऐं ह्रीं ऐं दुर्गे स्वाहा ह्रीं ऐं ऐं इति ।

अपरैकं प्रवक्ष्यामि धनदामुखशोधनम् ।
प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम् ॥ २२ ॥

बिन्दुयुक्तं ब्रह्मबीजं विज्ञेयं त्र्यक्षरात्मकम् ।

मन्त्रस्तु—ॐ धूँ ॐ इति ।

धूमावत्या महेशानि ! शोधनं चैतदेव हि ॥ २३ ॥

मन्त्रस्तु—ॐ धूँ ॐ इति ।

भुवनायाः स्वबीजन्तु प्रणवं वा विशोधनम् ।

मन्त्रस्तु—ह्रीं अथवा ॐ इति ।

रुद्रार्णादष्टमो देवि ! भूपुष्ट्यक्रूरसंयुतः ॥ २४ ॥
एकाक्षरीयं विद्या तु चान्नदामुखशोधनम् ।

मन्त्रस्तु—क्लीं इति ।

उच्छिष्टचाण्डालीदेव्या भद्रकाल्यास्तथैव च ॥ २५ ॥
जिह्वायाः शोधनं भद्रे ! शृणुष्व वरवर्णिनि ।
षष्ठस्वरं बिन्दुयुक्तं लज्जाबीजमनन्तरम् ॥ २६ ॥

पुनराद्यं महेशानि ! चाण्डाल्या मुखशोधनम् ।

मन्त्रस्तु—ॐ ह्रीं ॐ इति ।

चतुर्दशस्वरेणाढ्यं बिन्दुचन्द्रार्द्धभूषितम् ॥ २७ ॥
शिवबीजं महेशानि ! भद्रकाल्या विशोधनम् ।

मन्त्रस्तु—हौं इति ।

अन्यासां देवतानां च तथा विष्णोः शिवस्य च ॥ २८ ॥
अन्येषां चैव देवानां प्रणवं मुखशोधनम् ।
मायां वा परमेशानि ! प्रजप्य मुखशोधनम् ॥ २९ ॥

कुर्यादिति शेषः । अन्यदेवदेवीनां मन्त्रस्तु—ॐ अथवा ह्रीं इति ।

अन्येषु सर्वदेवेषु देवीषु च वरानने ।
दशधा प्रणवेनैव मुखशोधनमाचरेत् ॥ ३० ॥

मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् ।
अन्यथा विषसंयुक्ता जिह्वा भवति सर्वदा ॥ ३१ ॥

भक्षणे दूषिता जिह्वा मिथ्यावादेन दूषिता ।
कलहैर्दूषिता जिह्वा नानादोषेण दूषिता ॥ ३२ ॥

तत् कथं पामरो लोको जिह्वायां प्रजपेत् मनुम् ।
संशोधनमनाचर्य न जपेत् पामरः क्वचिद् ॥ ३३ ॥

शाक्तो वा वैष्णवो वापि गाणपः सौर एव वा ।
शैवो वाऽप्यन्यभक्तो वा कारयेन्मुखशोधनम् ॥ ३४ ॥

देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम् ।
सर्वं तस्य वृथा देवि ! मन्त्रसिद्धिर्न जायते ।। ३५ ।।

तस्मात् प्रयत्नतो देवि ! जिह्वाशोधनमाचरेत् ।
अन्यथा प्रजपेत् मन्त्रमकृत्वा मुखशोधनम् ।। ३६ ।।

पतनं तस्य देवेशि ! यो जपेत् स च पापभाक् ।
तस्मात् प्रयत्नतो देवि ! जिह्वाशोधनमाचरेत् ।। ३७ ।।

इति सारस्वततन्त्रोक्तमुखशोधनविधानम् ।

निद्राभङ्गः

देव्युवाच

पूजाकाले महेशान ! यदि निद्रातुरो मनुः ।
तत् कथं सिध्यते मन्त्रः किं कर्तव्यं तदा प्रभो ।। ३८ ।।

प्रजपेत् केन विधिना न जपेद् वा वद प्रभो ।
निद्रायाश्चैव देवेश ! लक्षणं वद मे प्रभो ।। ३९ ।।

ईश्वर उवाच

शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
इडायां च गते वायौ शक्तिमन्त्रं जपेत् प्रिये ।। ४० ।।

रात्रौ जपैकमात्रेण चण्डिका वरदा भवेत् ।

रुद्रयामले—

पिङ्गलायां गते वायौ तदा निद्रातुरः प्रिये ।। ४१ ।।

इडायां च गते वायौ तदा निद्रातुरो मनुः ।
एतत् ते कथितं देवि ! निद्राया लक्षणं प्रिये ।। ४२ ।।

प्रजपेद् यदि निद्रायां किं तस्य जपपूजने ।
सर्वं तस्य वृथा देवि ! अरण्ये रोदनं यथा ।। ४३ ।।

रहस्यानने चार्वङ्गि ! त्यक्तनिद्रा सनातनी ।

निद्राभङ्गमन्त्रः

आदौ कामकलाबीजं स्वमन्त्रान्तेऽपि तद् जपेत् ।। ४४ ।।

प्रायश्चित्तमिदं देवि ! कृत्वा मन्त्रं जपेद् यदि ।
किं तस्य दक्षिणो वायुस्तस्य निद्रातुरेण किम् ।। ४५ ।।

मन्त्रविद्यालक्षणम्

विश्वसारे—

मन्त्राः पुंदैवता ज्ञेया विद्या स्त्रीदैवता स्मृताः ।
पुंमन्त्रा हुंफडन्ताः स्युर्द्विठन्ताः स्युः स्त्रियो मताः ।। ४६ ।।

नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा ।

दीपनीलक्षणम्

दीपनीमाह तन्त्रे—

योनिमन्त्रं मनोर्दत्त्वा चाद्यन्ते परमेश्वरि ।। ४७ ।।

सप्तवारं जपेत् तं तु दीपनीय प्रकीर्त्तिता ।

योनिमन्त्र इङ्कारः, ताभ्यां पुटितं मूलं सप्तवारं जपेदित्यर्थः ।

तन्त्रे—

योनिमन्त्रेणाऽवयवं सकलं तु विभावयेत् ।। ४८ ।।

स्वकीयात्मानं कामकलां विभाव्य जपपूजादिकं कार्यम् । तथा चोक्तम्—

ध्यात्वा कामकलां देहे विद्याजापं समाचरेत् ।
ध्यात्वा कामकलारूपमात्मानं चिन्तयेत् सदा ।। ४९ ।।

तन्त्रे—

ऊर्ध्वबिन्द्वात्मकं वक्त्रमधोबिन्दुस्तनद्वयम् ।
हकारार्द्धं कामपुरं तथात्मानं विचिन्तयेत् ।। ५० ।।

एतत् कामकलाध्यानं गुह्याद्गुह्यतमं महत् ।
नाऽशिष्याय प्रवक्तव्यं नाभक्ताय कदाचन ।। ५१ ।।

लोभात् मोहाच्च देवेशि ! यत्र कुत्र प्रकाशयेत् ।
सोऽचिरान्मृत्युमाप्नोतिं शस्त्राघातविषादिभिः ।। ५२ ।।

**योनिमन्त्रः**

योनिमन्त्रमाह यामले—

तूर्यस्वरो बिन्दुयुतो नादेन परिभूषितः ।
कामकलामहामन्त्रो महाकालेन कीर्तितः ।।
तस्मात् स्वकीयमात्मानं ध्यायेद् देव्याः स्वरूपकम् ।।५३।।

**इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां मुखशोधननिर्णयोनामैकादशोल्लासः ।।**

## अथ द्वादशोल्लासः

### पुरश्चरणलक्षणम्

पुरश्चरणलक्षणमाह हंसमाहेश्वरे—

जपो होमस्तर्पणं च सेको ब्राह्मणभोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते ॥ १ ॥

यामले—

पञ्चाङ्गोपासनं लोके शाक्तवैष्णवभेदतः ।
पुरश्चरणमित्युक्तं शिवेन परमात्मना ॥ २ ॥

पुरश्चरणप्रयोजनं यामले—

जीवहीनो यथा देही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥ ३ ॥

तस्मादादौ स्वयं कुर्याद् गुरुं वा कारयेद् बुधः ।

रुद्रयामले—

पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ॥ ४ ॥

ततः पुरस्क्रियां कुर्याद् मन्त्रवित् सिद्धिकाङ्क्षया ।
किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ॥ ५ ॥

रहस्यानां च मन्त्राणां यदि न स्यात् पुरस्क्रिया ।
पुरस्क्रिया हि मन्त्राणां प्रधानो जीव(बीजं)उच्यते ॥ ६ ॥

### पुरश्चरणस्य पूर्वदिने कृत्यम्

हविष्येणैव भोक्तव्यं कृत्वा देहविशोधनम् ।
प्रातः स्नात्वा तु सावित्रीं जपेत् पञ्चसहस्रकम् ॥ ७ ॥

त्रिसहस्रं सहस्रं वा जपेदष्टोत्तरं शुचिः ।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ॥ ८ ॥
विप्रान् सन्तोषयेदन्नभोजनाच्छादनासनैः ।

तत्रादौ भूमिपरिग्रहः कार्यः । तदुक्तं वैशम्पायनसंहितायाम्—

आदावमुकमन्त्रस्य पुरश्चरणसिद्धये ॥ ९ ॥
मयेयं गृह्यते भूमिर्मन्त्रो मे सिध्यतामिति ।
भूमेः परिग्रहं कुर्यात् परिमाणाच्च सर्वशः ॥ १० ॥
ग्रामे क्रोशमितं स्थानं नद्यादौ स्वेच्छया मितम् ।
नगरादावपि क्रोशं क्रोशे युग्ममथापि वा ॥ ११ ॥
आहारादिविहारार्थं तावतीं भूमिमाश्रयेत् ।

दीपस्थानम्

दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदम् ॥ १२ ॥
दीप्यते पुरुषो यत्र दीपस्थानं तदुच्यते ।
चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ॥ १३ ॥
पूर्वकोष्ठादिषु लिखेत् सप्तवर्गाननुक्रमात् ।
लक्ष्मीशे लिखेन्मन्त्री स्वरन्यासक्रमं शृणु ॥ १४ ॥
पुनरेवं मध्यकोष्ठं नवधा विभजेत् सुधीः ।
मध्ये पूर्वादिकोष्ठेषु स्वरान् युग्मक्रमाल्लिखेत् ॥ १५ ॥
यत्र पूर्वादिकोष्ठेषु ग्रामाद्याक्षरसंस्थितिः ।
मुखं तु तस्य जानीयाद् हस्तावुभयतः स्थितौ ॥ १६ ॥
कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ।
मुखस्थो लभते सिद्धिं करस्थः स्वाल्पजीवनः ॥ १७ ॥
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ।
पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ॥ १८ ॥

कूर्मचक्रमिदं प्रोक्तं मन्त्रिणां सिद्धिदायकम् ।
निर्माय विधिवत् कुर्याद् जपं तत्र शुभे दिने ।। १९ ।।

चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽह्नि ।
आरभेत् पुरश्चर्यां हरौ सुप्ते न चाचरेत् ।। २० ।।

हरौ सुप्ते दक्षिणायने इत्यर्थः । तेन यद् दक्षिणायनं निषिद्धमुक्तं तद् विष्णुविषयम् । शक्तिविषये दक्षिणायनेऽपि पुरश्चरणं कर्त्तव्यम् । तथा चोक्तं यामले—

शरत्काले महापूजा क्रियते या च वार्षिकी ।
तस्मिन् पक्षे विशेषेण पुरश्चरणमाचरेत् ।। २१ ।।

अन्यत्रापि—

शरत्काले चतुर्थ्यादिनवम्यन्तं विशेषतः ।
भक्तितः पूजयित्वा तु रात्रौ चाष्टसहस्रकम् ।। २२ ।।

एकाकी निर्जने देशे जपेच्च तिमिरालये ।

अष्टसहस्रकमिति अष्टाधिकसहस्रं प्रत्यहं जपेदित्यर्थः । तिमिरालये अन्धकारवद् गृहे, न त्वालोकयुक्ते इत्यर्थः । केचित् तु 'तिमिरालये' रात्राविति वदन्ति तदसत्, रात्रौ चाष्टसहस्रकमिति रात्रेः पूर्वप्राप्तत्वादिति दिक् ।

### अथ पुरश्चरणदिनकृत्यम्

बहुभिर्वस्त्रभूषाभिः सम्पूज्य गुरुमात्मनः ।। २३ ।।

आरभेत् जपं पश्चात् तदनुज्ञापुरःसरम् ।
प्रातः स्नात्वा महेशानि ! कीलानादाय साधकः ।। २४ ।।

कुटीनिकटमागत्य कुर्यात् तन्त्रोदितां क्रियाम् ।
क्षीरिवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान् ।। २५ ।।

निखनेद् दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ।
क्षेत्रे तु कीलिते मन्त्री न विघ्नैः परिभूयते ।। २६ ।।

अश्वत्थोदुम्बरप्लक्षवटाश्च क्षीरिशाखिनः ।
क्षेत्रपालान् पूजयित्वा बलिं दद्याद् विधानतः ॥ २७ ॥
दिक्पतिभ्यो बलिं दत्त्वा ततः क्षेत्रं समाश्रयेत् ।

क्षेत्रपालमन्त्रमाह तन्त्रे—

वर्णान्तः औ बिन्दुयुतः क्षेत्रपालाय हृन्मनुः ॥ २८ ॥
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्तितः ।

मन्त्रः—ॐ क्षौं क्षेत्रपालाय नमः ।

षड्दीर्घभाजा बीजेन षडङ्गन्यासमाचरेत् ॥ २९ ॥
नीलाञ्जनाद्रिनिभमूर्द्ध्वपिशङ्गकेशं,
वृत्तोग्रलोचनमुपात्तगदाकपालम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं,
क्षेत्रेशमद्भुतमहं प्रणमामि देवम् ॥ ३० ॥

इति ध्यात्वा क्षेत्रपालमावाह्य अष्टदलपद्मे पूजयेत् ।

अनलाक्षमग्निकेशं करालं तदनन्तरम् ।
घण्टारवं महा(क्रोधं) कोपं पिशिताशनमप्यथ ॥ ३१ ॥
पिङ्गलाक्षमूर्द्ध्वकेशं पत्रेषु पूर्वतोऽर्चयेत् ।
लोकपालांस्तदस्त्राणि यथापूर्वं प्रपूजयेत् ॥ ३२ ॥

ततो माषभक्तबलिं दद्यात् । मन्त्रमाह शारदायाम्—

पूर्वमेहिद्वयं पश्चाद् विदु(द्वि)षि स्यात् सुरुद्वयम् ।
भञ्जयद्वितयं भूयस्तर्जयद्वितयं ततः ॥ ३३ ॥
ततो विघ्नपदद्वन्द्वं महाभैरव तत्परम् ।
क्षेत्रपालबलिं गृह्णद्वयं पावकसुन्दरी ।
बलिमन्त्रोऽयमाख्यातः सर्वकामफलप्रदः ॥ ३४ ॥

बद्धाञ्जलिः—

ॐ तीक्ष्णदंष्ट्र ! महाका(ल)य ! कल्पान्तदहनोपम !
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ ३५ ॥

इत्यनुज्ञां लब्ध्वा इन्द्रादिदिक्पालान् पूजयित्वा माषभक्तिबलिं दद्यात् ।
शारदायाम्—

कुटीनिकटमागत्य सामान्यार्घ्यं विधाय च ।
द्वारपूजां विधायाथ जपस्थानं विशोधयेत् ॥ ३६ ॥

वीक्षणं मूलमन्त्रेण शरणे प्रोक्षणं मतम् ।
तेनैव ताडनं दर्भैर्वर्मणाऽभ्युक्षणं मतम् ॥ ३७ ॥

## पुरश्चरणसंकल्पः

सनत्कुमारसंहितायाम्—

प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।
अमुकगोत्रोऽमुकोऽहं मूलमुच्चार्य तत्परम् ॥ ३८ ॥

सिद्धिकामोऽस्य मन्त्रस्य इयत्संङ्ख्याजपं ततः ।
दशांशं हवनं होमाद् दशांशं तर्पणं ततः ॥ ३९ ॥

दशांशं मार्जनं तस्माद् दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ॥ ४० ॥

भूतशुद्धिं विधायादौ प्राणायामं समाचरेत् ।
ऋष्यादिकं ततः कृत्वा कल्पोक्तन्यासमाचरेत् ॥ ४१ ॥

ततः पूजादिकं कृत्वा यथाविधिजपं चरेत् ।
शनैः शनैरविस्पष्टं न द्रुतं न विलम्बितम् ॥ ४२ ॥

क्रमेणोच्चारयेद् वर्णानाद्यन्तक्रमयोगतः ।
देवतां चित्तगां कुर्यात् कुर्याच्च हृदयं स्थिरम् ।।
प्रातः कालं समारभ्य जपेन्मध्यन्दिनावधि ।। ४३ ।।

कुलार्णवे—

यत्संङ्ख्यया समारब्धं तज्जप्तव्यं दिने दिने ।
न्यूनाधिकं न कर्तव्यमासमाप्तं कदाचन ।। ४४ ।।

न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतान्येव तत् कर्माणि फलन्ति हि ।। ४५ ।।

स्नानं त्रिसवनं प्रोक्तमशक्तौ द्विः सकृच्च वा ।
मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्चयेत् ।। ४६ ।।

द्विकालमेककालं वा न मन्त्रं केवलं जपेत् ।
उपचारैर्यथाशक्ति देवतामन्वहं यजेत् ।। ४७ ।।

न क्षुज्जृम्भणहिक्कादिविकलीकृतमानसः ।
मन्त्रसिद्धिमवाप्नोति तस्माद् यत्नपरो भवेत् ।। ४८ ।।

यदि दैवाद् जृम्भणादिकं भवति, तदा आचम्य प्राणायामं षडङ्गन्यासं च कृत्वा शेषं जपेत्, सूर्यं दृष्ट्वा वा जपेत् । तथा च योगिनीहृदये—

पतितानामन्त्यजानां दर्शने भाषणे कृते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ।। ४९ ।।
तथाचम्य च तत्प्रासौ प्राणायामं षडङ्गकम् ।
कृत्वा सम्यग् जपेच्छेषं यद्वा सूर्यादि दर्शनम् ।। ५० ।।

'कृत्वा जपेदि' ति परेणान्वयः । आदिपदाद् देवब्राह्मणादीनां परिग्रहः ।

शयीत दर्भशय्यायां विन्यस्य भुवि चात्मनः ।
तद्वासः क्षालयेन्नित्यमन्यथा विघ्नमा(वहेत्) पतेत् ।। ५१ ।।
न दिवा शयनं कुर्यात् कुक्कुरादीन् न संस्पृशेत् ।
न सेवेत स्त्रियं मांसं मधु वा साधकोत्तमः ।। ५२ ।।

एतानि सेवमानस्य न सिध्यन्ति पुरस्क्रियाः ।

### भक्ष्यादिनियमः

कुलार्णवे—

भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ॥ ५३ ॥
पयो मूलं फलं वापि यत्र यच्चोपलभ्यते ।
भिक्षाशी वा जपेद् यद्वा कृच्छ्रचान्द्रायणादिकृत् ॥ ५४ ॥
आम्रमामलकं चैव फलं केशरिसम्भवम् ।
रम्भाफलं तिन्तिडीकं कमला नागरङ्गकम् ॥ ५५ ॥
फलान्येतानि भोज्यानि तदन्यानि विवर्जयेत् ।

विहितशाकं यथा—

कलायं कालशाकं च वास्तूकं हिलमोचिका ॥ ५६ ॥

### हविष्यान्नलक्षणम्

हविष्यान्नं यथा—

हैमान्तिकं सितास्विन्नं धान्यमुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तूकं हिलमोचिका ॥ ५७ ॥
यष्टिका कालशाकं च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी ॥ ५८ ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरङ्गं च तिन्तिडी ॥ ५९ ॥
कदली लवली धात्री फलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥ ६० ॥
मूलं केमुककेन्दूनां वर्जयेद् विहितं मुने ।
घृतं दधि फलं वापि नारिकेलं यथोचितम् ॥ ६१ ॥

हविष्यान्नं तथाऽश्नीयाच्छक्तुं यवसमुद्भवम् ।
नेन्द्रियाणां यथा वृद्धिस्तथा भुञ्जीत साधकः ।। ६२ ।।
गृहस्थानां वदान्यानां भिक्षाशिनोऽग्रजन्मनाम् ।
पुरश्चरणमध्ये तु यदि स्यान्मृतसूतकम् ।। ६३ ।।
तथापि कृतसंकल्पो जपं नैव परित्यजेत् ।
स्वकल्पोक्तक्रमेणैव जपं कृत्वा वरानने ।। ६४ ।।
होमयेद् तद्दशांशेन तद्दशांशेन तर्पणम् ।
तर्पणस्य दशांशेन चाभिषिञ्चेज्जगन्मयीम् ।। ६५ ।।
अभिषेकदशांशेन कुर्याद् ब्राह्मणभोजनम् ।
गुरवे दक्षिणां दत्त्वा दीनान्धकृपणान् बहून् ।। ६६ ।।
ज्ञातीन् द्विजान् परान् भक्त्या भोजयेच्च यथेप्सितान् ।
एवं कृतपुरश्चर्याः साधयेदिष्टमात्मनः ।।६७।।

### होमादिनियमः

गौतमीये—

जपान्ते प्रत्यहं मन्त्री होमयेद् तद्दशांशतः ।
तर्पणं चाभिषेकं च तत्तद्दशांशतो मुने ।। ६८ ।।
प्रत्यहं भोजयेद् विप्रान् न्यूनाधिक्यप्रशान्तये ।
अथवा सर्वसम्पूर्तौ होमादिकमथाचरेत् ।। ६९ ।।
अथवा हेमपत्रादौ यन्त्रं कृत्वा ततः परम् ।
पूजायित्वा तत्र देवीं परिवारसमन्विताम् ।। ७०।।

### तर्पणविधिः

तर्पयेत् तां परां देवीं तत्प्रकारमिहोच्यते ।
तर्पयित्वा गुरूनादौ मूलदेवीं च तर्पयेत् ।। ७१ ।।
मूलान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।
स्वाहाऽन्ते तर्पयेन्मन्त्री यथासंख्यं विधानतः ।। ७२ ।।

योगिनीहृदये—

तर्पणं च प्रकुर्वीत द्वितीयान्तमथोच्चरन् ।
एकैकमञ्जलिं दत्त्वा तर्पयेद् रश्मिवृन्दकम् ॥ ७३ ॥

## तर्पणद्रव्यम्

तर्पणद्रव्यमाह विशुद्धेश्वरे—

तर्पणं चेन्दुमत्तोयैस्तीर्थतोयैस्तथा पुनः ।
गुरूपदिष्टविधिना मधुना वाऽथ तर्पयेत् ॥ ७४ ॥

तन्त्रान्तरे—

तीर्थतोयेन दुग्धेन सर्पिषा मधुनाऽपि वा ।
गन्धोदकेन वा कुर्यात् सर्वत्र साधकोत्तमः ॥ ७५ ॥

कालागुरुद्रवैरेव वशयेज्जगदादिकम् ।
सचन्दनेन तोयेन सौभाग्यं लभते नरः ॥ ७६ ॥

तोयैः कुङ्कुममिश्रैश्च स्तम्भयेदखिलं जगत् ।
सितामिश्रिततोयेन बृहस्पतिसमो भवेत् ॥ ७७ ॥

कर्पूराक्तजलेनैव सुरान्नाकर्षयेन्नरः ।
रोचनायुततोयेन सर्वविघ्नात् प्रमुच्यते ॥ ७८ ॥

ध्यात्वा देवीं मुखे तस्यास्तर्पणं च समाचरेत् ।
सर्वशास्त्रेषु कथितं तर्पणं शुभदायकम् ॥ ७९ ॥

एतत्तु तर्पणं कृत्वाऽभिषेकं तद्दशांशतः ।
आत्मानं देवबुध्या तु सम्पूज्य तन्मयः सुधीः ॥ ८० ॥

मूलविद्यां समुच्चार्याऽमन्तां च देवताभिधाम् ।
तदन्ते चाभिषिञ्चामि नमोऽन्तेनाऽभिषेचयेत् ॥ ८१ ॥

इति मन्त्री स्वकं मन्त्रं चिन्तयित्वा स्वमूर्द्धनि ।
अभिषेकं स्वीयसंख्यं विदध्यात् तदनन्तरम् ।। ८२ ।।
तत्र सञ्चिन्तयेद् देवीं साङ्गावरणदेवताम् ।
क्षिपेत् तोयं यथासंख्यं गणान् सिञ्चेत् सकृत् सकृत् ।। ८३ ।।
अभिषेकं समाप्यैवमभिषेकदशांशतः ।
ब्राह्मणान् देवबुध्या च भोजयेत् साधकोत्तमः ।। ८४ ।।

यामले—

ब्राह्मणान् भोजयेद् देवि ! तथैव च कुमारिकाः ।
साधकः पशुतामेति कुमारीभोजनादृते ।। ८५ ।।
ततो मन्त्रयुतान् विप्रान् भोजयेद्देवताधिया ।
ततः सम्पूजयेद् भक्त्या सम्भारैर्विविधैर्गुरुम् ।। ८६ ।।
दक्षिणां गुरवे दद्याद् यथा विभवविस्तरैः ।
दत्त्वा च साधकश्रेष्ठो महापूजां समाचरेत् ।
सिद्धमन्त्रो भवेन्मन्त्री नात्र कार्या विचारणा ।। ८७ ।।

तन्त्रे—

विभवे सति यो मोहान्न कुर्याद् विधिविस्त(रैः)रम् ।।
नैतत् फलमवाप्नोति देवद्रोही स उच्यते ।।८८।।

## अंगहीने जपविधिः

मुण्डामालायाम्—

यद् यदङ्गविहीनं स्यात् तत्संख्याद्विगुणो जपः ।
कर्त्तव्यः साङ्गसिध्यर्थं तदशक्तेन भक्तितः ।। ८९ ।।

रुद्रयामले—

होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिगुणादिक ईरितः ।। ९० ।।

योगिनीहृदये—

होमाशक्तौ जपं कुर्यात् होमस्य द्विगुणो बुधः ।
ब्राह्मणादित्रिवर्णानां स्त्रीणां संख्या विधीयते ॥ ९१ ॥

यं वर्णमाश्रितः शूद्रो दीक्षां कुर्याद् यथेप्सिताम् ।
तस्य स्त्रीणां तु या संख्या सा संख्या तस्य विद्यते ॥ ९२ ॥

शूद्रस्य यादृशी संख्या द्विगुणा सा स्त्रियः प्रिये ।

अन्यत्रापि—

यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ॥ ९३ ॥

अनाश्रितस्य शूद्रस्य दिक्संख्याकः समीरितः ।
शूद्रस्य विप्रभृत्यस्य तत्पन्याः सदृशो जपः ॥ ९४ ॥

होमशून्यस्य विप्रस्य यो जपः स तु तत् स्त्रियः ।
इतरेषां तु वर्णानां सर्वेषां त्रिगुणादिकः ॥ ९५ ॥

त्रिगुणादिक इति । होमसंख्यात्रिगुणजपः क्षत्रियेण कार्यः । वैश्येन चतुर्गुणः, शूद्रेण च पञ्चगुणो बोध्यः । शूद्रस्य द्विगुणः, शक्तिविषये ज्ञेयः । वैष्णवानां चतुर्वर्णानां चतुर्गुणषड्गुणाष्टदशगुणो बोद्धव्यः । अन्यथा कुत्रापि द्विगुणादिकः कुत्रापि चतुर्गुणादिक इति विरोधापत्तेः । तथा चोक्तं गौतमीये-

होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः ।
विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः ॥
वैश्यानां वसुसंख्याक एषां स्त्रीणामयं विधिः ॥ ९६ ॥

यामले—

यदि होमे न शक्तः स्यात् पूजायां तर्पणेऽपि वा ।
तावत्संख्याजपेनैव सर्वसिद्धिः प्रजायते ॥ ९७ ॥

यामले—

कुत्रापि यदि हीनं स्याद् दशकस्याऽङ्गकर्मणि ।
तत्तद्दशैव कार्याणि दशन्यूनं न कारयेत् ॥ ९८ ॥

यामले—

लक्षमेकं जपेद् विद्वान् हविष्याशी सदा शुचिः ।
ततस्तु तद्दशांशेन होमयेद्धविषा प्रिये ॥ ९९ ॥
तर्पयेत् तद्दशांशेन तीर्थतोयेन पार्वति ।
चाभिषिञ्चेत् ततस्तोयैस्तर्पणस्य दशांशतः ॥ १०० ॥
तद्दशांशं हविष्यान्नैर्भक्तितो भोजयेद् द्विजान् ।
गुरवे दक्षिणां दद्याद् यथा विभवस्तिरैः ॥ १०१ ॥
पाशवः कथितः कल्पः शृणु वीरमतः परम् ।

वीरकल्पः

मुण्डमालायाम्—

मत्स्यमांसाशने शक्तः कुर्यान्मन्त्रपुरस्क्रियाम् ॥ १०२ ॥
रात्रौ त्रागास्यः सय्यायां प्रजपेल्लक्षमानतः ।
ततस्तु तद्दशांशेन होमयेद्धविषानले ॥ १०३ ॥
दशांशं तर्पयेद् द्रव्यैर्मांसमिश्रैः सुसाधकः ।
तर्पणस्य दशांशेन चाभिषिञ्चेज्जगन्मयीम् ॥ १०४ ॥
दशांशं भोजयेद् देवि ! साधकं देवता प्रियम् ।
मधुमासं च मत्स्यं च चर्वणं च प्रदापयेत् ॥ १०५ ॥
ततस्तु तोषयेद् भक्त्या गुरुं स्वर्णादिभिः प्रिये ।
एतत् कल्पद्वयाद् देवि मन्त्रः सिध्यति निश्चितम् ॥ १०६ ॥

अत्र लक्षपदं स्वस्वकल्पोक्तसंख्यापरम् । तथा चोक्तं कुमारीतन्त्रे—

तस्मिन् काले साधकेन्द्रः स्वकल्पोक्तं जपं चरेत् ।

तस्मिन् काले पुरश्चरणकाले । यत्तु कुमारीतन्त्रे—

लक्षमेकं जपेत् मन्त्रं हविष्याशी दिवा शुचिः ॥ १०७ ॥
रात्रौ ताम्बूलपूरास्यः शय्यायां लक्षमानतः ।
एवं एक्षद्वयं जप्त्वा तद्दशांशेन मन्त्रवित् ॥ १०८ ॥

इतिवचनाद् विशिष्टपुरश्चरणे लक्षद्वयजप इति वदन्ति, तन्न, मनोरमम्। यद् दिने हविष्याशी, तद्दिने मत्स्याद्यशने हविष्यान्नव्याधातान्नानाचारस्य प्रसक्तेश्च। तथा चोक्तं यामले—'नानाचारो न कर्त्तव्यो नानाचारतो यतः' इति। तस्मात् कुमारीतन्त्रोक्तवचनस्य पुरश्चरणद्वये तात्पर्यम्। एतत् कल्पद्वयं दिव्यवीरयोः पर्यायेण कर्त्तव्यम्। दिव्येन तु एतत्कल्पद्वयं युगपत् कर्त्तुमपि शक्यम्। यतः स तत्त्वज्ञानी सन् मानसक्रियावान्, अतो नास्य मानसक्रियया बाह्यक्रियाया विरोधः। वीरस्तु अतत्त्वज्ञानी सन् बह्यान्तरोभयाक्रियावान्, तस्यैतत्कल्पद्वययौगपद्यं नास्ति, उद्धतमानसत्वात्, आचारसांकर्यापाताच्चेति सर्वमवदातम्। तथा चोक्तं तन्त्रे—

दिव्यस्तु देववत् प्रायो वीरश्चोद्धतमानसः।

योगिनोहृदये—

सर्वहिंसाविनिर्मुक्तः सर्वप्राणिहितेरतः ॥ १०९ ॥

कामक्रोधलोभमोहरागद्वेषविवर्जितः।
पूजापमाने सन्तुष्टोप्यधिकारी स एव हि ॥
सोऽस्मिन् शास्त्रेऽधिकारी स्यात् तदन्यो भ्रष्टसाधकः ॥११०॥

पशुस्तु संशयज्ञानी सन् क्रियावान् मत्स्यमांसादिकं न ग्राह्यम्, न स्त्रियं मनसाऽपि स्मरेत्, न ताम्बूलं भक्षयेत्, किन्तु हविष्यान्नं भक्षयेत्। ऋतुकालं विना न स्त्रियमपि गच्छेत्। दक्षिणमार्गेण पूजा कर्तव्या। तथाचोक्तं यामले—

यो दाक्षिण्यं विना देवि ! महामायां समर्चति।
स पापः सर्वलोकेभ्यश्च्युतो भवति न्यायथा ॥ १११ ॥

अनेन यद् दिवाविधानम्, तद् दिव्यवीरविषयेऽपि बोद्धव्यम्। तथा चोक्तं यामले—

दिवा दक्षिणमार्गेण वामेन च तथा निशि।
यदि तूर्णं फलावाप्तौ युष्माकं मतमेव च ॥ ११२ ॥

इति वचनात्।

## अथ ग्रहणपुरश्चरणम्

अथ ग्रहणपुरश्चरणम् श्रीबीजार्णवतन्त्रे शोडशपटले देवीं प्रति शिववाक्यम्—

एकदा परमेशानी कामाख्यायां महेश्वरी ।
दृष्टवापरागं यत् कार्यं तत् पृच्छति महेश्वरम् ।। ११३ ।।

येनैव विधिना देव ! सिद्धो भवति नान्यथा ।

### श्रीशिव उवाच

कुतः स्नानं कुतः सन्ध्या प्राणायामं कुतः प्रिये ।। ११४ ।।

भूतशुद्धिः कुतो भद्रे ! कुतः पूजा वरानने ।
कालातीतभयाद् देवि! सर्वं सन्त्यज्य कामिनि ।। ११५ ।।

सङ्कल्पं मानसं कृत्वा जपं कुर्याद् वरानने ।
पञ्चाङ्गविधिना देवि ! सिद्धो भवति नान्यथा ।। ११६ ।।

मन्त्रो विद्या महेशानि ! कवचं स्तव एव वा ।
ध्यानं वा परमेशानि ! न्यासो वा कमलेक्षणे ।। ११७ ।।

एकोच्चारेण देवेशि ! भवन्ति दशकोटयः ।
असंख्यस्तज्जपो देवि ! ग्रहणे चन्द्रसूर्ययोः ।। ११८ ।।

तत् कथं परमेशानि ! जपसंख्या विधीयते ।
अत एव महेशानि ! होमो नास्ति शुचिस्मिते ।। ११९ ।।

अभिषेकश्च देवेशि ! तथा च तर्पणादिकम् ।
भोजनं च महेशानि ! नास्ति वै कमलानने ।। १२० ।।

सूर्यचन्द्रग्रहे देवि ! पञ्चाङ्गं नास्ति कामिनि ।
पञ्चाङ्गेन विहीनोऽपि सिद्धो भवति नान्यथा ।। १२१ ।।

संकल्पं विद्धि देवेशि ! मानसं यदुपस्थितम् ।
तत्संकल्पं विजानीयाद् ग्रहणे चन्द्रसूर्ययोः ॥ १२२ ॥
तस्मात् तु चञ्चलापाङ्गि ! संकल्पं नैव कारयेत् ।
संकल्पो मानसो देवि ! चतुर्वर्गफलप्रदः ॥ १२३ ॥
अत एव महेशानि ! संकल्पो मानसः स्मृतः ।
स्थूलो हि परमेशानि ! संकल्पो व्यर्थ उच्यते ॥ १२४ ॥
संकल्पेन विना देवि ! यत् किञ्चित् कुरुते सुधीः ।
व्यर्थमेव हि देवेशि ! तत्सर्वं मानसो न हि ॥ १२५ ॥

### ग्रहणे भोजनकालः

प्रथमप्रहरे भद्रे ! चन्द्रग्रासो यदा भवेत् ।
तदैव दिवसे भुक्त्वा सत्वरं नरकं व्रजेत् ॥ १२६ ॥
निशीथे च महेशानि ! यदैव ग्रहणं भवेत् ।
तदैव दिवसे भुक्त्वा पीत्वानन्दमयो भवेत् ॥ १२७ ॥
चन्द्रग्रहणकाले तु जपयज्ञादिकं चरेत् ।
दिवसे च यदा भद्रे ! भास्करग्रहणं भवेत् ॥ १२८ ॥
रात्रौ भुक्त्वा च पीत्वा च जपयज्ञादिकं चरेत् ।
सौरेषु (सर्वेषु) विष्णुमन्त्रेषु शैवे (सौरे) गाणपतौ तथा ॥१२९॥
शक्तिमन्त्रो महेशानि ! प्रशस्तः सततं जपेत् ।
इति बीजार्णवे तन्त्रे शिवेनैव प्रकीर्त्तितम् ॥ १३० ॥

एतत् सर्वं ज्ञानिनामेव कर्तव्यम् । आज्ञानिनामपि पशूनां कर्तव्यमाह गन्धर्वतन्त्रे—

अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ॥ १३१ ॥
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः ।

ग्रहणादिविमोक्षान्तं जपेत् मन्त्रं समाहितः ।। १३२ ।।

सनत्कुमारतन्त्रे—

दृष्ट्वा स्नात्वा सुसंकल्पो विमोक्षान्तं जपं चरेत् ।
जपस्य च दशांशेन होमं कुर्याद् यथाविधि ।। १३३ ।।
होमार्थं द्विगुणं वापि जपेन् मन्त्रं समाहितः ।
होमस्य तु दशांशेन तर्पणं समुपाचरेत् ।। १३४ ।।
तर्पणस्य दशांशेन त्वभिषेकं समाचरेत् ।
अभिषेकदशांशेन कुर्याद् ब्राह्मणभोजनम् ।। १३५ ।।
तदन्ते महतीं पूजां कुर्यात् साधकसत्तमः ।
गुरवे दक्षिणां दद्याद् भक्त्या विप्रान् प्रतर्पयेत् ।। १३६ ।।

श्यामाविद्यायां विशेषमाह कालीतन्त्रे—

अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
चन्द्रसूर्यग्रहे चैव ग्रासावधिविमुक्तितः ।। १३७ ।।
यावत्संख्यं मनुं जप्त्वा तावद् होमादिकं चरेत् ।

यदि नक्रादिदूषिता नदी भवति समुद्रगामिनी वा न भवति, तदा किं कर्तव्यम्, तदाह रुद्रयामले—

यद्वा शुद्धोदकैः स्नात्वा शुचौ देशे समाहितः ।। १३८ ।।
ग्रहणान्मुक्तिपर्यन्तं जपेत् मन्त्रमनन्यधीः ।
इति कृत्वा न सन्देहो जपस्य फलभाग् भवेत् ।। १३९ ।।

ये तु ग्रहणपूर्वदिने उपवासाशक्त्या हविष्यान्नं फलं दुग्धं वा भुञ्जीतेति वदन्ति, तन्न मनोरमम्, प्रमाणाभावात्, उपवासस्यावश्यकत्वाच्च ।

## जपप्राधान्यम्

ये तु वदन्ति—

अत्र श्राद्धमकुर्वाणः पङ्के गोरिव सीदति ।

इति निन्दावादश्रवणात् श्राद्धस्यावश्यकत्वे, न जपस्येति, तत्र यथाऽऽह सनत्कुमारतन्त्रे—

श्राद्धादेरनुरोधेन यदि जाप्यं त्यजेन्नरः ।
स भवेद् देवताद्रोही पितॄन् सप्त नयत्यधः ।। १४० ।।

महिषमर्दिनीतन्त्रेऽपि—

चन्द्रसूर्यग्रहे जप्त्वा कैवल्यं प्राप्नुयान्नरः ।
अकृत्वा मन्त्रजापं च सत्वरं नरकं व्रजेत् ।। १४१ ।।

गुप्तदीक्षातन्त्रे—

चन्द्रसूर्यग्रहे यस्तु सम्यग् जापं न चाचरेत् ।
स दु(भ्र)ष्टः स च पापिष्ठः सहसा शूकरो भवेत् ।। १४२ ।।

तस्यान्नमुदकं देवि ! मूत्रशोणितविट्समम् ।
जायते नात्र सन्देहो मम वाक्याद् वरानने ! ।। १४३ ।।

अन्यत्रापि—

जपयज्ञं विना देवि ! यः करोत्यन्यचिन्तनम् ।
स भवेद् रौरवे मग्नो यावदाभूतसम्प्लवम् ।। १४४ ।।

रौरवात् पुनरागत्य पापयोनिषु जायते ।
निष्कृतिर्नास्ति चार्वङ्गि ! तस्यापि च कदाचन ।।१४५।।

तस्मात् सर्वं परित्यज्य चन्द्रपर्वणि संजपेत् ।
सूर्यपर्वं यथा देवि ! चन्द्रपर्वं तथा प्रिये ।। १४६ ।।

सर्वं त्यक्त्वा महेशानि ! जपयज्ञं समाचरेत् ।

इत्यादिनानातन्त्रवचनेभ्यो जपं विना कार्यन्तरस्य निन्दाश्रुतेर्जपस्यैवावश्यकत्वम् । राश्यादिगणनायां दोषमाह यामले—

अज्ञानाद् यदि वा मोहाद् राश्यादिगणना चरेत् ।। १४७ ।।

विचार्य चञ्चलापाङ्गि ! न पश्येद् ग्रहणं यदि ।।
पूर्वजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति ।। १४८ ।।

कामधेनुतन्त्रे—

चन्द्रपर्वं सूर्यपर्वं न विचार्यं कदाचन ।
सूर्यपर्वं वरारोहे ! न पश्येद् यदि पामरः ।। १४९ ।।
अस्तु तावत् परो धर्मः पूर्वधर्मो विनश्यति ।

यामले—

जन्म सप्ताष्ट-ऋणकाङ्कदशमस्थे निशाकरे ।। १५० ।।
दृष्टोऽरिष्टप्रदो राहुर्जपपूजां विना भवेत् ।

भैरवतन्त्रे—

अथ वक्ष्ये महेशानि ! कवचानां पुरस्क्रियाम् ।। १५१ ।।
अष्टोत्तरशतं जप्त्वा पुरश्चर्यां समाचरेत् ।
दशांशतोऽङ्गकर्माणि होमादीनि पृथक् पृथक् ।। १५२ ।।
ततश्च सिद्धकवचः पुण्यात्मा मदनोपमः ।

स्वयमशक्तौ प्रतिनिधिद्वारा कर्त्तव्यम् । यथाह ज्ञानप्रदीपे—

विदधीत पुरश्चर्यां गुरुणा तादृशेन वा ।। १५३ ।।

इति परिजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां पुरश्चरणनिर्णयो नाम द्वादशोल्लासः ।।

## अथ त्रयोदशोल्लासः

### यन्त्रसंस्कारः

विना यन्त्रेण पूजायां देवता न प्रसीदति ।
सर्वेषामपि देवानां यन्त्रे पूजा प्रशस्यते ॥ १ ॥
सुवर्णं रजतं ताम्रं श्रेष्ठं मध्यमथाधमम् ।
ताम्रं लक्षगुणं प्रोक्तं रौप्यं कोटिगुणं भवेत् ॥ २ ॥
स्वर्णं त्वनन्तफलदं स्फाटिकं च तथा भवेत् ।
एकतोलं द्वितोलं वा त्रितोलं पञ्चतोलकम् ॥ ३ ॥
रसतोलं चतुस्तोलं सप्ततोलं पलं तु वा ।
साधकस्य मनुं ज्ञात्वा कृत्वा पीठेषु साधकः ॥ ४ ॥

पूजयेदितिशेषः । सम्मोहनतन्त्रे—

अथवा प्रतिमां कृत्वा निजदेवस्वरूपिणीम् ।
मूलमुच्चारयन् सम्यगालिखेद् यन्त्रमुत्तमम् ॥ ५ ॥

तन्त्रे—

तन्मध्ये विलिखेद् यन्त्रं सुवर्णेन कुशेन वा ।

ऊर्ध्वाम्नायतन्त्रे—

प्राणनाथ ! जगन्नाथ ! ब्रह्मविष्णुप्रपूजित ! ॥ ६ ॥
इदानीं चक्रराजस्य प्रतिष्ठाकर्म मे वद ।

**श्रीईश्वर उवाच**

यथा मन्त्रस्य संस्कास्तथा यन्त्रस्य कल्पयेत् ॥ ७ ॥
असंस्कृतौ यन्त्रमन्त्रौ रोगशोकभयप्रदौ ।
कथितो मन्त्रसंस्कारो दशधा सर्वतन्त्रके ॥ ८ ॥

यन्त्रसंस्कारमधुना शृणु देवि ! समाहिता ।

**यन्त्रसंस्कारसंकल्पः**

चक्रराजं विनिर्माय ततः संस्कारमाचरेत् ।। ९ ।।

प्रतिष्ठा द्विविधा देवि ! मध्यमा चोत्तमा तथा ।
स्नात्वा संकल्पयेन्मन्त्री गुरोर्वाक्येन चादरात् ।। १० ।।

प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।
अमुकोऽमुकगोत्रान्तऽमुकदेव्यश्च प्रीतये ।। ११ ।।

चक्रेऽस्मिन्नमुकदेव्याः प्राणजीवेन्द्रियेति च ।
प्रतिष्ठाकर्मशब्दान्ते करिष्ये प्रागुदङ्मुखः ।। १२ ।।

ततो गुरुं च वृणुयाद् वस्त्रालङ्कारचन्दनैः ।
भूतशुद्ध्यादिकान् न्यासान् विन्यसेत् तदनन्तरम् ।। १३ ।।

पञ्चगव्यं निजैर्मन्त्रैः शिवमन्त्रेण मन्त्रितम् ।
तस्मिन् चक्रं क्षिपेन्मन्त्री प्रणवेन विलोकयेत् ।। १४ ।।

ततश्चक्रं समुद्धृत्य स्थापयेच्चक्रभाजने ।

**यन्त्रस्नानम्**

शङ्खतोयेन देवेशि ! तथा पुष्पोदकेन च ।। १५ ।।

वारिणा चन्दनेनाऽपि स्नापयेत् परमेश्वरीम् ।
नारिकेलोदकैश्चैव सर्वौषधिजलैरपि ।। १६ ।।

पञ्चामृतैः पञ्चगव्यैः स्नापयेत् परमेश्वरीम् ।
तप्तं शीतं जलं वर्ज्यं किञ्चिदुष्णेन स्नापयेत् ।। १७ ।।

अत्युष्णे वज्रपातः स्यात् तस्मात् तत् परिवर्जयेत् ।

पञ्चामृतमाह यामले—

घृतं दधि तथा क्षीरं शर्करामधुसंयुतम् ।। १८ ।।

पञ्चामृतमिदं ख्यातं प्रत्येकं तु जलं पलम् ।

पञ्चगव्यपरिमाणम्

पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ॥ १९ ॥

घृतं च पलमात्रं स्याद् गोमयं तोलकद्वयम् ।
दधि प्रसृतिमात्रं स्याद् पञ्चगव्यमिति स्मृतम् ॥ २० ॥

अथवा पञ्चगव्यानां समानो भाग इष्यते ।
अतिक्रान्तं तु षड्रात्रं दधिस्नानेन वर्जयेत् ॥ २१ ॥

संवत्सरात् परं त्वाज्यं षड्मासान्ते च माक्षिकम् ।
गुडं च शर्करां चैव सर्वं व्रीहिं च वत्सरात् ॥ २२ ॥

वर्जयेदिति पूर्वेणान्वयः । एतानि न दद्यादित्यर्थः ।

देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ॥ २३ ॥

पलानि तत्र देयानि श्रद्धया सप्तविंशतिः ।
अष्टोत्तरशतपलं स्नाने देयं च सर्वदा ॥ २४ ॥

द्वे सहस्रे पलानां तु महास्नाने तु संख्यया ।
पलं तु लौकिकैर्मानैः साष्टरत्ति द्विमासकम् ॥ २५ ॥

तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम् ।
पलं पलं पञ्चगव्यं नित्यस्नाने तदर्द्धकम् ॥ २६ ॥

अशक्तानां विधिं वक्ष्ये कृच्छ्राणां परमेश्वरि ! ।
गुणतोलकहीनं च न दद्यात् स्नानकर्मणि ॥ २७ ॥

स्नानं समाप्य तां देवीं स्थापयेत् स्वर्णपीठके ।
तस्मादुद्धृत्य मतिमान् नाभेरूर्ध्वं निवेशयेत् ॥ २८ ॥

तत्रैव पीठं सम्पूज्य चार्घपात्रादिकं चरेत् ।
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत् ॥ २९ ॥

गायत्रीमाह—

प्रणवं यन्त्रराजाय विद्महे तदनन्तरम् ।

ज्ञानार्णवे—

महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् ॥ ३० ॥

आवाह्य पञ्चमुद्राभिः प्राणस्थापनमाचरेत् ।
अनामिकामूलपर्वसंसक्ताङ्गुष्ठयुग्मकम् ॥ ३१ ॥

उत्तानं हस्तयुगलं योजयेत् साधकाग्रणीः ।
अर्द्धाञ्जलिमधः कुर्यादियमावाहनी भवेत् ॥ ३२ ॥

इयं तु विपरीता स्यात् मुद्रा स्थापनकर्मणि ।
युक्तोच्छ्रिताङ्गुष्ठमुष्टी मुद्रा स्यात् सन्निधापनी ॥ ३३ ॥

अङ्गुष्ठगर्भिणी सैव मुद्रा स्यात् सन्निरोधनी ।
उत्तानमुष्टियुगला सम्मुखीकरणी मता ॥ ३४ ॥

देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ।
करावेकत्र संयोज्य अधोभूताविव प्रिये ॥ ३५ ॥

परमीकरणं नाम मुद्रेयं तु ततः परम् ।
वं बीजेनामृतीकुर्यात् मुद्रया धेनुसंज्ञया ॥ ३६ ॥

अन्योन्याभिमुखे श्लिष्टे कनिष्ठानामिके पुनः ।
तथैव तर्जनीमध्ये धेनुमुद्रा प्रकीर्तिता ॥ ३७ ॥

धेनुमुद्रा महादेवि ! अमृतीकरणे भवेत् ।
प्रतिष्ठाप्यार्चयेद् देवीमन्यथा निष्फलं भवेत् ॥ ३८ ॥

प्रतिष्ठाप्येति । यन्त्रे प्रतिमायां वा प्राणप्रतिष्ठां विधायेत्यर्थः ।

प्राणमन्त्रमाह यामले—

उच्चार्य भुवनेशानीं पाशाङ्कुशपुटां ततः ।
याद्याः सप्तमृगाङ्काढ्या व्योमसत्येन्दुसंयुतम् ॥ ३९ ॥

व्योम बिन्दुसमायुक्तं सर्गवान् भृगुरित्ययम् ।
नाम्ना देव्यास्ततः प्राणा इह प्राणास्ततः प्रिये ॥ ४० ॥

पुनर्मन्त्रं पुरस्कृत्य तथैव साधकोत्तमः ।
नाम्ना च देवतायास्तु ततो जीव इह स्थितः ॥ ४१ ॥

तथैव देवदेवेशि ! उक्त्वा सर्वेन्द्रियाणि च ।
वाङ्मनश्चक्षुरित्यन्ते श्रोत्रघ्राणपदं ततः ॥ ४२ ॥

ततः प्राणा इहागत्य सुखमुक्त्वा चिरं पठेत् ।
तिष्ठन्तु वह्निजायान्तः प्राणमन्त्र उदाहृतः ॥ ४३ ॥

स्व स्व नाम्ना महेशानि ! मन्त्रोऽयं सर्वदैवतः ।
इति प्राणान् प्रतिष्ठाप्य ततः पूजां समारभेत् ॥ ४४ ॥

स्वकल्पोक्तविधानेन मुद्रां प्रदर्श्य साधकः ।
उपचारैः षोडशभिर्देवीं प्रपूजयेद् क्रमात् ॥ ४५ ॥

देव्याज्ञया परीवारान् पूजयेत् परमेश्वरि !
ततो जपेत् सहस्रं तु शतमष्टोत्तरं प्रिये ॥ ४६ ॥

बलिदानं ततः कृत्वा प्रणमेच्चक्रराजकम् ।
शतमष्टोत्तरं होमं कुर्याच्च साधकोत्तमः ॥ ४७ ॥

निजमन्त्रेण देवेशि ! जुहुयाच्च चक्रसिद्धये ।
आहुत्यन्ते चक्रराजे हुतशेषं विनिक्षिपेत् ॥ ४८ ॥

पूर्णान् दत्त्वा तु होमान्ते तज्जलैरभिषेचयेत् ।
मन्त्राभिषिक्तं चक्रं तत् सर्वेषां सिद्धिदायकम् ॥ ४९ ॥

गुरवे दक्षिणां दद्याद् गां च दद्याद् पयस्विनीम् ।
भूमिं वृत्तिकरीं दद्यात् पुत्रपौत्रानुयायिनीम् ॥ ५० ॥

संहारमुद्रया देव्या विसर्जनमतः परम् ।
प्रतिष्ठयेच्चक्रराजमनेन विधिना यदि ।। ५१ ।।

पुरश्चर्याफलं तस्य सर्वसिद्धियुतस्य च ।
गुरोराज्ञां प्रमाणेन यन्त्रं मूर्द्ध्नि निधापयेत् ।। ५२ ।।

गृहीतं यन्त्रमेवेदं क्वापि नैव प्रकाशयेत् ।
यन्त्रमन्त्रप्रकाशे तु क्रुद्धा भवति पार्वति ।। ५३ ।।

निजमन्त्राभिषिक्तञ्च गुरोरपि न दर्शयेत् ।
यन्त्रग्रहणकाले च यदि स्यात् मेघगर्जनम् ।। ५४ ।।

उल्लुलुध्वनिराकस्मादथवा शङ्खनिस्वनः ।
तदा मन्त्री झटित्येव सिद्धकार्यो न संशयः ।। ५५ ।।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
ग्रहणं यन्त्रमन्त्राणां शुभदं तत् प्रकीर्त्तितम् ।। ५६ ।।

## अथ बलिदानम्

मुण्डमालायाम्--

नरश्च्छागस्तथा मेषो महिषः शशकस्तथा ।
शल्लकी शूकरश्चैव बलयः परिकीर्त्तिताः ।। ५७ ।।

नरबलिस्तु राज्ञामेव--

राजा नरबलिं दद्यान्नान्यो हि परमेश्वरि ।
सिंहव्याघ्रनरान् दत्त्वा ब्राह्मणो रौरवं व्रजेत् ।। ५८ ।।

युवानं व्याधिहीनं च सुश्रीकं लक्षणान्वितम् ।
सर्वावयवसम्पन्नं बलिं दद्यात् सुशोभनम् ।। ५९ ।।

तरुणं सुन्दरं कृष्णं क्षतादिदोषवर्जितम् ।
स्नापायित्वा बलिं तत्र भूषयेत् पुष्पचन्दनैः ।। ६० ।।

भूषयेद् रक्तमाल्येन सिन्दूरेण विशेषतः ।
उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा ।। ६१ ।।

समानीय स्ववामे च मूलेन प्रोक्षणं चरेत् ।
संप्रोक्षणं विधायैव बलिं सम्पूजयेदथ ।। ६२ ।।

ब्रह्मरन्ध्रे च ब्रह्माणं तन्नासायां च मेदिनीम् ।
कर्णयोश्च तथाकाशं जिह्वायां सर्वतोमुखम् ।। ६३ ।।

ज्योतींषि नेत्रयोर्विष्णुं वदने परिपूजयेत् ।
ललाटे पूजयेच्चन्द्रं शक्रं दक्षिणगण्डतः ।। ६४ ।।

वामगण्डे तथा वह्निं ग्रीवायां समवर्त्तनम् ।
रोमकूपे धृतिं चैव भ्रुवोर्मध्ये प्रचेतसम् ।। ६५ ।।

नासामूले च श्वसनं स्कन्धे चैव महेश्वरम् ।
हृदये सर्वराजेन्द्रं पूजयित्वा पठेदिदम् ।। ६६ ।।

महातपोभिर्ज्ञानैश्च यज्ञैर्यत् साध्यते नृभिः ।
तन्मे देहि महाभाग ! सत्वरं चाप्नुयां श्रियम् ।। ६७ ।।

शिवबुद्ध्या च संपूज्य उत्सृजेच्च ततः परम् ।
ततो देवीं समुद्दिश्य काममुद्दिश्य चात्मनः ।। ६८ ।।

इत्युत्सृज्य बलिं पश्चात् करवालं प्रपूजयेत् ।
खड्गाग्रे पूजयेन्मन्त्री ब्रह्मवागीश्वरीं तथा ।। ६९ ।।

मध्ये च पूजयेद् देवि ! लक्ष्मीनारायणावपि ।
मूले च पूजयेन्मन्त्री उमया च महेश्वरम् ।। ७० ।।

एवं विधानैः सम्पूज्य नमस्कुर्यात् प्रयत्नतः ।
खड्ग त्वं शिवरूपोऽसि क्रोधभैरवसंज्ञकः ।। ७१ ।।

दुर्गाप्रीतिकरो नित्यं कालीशक्तेरिवाऽपरा ।
खड्गाय खरशाणाय शक्तिकार्यार्थतत्पर ।। ७२ ।।
पशुच्छेद्यस्त्वया शीघ्रं खड्गनाथ ! नमोऽस्तुते ।
एवं सम्पूज्य तं खड्गमुत्तोल्य साधकोत्तमः ।। ७३ ।।
छेत्ता पूर्वमुखो भूत्वा बलिमुत्तरवक्त्रकम् ।
आं हुं फट् इति मन्त्रेण छेदयित्वा ततः पशुम् ।। ७४ ।।
ततो बलीनां रुधिरं तोयसैन्धवसत्फलैः ।
मधुभिर्गन्धपुष्पैश्च स्वधिवास्य प्रयत्नतः ।। ७५ ।।
गन्धपुष्पोक्षितं कृत्वा चोत्सृजेन्मूलमुच्चरन् ।
प्रणवं वाग्भवं लक्ष्मीं ततः कौशिकीं शब्दतः ।। ७६ ।।
रुधिरेण ततः पश्चादाप्यायतां समुच्चरेत् ।
निवेद्य रुधिरं देवि ! शिरे दद्यात् प्रदीपकम् ।। ७७ ।।
ततो निवेदयेन्मन्त्री ताम्बूलं सुमनोहरम् ।

### रुधिरमस्तकस्थापनक्रमः

रुधिरमस्तकस्थापनक्रममाह तन्त्रे—

नारं सव्ये शिरोरक्तं देव्याः सम्यग् नियोजयेत् ।। ७८ ।।
छागं तु वामतो दद्यात् माहिषं वितरेत् पुरः ।
दक्षिणे वामतो दद्यादग्रतो देहशोणितम् ।। ७९ ।।
यदा कटकटाशब्दो दन्तानां श्रूयते क्वचित् ।

यामले—

तदा तु मरणं विद्याद्धानिं तत्र विनिर्दिशेत् ।। ८० ।।
यदाश्रु दृश्यते नेत्रे तदा हानिं विनिर्दिशेत् ।

### बलिमस्तकपतनफलम्

पूर्वोत्तरे च दिग्भागे पतते यदि मस्तकम् ।। ८१ ।।

सर्वसम्पत्करं विद्याद् राज्ञां राज्यं विनिर्दिशेत् ।
ईशानाग्नयोर्मध्यभागे पतते यदि मस्तकम् ।। ८२ ।।
ततः स्वल्पेन कालेन सर्वसिद्धिर्भवेद् ध्रुवम् ।
यदि वायव्यदिग्भागे नैर्ऋते दक्षिणेऽपि वा ।। ८३ ।।
मस्तकं पतते जातु तस्य हानिं विनिर्दिशेत् ।

### बलिमस्तके दीपदानम्

यामले—

ग्राहाणां कच्छपानां च गोधानां च विशेषतः ।। ८४ ।।
मत्स्यानां दक्षिणां चैव न दीपं दीपयेच्छिरे ।
शीर्षोपरि ज्वलद्दीपो यावत्कालं प्रवर्त्तते ।। ८५ ।।
तावत्कालं वसेत् स्वर्गे तस्माद् यत्नेन दापयेत् ।

रुद्रयामले—

लोमदाहोद्भवं गन्धं घ्रात्वा देवी प्रसीदति ।। ८६ ।।
तस्मात् समर्पयेद् दीपं तस्य पात्रं विवर्जयेत् ।
विधिवद् बलिदानेन चतुर्वर्गफलं भवेत् ।। ८७ ।।

### अवैधहिंसायां दोषः

अविधानेन हिंसायां दोषमाह कुलार्णवे ।
अविधानेन यो हन्यादात्मार्थं प्राणिनः प्रिये ।। ८८ ।।
निवसेन्नरके घोरे युगानि पशुलोमभिः ।
स रक्तबिन्दुपाती च तिर्यग्योनौ प्रजायते ।। ८९ ।।
अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्त्ता च खादिताऽष्टौ च घातकाः ।। ९० ।।

रुद्रयामले—

धनेन क्रायिको हन्ता खादिता चोपभोगतः ।
घातको वधतश्चैव त्रिविधो वधवान् ध्रुवम् ।। ९१ ।।

यामले—

पितृदैवतयज्ञेषु वैधहिंसा विधीयते ।

अन्यत्रापि—

अहिंसा परमो धर्मो नास्त्यहिंसा परं सुखम् ॥ ९२ ॥

विधिना या भवेद् हिंसा सा त्वहिंसा प्रकीर्त्तिता ।
भूतहिंसा न कर्तव्या पशुहिंसा विशेषतः ॥ ९३ ॥

बलिदानं विना देवि ! हिंसां सर्वत्र वर्जयेत् ।

यामले—

हन्यान्मन्त्रेण चानेन त्वभिमन्त्र्य पशुं शिवे ॥ ९४ ॥

गन्धपुष्पाक्षतैः पूज्य स्त्वन्यथा नरकं व्रजेत् ।
पापोपजनिका हिंसा तत् कथं स्वर्गसाधनम् ॥ ९५ ॥

अश्वमेधादियज्ञेषु वाजिहत्यां कथं चरेत् ।

दृष्टान्तमाह यामले—

येनैव विषखण्डेन म्रियन्ते सर्वजन्तवः ॥
तेनैव विषखण्डेन भिषक् नाशयते विषम् ॥ ९६ ॥

तस्मादविधिना हिंसा पापजनिका, विधिबोधिता हिंसा स्वर्गजननिका इति निर्गलितार्थः ।

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां यन्त्रप्रतिष्ठादिनिर्णयोनाम त्रयोदशोल्लासः ॥

## चतुर्दशोल्लासः

### उपचारविधिः

उपचारं प्रवक्ष्यामि शृणु पार्वति ! सादरम् ।
विनोपचारैर्या पूजा सा पूजा न प्रसीदति ॥ १ ॥
अष्टादशोपचारास्तु सर्वेषामुत्तमाः प्रिये ।
षोडशेति प्रधानाश्च दशधास्तदनु स्मृताः ॥ २ ॥
पञ्चधास्तदनु प्रोक्ताः कर्तव्या भूतिमिच्छता ।

फेत्कारिणीतन्त्रे—

आसनं स्वागतं पाद्यमर्घ्यमाचमनं तथा ॥ ३ ॥
स्नानं वासश्चोपवीतं भूषणानि च सर्वशः ।
गन्धपुष्पे धूपदीपौ तथान्नं चापि दर्पणम् ॥ ४ ॥
माल्यानुलेपनं चैव नमस्कारविसर्जनम् ।
अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत् ॥ ५ ॥

तन्त्रे—

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानवसनाभरणानि च ॥ ६ ॥
गन्धपुष्पधूपदीपनैवेद्यवन्दनं तथा ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ ७ ॥
पाद्यार्घ्याचमनीयं च मधुपर्काचमं तथा ।
गन्धादयो नैवेद्यान्ता उपचारा दश स्मृताः ॥ ८ ॥
गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ।
प्रदद्यात् परमेशानि ! पञ्च पूजोपचारकान् ॥ ९ ॥

## पाद्यादिनिरूपणम्

पाद्यार्थमुदकं पाद्यं चन्दनागुरुसंयुतम् ।
एतच्छ्यामाकदूर्वाब्जविष्णुक्रान्तामितीरितम् ॥ १० ॥

पाद्यं पात्रे प्रदातव्यमर्घ्यं चैवार्घ्यपात्रके ।
रक्तबिल्वाक्षतैर्पुष्पैर्दधिदूर्वातिलैर्जलैः ॥ ११ ॥

सामान्यः सर्वदेवानामर्घोऽयं परिकल्पितः ।
अभावे दधिदुग्धाद्यैर्मानसं परिकल्पयेत् ॥ १२ ॥

अन्तः शून्यां त्रिपत्रां च दूर्वां चार्घ्येन निक्षिपेत् ।
जातीलवङ्गकक्कोलैर्दद्यादाचमनीयकम् ॥ १३ ॥

तत् तैजसेन पात्रेण शङ्खेन वा प्रदापयेत् ।
उदकं दीयते यद् यत् सुगन्धं फेनवर्जितम् ॥ १४ ॥

आचमनीयकं देव्यै तदाचमनमुच्यते ।
दद्यादाचमनीयं तु सुगन्धसलिलैः शुभैः ॥ १५ ॥

## मधुपर्कनिरूपणम्

बृहच्छ्रीक्रमे—

नारिकेलोदकं स्वल्पं सिता दधि घृतं समम् ।
सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥ १६ ॥

आज्यं दधिमधून्मिश्रं मधुपर्कं विदुर्बुधाः ।
तद् दद्यात् कांस्यपात्रेण शोभनेन विशेषतः ॥ १७ ॥

इति वचनात् कांस्यपात्रे मधुपर्के नारिकेलोदकदाने दोषाभावः । यथा ताम्रपात्रे चरुपाके दोषाभावस्तद्वत् । तथा चोक्तम्—

ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् ।
अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ॥ १८ ॥

पयोऽनुद्‌धृतसारं च ताम्रपात्रे न दूष्यति ।

इति वचनात् ।

पात्रपरिमाणमाह—

वस्वङ्गुलन्यूनमानं न पात्रं कारयेद् बुधः ।। १९ ।।

गन्धकथनम्

सर्वेषां गन्धजातीनां प्रकृष्टो मलयोद्भवः ।
तस्मात् सर्वप्रयत्नेन दद्यान्मलयजं सदा ।। २० ।।

मध्यमानामिकाग्राभ्यामङ्गुष्ठाग्रेण पार्वति ।
दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ।। २१ ।।

पुष्पप्रकरणम्

सर्वेषां पुष्पजातीनां रक्तं शस्तं वरानने ।
देवीप्रीतिकरं प्राज्ञे ! सर्वकामफलप्रदम् ।। २२ ।।

रक्तपुष्पं च देवेशि ! तथा स्वर्णादिनिर्मितम् ।
रक्तपद्मं च वज्रं च कृष्णा तु चापराजिता ।। २३ ।।

पञ्चदेवमयं पुष्पं करवीरं मनोहरम् ।
विष्णुर्लम्बोदरः सूर्यो ब्रह्मा च कालिका तथा ।। २४ ।।

पञ्चदेवाः पञ्चदले सदा तिष्ठन्ति नान्यथा ।
जवापुष्पं महेशानि ! करवीरापराजिते ।। २५ ।।

महादेव्यै निवेद्यैव कोटिपूजाफलं लभेत् ।
एषां मध्ये वसेद् ब्रह्मा एषां मूले जनार्दनः ।। २६ ।।
एषामग्रे वसेद् रुद्रः सर्वे देवाः स्थिता दले ।। २७ ।।

एषां करवीरापराजिताजवापुष्पाणाम् इत्यर्थः ।

वृक्षे विकसिते काले देवतादिग्विनिर्णयः ।
पश्चिमस्थदले विष्णुः उत्तरे गणनायकः ॥ २८ ॥
ऐशान्यां सूर्यदेवश्च पूर्वे ब्रह्मा प्रकीर्तितः ।
दक्षिणे कालिका देवी या तु मुक्तिप्रदायिनी ॥ २९ ॥
करवीरं यथा देवि ! जवापुष्पं तथैव हि ।
यथा शुभ्रं तथा रक्तं हरितं कृष्णमेव च ॥ ३० ॥
गङ्गादिसर्वतीर्थानि तिष्ठन्ति बिन्दुगह्वरे ।
तन्मध्ये शिवलिङ्गं च महाकुण्डलिनीयुतम् ॥ ३१ ॥
गह्वरं बिन्दुरूपं च कैवल्यप्रदमुत्तमम् ।
शिवशक्तिमयं पुष्पं चतुर्वर्गफलप्रदम् ॥ ३२ ॥
सर्वपुष्पाणि चैकत्र जवाब्जपारिजातकैः ।
न समानि भवन्त्येव लक्षकोटिशतान्यपि ॥ ३३ ॥
यत्राऽपराजितापुष्पं करवीरं जवापि च ।
तिष्ठन्ति तत्र वै देवा ब्रह्मविष्णुमहेश्वराः ॥ ३४ ॥
गङ्गादिसर्वतीर्थानि तन्मूले निवसन्ति वै ।
तन्मूलं सिञ्चितं येन पूजितास्तेन देवताः ॥ ३५ ॥
अपराजितामाहात्म्यं वक्तुं न शक्यते मया ।
मल्लिकामुत्पलं रम्यं शमीं पुन्नागचम्पके ॥ ३६ ॥
अशोकं कर्णिकारं च द्रोणपुष्पं तथैव च ।
करवीरं जवापुष्पं कुङ्कुमं नागकेशरम् ॥ ३७ ॥
यः प्रयच्छति दुर्गायै स गच्छेत् परमं पदम् ।
पुष्पमूले वसेद् ब्रह्मा पुष्पमध्ये जनार्दनः ॥ ३८ ॥

पुष्पाग्रे च वसेद्रुद्रः सर्वे देवाः स्थिता दले।
चराचराश्च सकलाः सदा पुष्पवशाः स्मृताः ॥ ३९ ॥
सर्वदेवमयं पुष्पं तस्माद् देव्यै समर्पयेत्।
पुष्पैररण्यसम्भूतैः पत्रैर्गिरिसमुद्भवैः ॥ ४० ॥
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जलवर्जितैः।
आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेच्छिवाम् ॥ ४१ ॥
परारोपितवृक्षेभ्यः पुष्पाण्यानीय योऽर्चयेत्।
अविज्ञाप्यैव तस्यैव निष्फलं तस्य पूजनम् ॥ ४२ ॥

इति तु साक्षात्स्वामिपरम्, "देवार्थे कुसुमस्तेयमस्तेयं मनुरब्रवीत्" इति वचनात्।

### पुष्पादीनां पर्युषितकालः

सर्वं पर्युषितं वर्ज्यं पत्रं पुष्पं फलं जलम्।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥ ४३ ॥
अवर्ज्यं बिल्वपत्रं स्यादवर्ज्यं जलजं तथा।
पुष्पैः पर्युषितैर्देवि ! नार्चयेत् स्वर्णजैरपि ॥ ४४ ॥
बिल्वपत्रं च माघ्यं च तमालामलकीदलम्।
कह्लारं तुलसीपत्रं पद्मं च मुनिपुष्पकम् ॥ ४५ ॥
एतत् पर्युषितं न स्यात् यच्चान्यत् कलिकात्मकम्।
तिष्ठेद् दिनत्रयं शुद्धं पद्ममामलकं तथा ॥ ४६ ॥
दिनैकं करवीराणि योग्यानि च तपोधन।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥ ४७ ॥
एषां पर्युषिता शङ्का कार्या पञ्चदिनोर्द्ध्वतः।
अन्येषां कुसुमानां च यावद् गन्धविपर्ययः ॥ ४८ ॥

पुष्पं च पञ्चगव्यं च उपचारांस्तथाऽपरान् ।
घ्रात्वा निवेद्य देवेशि ! नरो नरकमाप्नुयात् ॥ ४९ ॥

अङ्गसंस्पृष्टमाघ्रातं त्याज्यं पर्युषितं बुधैः ।
केशकीटापविद्धानि शीर्णपर्युषितानि च ॥ ५० ॥

स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ।
शेफाली बकुलं चैव स्वयं शीर्णं न दूष्यति ॥ ५१ ॥

सर्वं भूमिगतं त्याज्यं शेफाली बकुलं विना ।
कृमिभक्ष्याणि भग्नानि वर्ज्यानि पतितं भुवि ॥ ५२ ॥

तमालस्य च पद्मस्य छिन्नभिन्नं न दूष्यति ।
विष्णुक्रान्ता-जवा-नागकेशरं नागवल्लभम् ॥ ५३ ॥

बन्धूकं चैव मन्दा(कह्ला)रं सवृन्तं शस्तमर्चने ।
स्वयं विकशितं पुष्पं त्याज्यं च पतितं भुवि ॥ ५४ ॥

नागवल्लभं नागचम्पकमित्यर्थः । स्वयं विकशितपुरुषेण विकशितमित्यर्थः ।

माघमासे तु देवेशि ! पूज्यपुष्पाणि द्वादश ।
कुन्दं कुरुबकं झिन्टीं केतकं निचुलं तथा ॥ ५५ ॥

नीलं च विकटं शीर्षं भृङ्गराजं च क्षुद्रकम् ।
बकुलं रञ्जनं चैव नान्यमासे यजेत् क्वचित् ॥ ५६ ॥

नाक्षतैरर्चयेद् विष्णुं न तुलस्या विनायकम् ।
न दूर्वया यजेद् दुर्गां बिल्वपत्रैर्दिवाकरम् ॥ ५७ ॥

दूर्वा निषिद्धेति यदुक्तं, तत् श्वेतदूर्वापरम् । तथाचोक्तं यामले—

रक्तमाघ्यं श्वेतदूर्वां नीलकण्ठं कुरुण्टकम् ।
न दद्याच्च महादेव्यै यदीच्छेच्छुभमात्मनः ॥ ५८ ॥

पुष्पाभावे यजेत् पत्रैः पत्राभावे तु तत्फलैः ।
अक्षतैर्वा जलैर्वापि न पूजां व्यतिलङ्घयेत् ॥ ५९ ॥

शिवे विवर्जयेत् कुन्दमुन्मत्तं च हरेस्तथा ।
देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ॥ ६० ॥

देवीनामिति आद्येतरदेवीनामित्यर्थः। अर्कपुष्पैराद्यापूजायाः प्राशस्त्यकथनात्, 'सहस्रं त्वर्काणाम्' इति कर्पूरादिस्तवाच्च। तगरं काष्ठतगरमित्यर्थः। शिवपूजायां यामले—

बकुलं मालतीं जातीं कुन्दं शेफालिकां जवाम् ।
न दद्याच्च महादेवे यदीच्छेच्छुभमात्मनः ॥ ६१ ॥

मालती मल्लिका जाती यूथिका माधवी तथा ।
तगरं कर्णिकारश्च द्रोणश्चोत्पलचम्पकौ ॥ ६२ ॥

अशोकः कुमुदश्चैव शेफालिकाकदम्बकौ ।
केतकी वनमाला च कुसुम्भकिंशुकौ तथा ॥ ६३ ॥

कह्लारबकुलं चैव लवङ्गनागकेशरौ ।
एतान्यपि प्रियाणि स्युर्न पत्रैरर्चयेच्छिवाम् ॥ ६४ ॥

जवाभिश्चैव गन्धाढ्यैर्दूर्वया श्रीफलच्छदैः ।
विना वै दूर्वया देवीपूजा नास्ति च कर्हिचित् ॥ ६५ ॥

तस्माद् दूर्वा ग्रहीतव्या सर्वपुष्पमयी हि सा ।
देवेभ्यः सर्वगन्धाढ्यमभावे तुलसीदलम् ॥ ६६ ॥

तुलस्या पूजयेद् देवान् नात्र कार्या विचारणा ।
विना तुलस्या स्नानादि श्राद्धं यज्ञं च न प्रिये ॥ ६७ ॥

सर्वं च निष्फलं प्राहुः सर्वत्रैवं विनिश्चितम् ।
दूर्वा वा तुलसी तस्मात् ग्रहीतव्या च साधकैः ॥ ६८ ॥

सुन्दरीभैरवीकालीब्रह्मविघ्नविवस्वताम् ।
तुलसीवर्जिता पूजा सा पूजा विफला भवेत् ।। ६९ ।।

### तुलसीपत्रैः शक्तेरर्चनम्

शक्तिविषये यामले—

सावित्रीं च भवानीं च दुर्गादेवीं सरस्वतीम् ।
योऽर्चयेत् तुलसीपत्रैः सर्वकामैः समृध्यते ।। ७० ।।

यामले—

रात्रावासां तु पूजायां तुलसीं वर्जयेत् सदा ।
तुलसीघ्राणमात्रेण क्रुद्धा भवति चण्डिका ।। ७१ ।।
तुलसी ब्रह्मरूपा च सर्वदेवमयी शुभा ।
सर्वदेवमयी सा तु गणेशस्य प्रिया नहि ।। ७२ ।।
लक्ष्मीदेव्याश्चाप्रिया हि तारादेव्यास्तथैव च ।
अङ्गुष्ठतर्जनीयोगैर्दक्षिणे पुष्पपातनम् ।। ७३ ।।
पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।
दुःखदं तत् समाख्यातं यथोत्पन्नं तथार्पयेत् ।। ७४ ।।
पुष्पाञ्जलिं विना देवि ! यथोत्पन्नं तथार्पयेत् ।। ७५ ।।

### पुष्पादिचयनकालः

यामले—

स्नानं कृत्वा तु ये केचिद् पुष्पं गृह्णन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति न चापि पितरस्तथा ।। ७६ ।।

एतत् तु मध्याह्नस्नानपरम् । प्रातः स्नानानन्तरं तु पुष्पादिचयनं कर्तव्यमिति साम्प्रदायिकाः । तन्त्रे—

स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं बुधः ।
तत्पुष्पैरर्चयन् देवीं ! निरये परिपच्यते ।। ७७ ।।

देवीत्युपलक्षणम् । नान्यदेवानपि यजेदिति ।

प्रातः स्नानादिकं कृत्वा पुष्पाण्यपि समाहरेत् ।
तत्पुष्पैरर्चयन् देवीं ! स पापैर्मुच्यते क्षणात् ॥ ७८ ॥

देवीत्युपलक्षणम्, अन्यदेवानपि अर्चयेदिति ।

न पुष्पच्छेदनं कुर्याद् देवार्थं वामहस्ततः ।
न दद्यात् तेन तेभ्यो वा संस्थाप्य वामहस्ततः ॥ ७९ ॥

## धूपप्रकरणम्

अगुरूशीरगुग्गुलुशर्करामधुचन्दनैः ।
सामान्यः सर्वदेवानां धूपोऽयं परिकीर्त्तितः ॥
सर्वेषामेव धूपानां दुर्गायाः गुग्गुलुः प्रियः ॥ ८० ॥

घृतयुक्तो विशेषेण सततं प्रीतिवर्द्धनः ।
धूपभाजनमस्त्रेण प्रोक्ष्याऽभ्यर्च्य हृदाणुना ॥ ८१ ॥

अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलं दहेत् ।
धूपस्थानं समभ्यर्च्य तर्जन्या वामया स्पृशन् ॥ ८२ ॥

जयध्वनिं ततो मन्त्रमातः स्वाहेत्युदीरयन् ।
अभ्यर्च्य वादयन् घण्टां तैर्धूपैर्धूपयेत् ततः ॥ ८३ ॥

मध्यमानामिकाभ्यां च मध्यपर्वणि देशिकः ।
अङ्गुष्ठाग्रेण देवेशि ! धृत्वा धूपं निवेदयेत् ॥ ८४ ॥

उत्तोल्य मूर्द्ध्नि पर्यन्तं घण्टावादेन धूपकम् ।
धूपयेदाज्यसंमिश्रं नीचैर्देवस्य देशिकः ॥ ८५ ॥

न भूमौ वितरेद् धूपं नासने न घटे तथा ।
यथा तथाधारगतं धृत्वा तं विनिवेदयेत् ॥ ८६ ॥

राशीकृतैर्न चैवात्र त्वेतैर्धूपैर्विधूपयेत् ।
तुषाग्निवत् तथा कृत्वा न तत्फलमवाप्नुयात् ॥ ८७ ॥

### दीपप्रकरणम्

न मिश्रीकृत्य दद्यात्तु दीपस्नेहघृतादिकान् ।
दत्त्वा मिश्रीकृतं स्नेहं तमिस्रं नरकं व्रजेत् ॥ ८८ ॥
वर्त्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।
आरोप्य दर्शयेद् दीपानुच्चैः सौरभशालिनः ॥ ८९ ॥

उच्चैरिति देवस्य मस्तकपर्यन्तमित्यर्थः ।

उत्तोलनं त्रिधा कृत्वा गायत्रीमूलयोगतः ।
ततो नीराजनं कुर्याद् दशवारं तु दीपकैः ॥
दातव्यः पात्रे दीपस्तु न तु भूमौ कदाचन ॥ ९० ॥
कुर्वन्तं पृथिवीतापं यो दीपमुत्सृजेन्नरः ।
तमिस्रं नरकं घोरं प्राप्नोत्येव न संशयः ॥ ९१ ॥
सर्वं सहा वसुमती सहते न त्विदं द्वयम् ।
अकार्यंपादघातं च दीपतापं तथैव च ॥ ९२ ॥
तस्मात् कुर्वीत पृथिवी तापं नाप्नोति वै यथा ।
नैव निर्वापयेद् दीपं देवार्थमुपकल्पितम् ॥ ९३ ॥
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् ।
न तेन व्यवहारोऽपि कर्तव्यः साधकोत्तमैः ॥ ९४ ॥

### नैवेद्यप्रकरणम्

नैवेद्यमाह—

कन्दुपक्वं स्नेहपक्वं घृतसंयुक्तं पायसम् ।
मनः प्रियं च नैवेद्यं दद्याद् देव्यै पुनः पुनः ॥ ९५ ॥

कन्दुपक्वमिति मृष्टतण्डुलपृथुकादीनि देयानीत्यर्थः।

यद् यद् हि वाञ्छितं वस्तु तद् दद्याद् देवपूजने ॥ ९६ ॥

बालप्रियं च नैवेद्यं दत्त्वा देवीं प्रपूजयेत्।
आत्माऽप्रियं च नैवेद्यं न दद्याद् देवपूजने ॥ ९७ ॥

स्त्रीणां प्रीतिकरं यच्च तच्चापि विनिवेदयेत्।
ताम्बूलस्य प्रदानेन देवी प्रीतिमती भवेत् ॥ ९८ ॥

### प्रदक्षिणविधि

शङ्खहस्तेन सर्वत्र सकृद् द्विर्वा प्रदक्षिणम्।
वेष्टनं च ततः कृत्वा प्रणमेद् दण्डवद् भुवि ॥ ९९ ॥

तथा त्रिधा चरेत् सम्यक् देवतायाः प्रदक्षिणम्।
एकं चण्ड्यां रवौ सप्त त्रीणि कुर्याद् विनायके ॥ १०० ॥

चत्वारि केशवे कुर्याच्छिवे चार्द्धंप्रदक्षिणम्।
दक्षिणाद् वायवीं गत्वा दिशस्तस्याश्च शाम्भवीम् ॥१०१॥

ततोऽपि दक्षिणां गत्वा नमस्कारस्त्रिकोणवत्।
त्रिकोणोऽयं नमस्कारस्त्रिपुराप्रीतिवर्द्धनः ॥ १०२ ॥

नतिस्त्रिकोणाकारा च तारादेव्याः समीरिता।
दर्शयन् दक्षिणं हस्तं मनसापि च दक्षिणः ॥ १०३ ॥

स च प्रदक्षिणो ज्ञेयः सर्वदेवौघतुष्टये।
पश्चात् कृत्वा तु यो देवं भ्रमित्वा प्रणमेन्नरः ॥ १०४ ॥

तस्येह च फलं नास्ति न परत्र दुरात्मनः।

### प्रणामविधिः

नमनं मानसं प्रोक्तं वाचिकं कायिकं तथा ॥ १०५ ॥

त्रिविधश्च नमस्कारः कायिकश्चोत्तमः स्मृतः ।
कायिकैश्च नमस्कारैर्देवास्तुष्यन्ति नित्यशः ॥ १०६ ॥
जानुभ्यामवनीं गत्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कार उत्तमः कायिकः स्मृतः ॥ १०७ ॥
पद्भ्यां काराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः ॥ १०८ ॥
पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसाऽपि च ।
पञ्चाङ्गोऽसौ नमस्कारः सर्वत्रायं विधिः स्मृतः ॥ १०९ ॥
पुटीकृत्य करौ शीर्षे दीयते च यथा तथा ।
अस्पृष्ट्वा शीर्षजानुभ्यां क्षितिं सोऽप्यधमः स्मृतः ॥ ११० ॥
कायिकस्त्रिविधः प्रोक्तो ह्यष्टाङ्गादिविभेदतः ।
अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः ॥ १११ ॥
अधमं करशीर्षाभ्यां नमस्कारं विवर्जयेत् ।
अयमेव नमस्कारो दण्डवदिति नामतः ॥ ११२ ॥
प्रणाम इति विज्ञेयः स पूर्वं प्रतिमादितः ।
या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ॥ ११३ ॥
क्रियते भक्तियुक्तेन वाचिकी तूत्तमा स्मृता ।
पौराणिकैर्वैदिकैर्वा मन्त्रैर्या क्रियते नतिः ॥ ११४ ॥
स मध्यमो नमस्कारो भवेद् वाचनिकः सदा ।
यत्तु मानुषवाक्येन नमनं क्रियते सदा ।
स वाचिकोऽधमो ज्ञेयो नमस्कारस्तु पार्वति ॥ ११५ ॥

### उपचारप्रकरणम्

अथोपचारान् कुर्वीत तन्त्रोक्तानासनादिकान् ।
आसनं कुसुमं दद्यात् स्वागतं कुशलं वदेत् ॥ ११६ ॥

देवस्य वामभागे तु दद्यान्मूलेन चासनम् ।
पौष्पं दारुमयं वास्त्रं चार्मं कौशं च तैजसम् ॥ ११७ ॥
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम् ।
नमोऽन्तं पादयोः पाद्यं शिरोमन्त्रेण देशिकः ॥ ११८ ॥
अर्घ्यं दद्यात् ततो मूर्द्ध्नि स्वधेत्याचमनं मुखे ।
स्वधेत्याचमनीयं च त्रिवारं मुखपङ्कजे ॥ ११९ ॥
स्वधान्तेनैव मनुना मधुपर्कं मुखाम्बुजे ।
स्नानं गन्धं हृदा दद्यात् पुष्पाणि वौषडित्यपि ॥ १२० ॥
स्नानार्थमुदकं दद्यात् सर्वाङ्गे परमेश्वरि ।
तोयेन प्रोक्षणं कृत्वा दुकूलं विनिवेदयेत् ॥ १२१ ॥
स्नाने वस्त्रे त्र नैवेद्ये दद्यादाचमनीयकम् ।
सर्वालङ्करणं दद्याद् यत्र यत्तु विराजते ॥ १२२ ॥
प्रतिमादौ यथायोग्यं गात्रे दद्यात् तु तत्त्वगः ।
सर्वाङ्गे चन्दनं दद्यात् पुष्पं दद्याच्छिरोपरि ॥ १२३ ॥
नमोऽन्तकौ धूपदीपौ सव्यदक्षक्रमेण तु ।
दद्यात् तु योग्यं पुरतो नैवेद्यं भोजनादिकम् ॥ १२४ ॥
नैवेद्यं च सुधान्तं हि कल्पयामि नमो वदेत् ।
निवेदयामि नैवेद्यं यद् द्रव्यैः परिकल्पितम् ॥ १२५ ॥
ततो निवेदयामीति सर्वं दद्याद् महेश्वरि ॥ १२६ ॥

### नैवद्यादीनामाच्छादनावश्यकत्वम्

गान्धर्वे—

सुनैवेद्यादिकं यत्तु गन्धपुष्पादिकं च यत् ।
सर्वस्याच्छादनं कार्यं यावदावाहयेत् पराम् ॥ १२७ ॥

राक्षसाः प्रतिगृह्णन्ति निराच्छादनकं यतः ।
देव्या नैवेद्यदाने तु यो विधिः स तु कथ्यते ।। १२८ ।।
असंस्कृतं न दातव्यं देवताभिर्न गृह्यते ।

## नैवेद्यदानविधिः

संस्कारमाहयामले—

आनीय देवीपुरतः संप्रोक्ष्य चार्घ्यवारिणा ।। १२९ ।।
अस्त्रमन्त्रेण चाभ्युक्ष्य धेनुमुद्रां प्रदर्शयेत् ।
तस्योपरि मूलमन्त्रमष्टवारं जपेत् सुधिः ।। १३० ।।
चक्रमुद्रां विधायैव चिन्तयेत् तत् सुरक्षितम् ।
यं मन्त्रैः शोषयेद् दोषं रं मन्त्रैर्दाहयेच्च तम् ।। १३१ ।।
वं मन्त्रैश्चामृतं भाव्यं ठं मन्त्रैः प्लावयेच्च तत् ।
सर्वत्र भक्ष्यद्रव्येषु एवं संस्कारमाचरेत् ।। १३२ ।।
अमृतोऽपस्तरणमसि स्वाहेति जलमर्पयेत् ।। १३३ ।।

अमुकीदेव्यै एतज्जलं 'ॐ अमृतोपस्तरणमसिस्वाहा' इति मन्त्रेण दद्यात् ।

आपोशानं जलं दत्त्वा महादेव्यै निवेदयेत् ।
इदमन्नं सोपकरणं महादेव्यै स्व(सु)धापि च ।। १३४ ।।
प्रणवाद्यैरुक्तमन्त्रैर्देवीवक्त्रे हुनेत् गुरुः ।

गुरुरित्युपलक्षणम्—

अग्रे देवस्य हस्ताभ्यामुत्थाप्य मुखसन्निधौ ।। १३५ ।।
जगन्मातर्जगद्धात्र्यमुकि देवि ततः परम् ।
निवेदयामि यत्किञ्चिद् जुषा(गृहं)णेदं हविर्मम ।। १३६ ।।
अनेन मनुना देवि ! निवेद्य प्रणवादिना ।
वामे वा दक्षिणे वापि पञ्चमुद्राः प्रदर्शयेत् ।। १३७ ।।

अङ्गुल्यः कुटिलीभूता विरलाग्राः परस्परम् ।
ग्रासमुद्रा समाख्याता सव्ये पाणौ नियोजयेत् ॥१३८॥

### प्राण्यादिमुद्रा

प्राणापानसमानाश्चोदानव्यानौ च वायवः ।
समानः पञ्चमो ज्ञेयः प्राणाः पञ्च समीरिताः ॥ १३९ ॥

प्राणमुद्रा समाख्याता प्राणे हवनकर्मणि ।
तर्जनीमध्यमाङ्गुष्ठैस्त्रिभिरेकीकृतं यदि ॥ १४० ॥

स्यादपानाहुतौ मुद्रा तथाऽनामिकमध्यमे ।
कनिष्ठेन समायुक्ता नियुक्ता व्यानहोमके ॥ १४१ ॥

निष्कनिष्ठेन या मुद्रा सा दानहवने स्मृता ।
सर्वाभिः संस्कृता मुद्रा समानाहुतिकर्मणि ॥ १४२ ॥

क्षणं विलम्ब्य देव्या तु स्वीकृतं तद् विभावयेत् ।
यावद् भुङ्क्ते हविर्देवि ! तावन् मूलं जपेत् सुधीः ॥१४३॥

ततो मूलेन सलिलं दत्त्वा हवींषि साधकः ।
तस्मात् तेजः समुन्नत्यै दत्त्वाऽपोशानमुत्तरम् ॥ १४४ ॥

एतज्जलं अमृतापिधानमसि स्वाहेति दद्यात् ।

तत आचमनं तोयं दद्याच्च मुखवासनम् ॥ १४५ ॥

स्थानं विशोध्य तन्मन्त्री ताम्बूलं च निवेदयेत् ।
उक्तेष्वेतेषु द्रव्येषु यत् किञ्चिद् दुर्लभं यदि ॥ १४६ ॥

तत् कल्पनीयं देवेशि ! मनसा भावनेन तु ।
सर्वत्रैव जलं देयमुपचारान्तरान्तरे ॥ १४७ ॥

## द्रव्याणां निर्माल्यताकालः

द्रव्यविशेषाणां निर्माल्यतानियममाह योगिनीहृदये—

मणिमुक्तासुवर्णानि देवे दत्तानि यानि वै ।
न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च ।। १४८ ।।

पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः ।
मोदकं कृषरं चैव यामार्द्धेन च सुन्दरि ।। १४९ ।।

पट्टवस्त्रं त्रिमासाच्च यज्ञसूत्रं त्वहः स्मृतम् ।
यावदुष्णं भवेदन्नं परमान्नं तथैव च ।। १५० ।।

मस्तकं रुधिरं चैव अहोरात्रेण पार्वति ।
मुहूर्त्तं दधि दुग्धं च त्वाज्यं यामेन शङ्करि ।। १५१ ।।

करवीरमहोरात्रं बिल्वपत्रं तथैव च ।
जवारक्तं च निर्माल्यं भवेत् सार्द्धैकयामके ।। १५२ ।।

यामार्द्धेनाप ईशानि ! ताम्बूलं दत्तमात्रतः ।
न निर्माल्यं च दाडिम्बं तथा बिल्वफलं प्रिये ।। १५३ ।।

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यामुपचारादिनिर्णयो नाम चतुर्दशोल्लासः ॥

## पञ्चदशोल्लासः

### अथ शाक्ताचारः

कुलचूडामणौ—

शृणुपुत्र ! रहस्यं मे समयाचारसम्भवम् ।
येन हीना न सिध्यन्ति जन्मकोटिशतैरपि ॥ १ ॥

अनित्यकर्मसंत्यागी नित्यानुष्ठानतत्परः ।
परस्यां देवतायां तु सर्वकर्म निवेदयेत् ॥ २ ॥

वृथा न कालं गमयेद् द्यूतक्रीडादिना सुधीः ।
नयेत् तु देवतापूजाजपयज्ञादिकर्मभिः ॥ ३ ॥

अन्तः शाक्ता बहिः शैवाः सभायां वैष्णवा मताः ।
सर्वदा विष्णुभावस्तु भवेत् साधकपुङ्गवः ॥ ४ ॥

यदि पश्येत् कुलतरुं प्रणमेत् साधकस्तदा ।

### कुलवृक्षाः

कुलवृक्षमाह तन्त्रे—

अशोकः केशरो बिल्वः कर्णिकारश्चूतस्तथा ॥ ५ ॥

नमेरुश्च प्रियालश्च सिन्धुवारकदम्बकौ ।
मरुबकश्चम्पकश्च बिल्वश्च द्वादश स्मृताः ॥ ६ ॥

नमेरू रुद्राक्षः । प्रियालो वृक्षविशेषः । सिन्धुवारो निशुन्दाख्यया ख्यातः । मरुवको झिन्टिका । एते द्वादशकुलवृक्षा ज्ञातव्याः ।

अन्यत्रापि—

श्लेष्मान्तकः करञ्जाख्यो निम्बाश्वत्थकदम्बकाः ।
बिल्वोऽशोकश्चम्पकश्च इत्यष्टौ कुलपादपाः ॥ ७ ॥

श्लेष्मान्तको बहेड़ावृक्ष इति ख्यातः ।

तिष्ठन्ति कुलयोगिन्यः सर्वेष्वेतेषु सर्वदा ।
न स्वपेत् कुलवृक्षाधो न चोपद्रवमाचरेत् ॥ ८ ॥

यामले—

आरामे पर्वते चैव निर्जने शून्यमण्डपे ।
चतुष्पथे कलामध्ये यदि दैवाद् गतिर्भवेत् ॥ ९ ॥

चतुष्पथे देव्याः पीठे इत्यर्थः । तथाचोक्तं यामले—

क्षणं स्थि(ध्या)त्वा मनुं जप्त्वा नत्वा गच्छेद् यथासुखम् ।
चतुष्पथः स विज्ञेयो यत्र स्यात् तारिणी शुभा ॥ १० ॥

तरणकर्तृत्वात् तारिणीत्यर्थः ।

## पीठनिरूपणम्

पीठमाह गान्धर्वे—

कामरूपं महापीठं वाराणसीं ततः परम् ।
नेपालं च महापीठं पौण्ड्रवर्द्धनकं तथा ॥ ११ ॥
पुरस्थिरं महादेवि ! चरस्थिरमतः परम् ।
पूर्णशैलं महापीठं अर्बुदं च ततः परम् ॥ १२ ॥
काश्मीरं च तथा पीठं कान्यकुब्जमथो भवेत् ।
आम्रातकेश्वरं पीठमेकाम्रं च तथा शिवे ॥ १३ ॥
त्रिस्रोतः पीठमुद्दिष्टं कामकोटिमतः परम् ।
कैलासं भूतनगरं केदारं पीठमुत्तमम् ॥ १४ ॥
श्रीपीठं च तथोङ्कारं जालन्धरमतः परम् ।
मालवं च कुलान्तं च देवमातृकमेव च ॥ १५ ॥
गोकर्णं च तथा देवि ! मारुतेश्वरमेव च ।
अट्टहासं च विरजं राजगिरिमतः परम् ॥ १६ ॥

पीठं कोल्वगिर्रिं चैव एलापुरमतः परम् ।
कालेश्वरं महापीठं प्रणवं च जयन्तिकाम् ।। १७ ।।

पीठमुज्जयर्निं चैव क्षीरिकापीठमेव च ।
हस्तिनापुरकं पीठं पीठमुड्डीशमेव च ।। १८ ।।

प्रयागं चैव षष्ठीशं मायापुरजलेश्वरौ ।
मलयं च महापीठं श्रीशैलं च तथा प्रिये ।। १९ ।।

मेरुगिर्रिं महेन्द्रं च वामनं च महेश्वरि ।
हिरण्यपुरकं पीठं महालक्ष्मीपुरं तथा ।। २० ।।

उड्डीयानं महापीठं छायापुर(पीठ)मतः परम् ।
पीठान्येतानि देवेशि ! शस्तानि जपकर्मसु ।। २१ ।।

### पीठस्थानजपफलम्

फलमाहयोगिनीहृदये—

वाराणस्यां सदा पूजा सम्पूर्णफलदायिनी ।
ततस्तद्द्विगुणा प्रोक्ता पुरुषोत्तमसन्निधौ ।। २२ ।।

ततोऽपि द्विगुणा प्रोक्ता द्वारावत्यां विशेषतः ।
सर्वक्षेत्रेषु तीर्थेषु पूजा द्वारावतीसमा ।। २३ ।।

विन्ध्ये शतगुणा प्रोक्ता गङ्गायामपि तत्समा ।
आर्यावर्ते मध्यदेशे ब्रह्मावर्त्ते तथैव च ।। २४ ।।

विन्ध्यवत् फलदा प्रोक्ता प्रयागे पुष्करे तथा ।
ततश्चतुर्गुणा प्रोक्ता करतोयानदीतटे ।। २५ ।।

ततश्चतुर्गुणा प्रोक्ता नदीकुण्डे च भैरवे ।
ततश्चतुर्गुणा प्रोक्ता वाल्मीकीश्वरसन्निधौ ।। २६ ।।

तत्र सिद्धेश्वरीयोनौ ततोऽपि द्विगुणा स्मृता ।
ततश्चतुर्गुणा प्रोक्ता लौहित्यनदकुण्डके ॥ २७ ॥
तत्समा कामरूपे तु सर्वत्रैव जले स्थले ।
देवीपूजा तथा शस्ता कामरूपे सुरालये ॥ २८ ॥
देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम् ।
अन्यत्र विरला देवी कामरूपे गृहे गृहे ॥ २९ ॥
ततश्चतुर्गुणा प्रोक्ता नदीकुण्डस्य मस्तके ।
ततोऽपि द्विगुणा प्रोक्ता दारुके शिवलिङ्गके ॥ ३० ॥
ततोऽपि द्विगुणा प्रोक्ता शैलपुत्र्याः स्वयोनिषु ।
ततः शतगुणं प्रोक्तं कामाख्यायोनिमण्डलम् ॥ ३१ ॥
कामाख्यायां महामायापूजां यदि सकृच्चरेत् ।
स चेह लभते कामं परत्र शिवरूपताम् ॥ ३२ ॥
एषु स्थानेषु देवेशि ! यदि दैवाद् गतिर्भवेत् ।
तदा पूजादिकं कृत्वा नत्वा गच्छेद् यथा सुखम् ॥ ३३ ॥

कलामध्ये कला प्रकृतिस्तस्याः समूहमध्ये गत्वा पूजादिकं कृत्वा नत्वा सुखं गच्छेदित्यर्थः । तथाचोक्तं समयातन्त्रे—

स्त्रीसमीपे कृता पूजा जपश्च परमेश्वरि ।
कामरूपाच्छतगुणोऽव्ययश्च समुदीरितः ॥ ३४ ॥

कुलार्णवेऽपि—

एकलिङ्गं श्मशानं च समूहं योषितामपि ।
नारीं च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ॥ ३५ ॥
गृध्रं वीक्ष्य महाकालीं जम्बुकीं यमदूतिकाम् ।
कृष्णमार्जारमूकाकौ श्येनं क्षेमङ्करी तथा ॥ ३६ ॥

कुररं च नमस्कुर्यादिदं मन्त्रं पठेन्नरः ।
कृशोदारि ! महाचण्डे ! मुक्तकेशि ! बलिप्रिये ।। ३७ ।।

कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये ।
पितृभूमिं व्यसुं दृष्ट्वा प्रदक्षिणमनुव्रजन् ।। ३८ ।।

प्रणम्याऽनेन मनुना मन्त्री सुखमवाप्नुयात् ।
ॐ घोरदंष्ट्रे ! करालास्ये किटिशब्दनि(प्र)नादिनी ।। ३९ ।।

गुरुघोररवास्फाले ! नमस्ते चितिवासिनि ।
रक्तवस्त्रं तथा पुष्पं विलोक्य त्रिपुराम्बिकाम् ।। ४० ।।

प्रणमेद् दण्डवद् भूमाविमं मन्त्रं पठेन्नरः ।
ॐ बन्धूकपुष्पसंकाशे ! त्रिपुरे ! भयनाशिनि ।। ४१ ।।

भाग्योदयसमुत्पन्ने ! नमस्ते वरवर्णिनि ।
कृष्णवस्त्रं तथा पुष्पं राजानं राजपुत्रक(रुष)म् ।। ४२ ।।

हस्त्यश्वरथशस्त्राणि फलकान् वीरपुरुषान् ।

फलको नट इति ख्यातः ।

महिषं कुलदेवं च दृष्ट्वा महिषमर्दिनीम् ।। ४३ ।।

प्रणमेद् जयदुर्गां च स च विघ्नैर्न लिप्यते ।
ॐ जय देवि ! जगद्धात्रि ! त्रिपुराद्ये ! त्रिदैवते ।। ४४ ।।

भक्तेभ्यो वरदे देवि ! महिषघ्नि ! नमोऽस्तुते ।
मद्यभाण्डं समालोक्य मत्स्यं मासं वरस्त्रियम् ।। ४५ ।।

दृष्ट्वा च भैरवीं देवीं प्रणमेद् विमृशन् मनुम् ।
ॐ घोरविघ्नविनाशाय कुलाचारसमृद्धये ।। ४६ ।।

नमामि वरदे ! देवि ! मुण्डमालाविभूषिते ।
रक्तधारासमाकीर्णवदने ! त्वां नमाम्यहम् ।। ४७ ।।

सर्वविघ्नहरे । देवि ! नमस्ते हरवल्लभे ।
यः शिवारुदितं श्रुत्वा शिवदूतीं शुभप्रदाम् ।। ४८ ।।
प्रणमेत् साधको भक्त्या तस्य कामः करे स्थितः ।
एतेषां दर्शनेनैव यदि नैवं प्रकुर्वते ।। ४९ ।।
शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते ।
एतेषां मारणोच्चारहिंसनं वागुरादिभि ।। ५० ।।
कुरुते यदि पापात्मा स मद्भक्तः कथं भवेत् ।
एतत् कर्त्तुं प्रसक्तो यस्तस्यार्थं तमसा लिखेत् ।। ५१ ।।

## नित्यसंङ्केतस्तवः

### श्रीदेव्युवाच

कुलचूडामणौ नित्यसङ्केतस्तवमाह--

ॐ त्रिपुरा त्रिपुरेशी च सुन्दरी पुरसुन्दरी ।
श्रीमालिनी च सिद्धाम्बा महात्रिपुरसुन्दरी ।। ५२ ।।
प्रकटास्या तथा निद्रा गुप्ता गुप्ततरा परा ।
सम्प्रदायकुला कौलरहस्यातिरहस्यगा ।। ५३ ।।
परापररहस्या च तथा कामेश्वरी शुभा ।
भगमाला तथा क्लिन्ना भेरुण्डा वह्निसुन्दरी ।। ५४ ।।
महाविद्येश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ।। ५५ ।।
ज्वालांशुमालिनी चित्रा वशिनी सुभगा कुला ।
पूर्णाख्या च तथा वत्स ! कामेशी मोदिनी तथा ।। ५६ ।।
विमला अरुणा देवी जयन्ती कुलभैरवी ।
सर्वेश्वरी तथा कौली वागिशी सर्वकामिनी ।। ५७ ।।

सिद्धेश्वरी तथा चोग्रा दुर्गा महिषमर्दिनी ।
स्वप्नावती शूलिनी च मातङ्गी सुरसुन्दरी ॥ ५८ ॥

महाकाली महोग्रा च चित्ररूपा महोदरी ।
प्राणविधा तथैकाक्षी चैकपादा महाङ्कुशा ॥ ५९ ॥

वामा शिवा तथा ज्येष्ठा सुरूपा चारुहासिनी ।
त्रिखण्डा त्रिशिरा सौरी गौरी विन्ध्यनिवासिनी ॥ ६० ॥

क्षोभिणी नादिनी भद्रा ललिता बहुरूपिका ।
सर्वसम्पत्करी तारा भवानी विश्ववासिनी ॥ ६१ ॥

कूटेश्वरी महाविद्या कथिता तव भैरव ।
उपासकान् महादेव ! शृणु चैकमनाः स्वयम् ॥ ६२ ॥

मनुश्चन्द्रः कुबेरश्च मन्मथस्तदनन्तरम् ।
लोपामुद्रापति(मुनि)र्नन्दी शत्रुः स्कन्दः शिवस्तथा ॥ ६३ ॥

क्रोधभट्टारकश्चैव शक्तिर्नाम प्रकीर्त्तिता ।
दुर्वासा व्याससूर्यौ च वशिष्ठश्च पराशरः ॥ ६४ ॥

और्वो वह्निर्यमश्चैव निरृर्तिर्वरुणस्तथा ।
वायुर्विष्णुः स्वयम्भुश्च भैरवो गणकस्तथा ॥ ६५ ॥

अनिरुद्धो भरद्वाजो दक्षिणामूर्तिरेव च ।
गणपाः कुलपाश्चैव लक्ष्मीर्गङ्गा सरस्वती ॥ ६६ ॥

धात्री शेषः प्रमत्तश्च उन्मत्तः कुलभैरवः ।
क्षेत्रपालो हनूमांश्च दक्षो गरुड एव च ॥ ६७ ॥

गुरुदेवः प्रह्लादश्च रामो रावण एव च ।
काश्यपः कौत्सकुम्भौ च जमदग्निर्भृगुस्तथा ॥ ६८ ॥

बृहस्पतिर्यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः ।
अर्जुनो भीमसेनश्च द्रोणाचार्यो वृषाकपिः ।। ६९ ।।

दुर्योधनस्तथा कुन्ती सीता च रुक्मिणी तथा ।
सत्यभामा द्रौपदी च उर्वशी च तिलोत्तमा ।। ७० ।।

पुष्पदन्तो महाबुद्धो बालः कालश्च मन्दरः ।
कैलासः क्षीरसिन्धुश्च उदधिर्हिमवांस्तथा ।। ७१ ।।

नारदश्च महावीराः कथिता वीरसाधकाः ।
महाविद्याप्रसादेन स्वस्वकर्मसमाहिताः ।। ७२ ।।

एतेषां वत्स ! नामानि नित्यविद्योपसेविनाम् ।
प्रातःकाले शुचिर्भूत्वा यः पठेत् प्रयतात्मवान् ।। ७३ ।।

पूजाकाले शुचिर्भूत्वा प्रपठेत् स्तोत्रमुत्तमम् ।
अशुचिर्वा निरालम्बामालम्ब्य च कुलान्तिके ।। ७४ ।।

नित्यपूजाफलं तस्य ददामि वरमीप्सितम् ।
चक्रसंकेतकं चैव गुरुसंकेतकं तथा ।। ७५ ।।

मन्त्रसंकेतकं चैव नामसंकेतकं तथा ।
समयाचारसंकेतं न ज्ञात्वा योऽत्र वर्त्तते ।। ७६ ।।

जपपूजार्चनाहोमस्त्वभिचाराय कल्पते ।
इदं स्तोत्रं पठित्वा तु भवेत् संकेतवान् ध्रुवम् ।। ७७ ।।

इति कुलचूड़ामणौ नित्यसंकेतस्तवराजः समाप्तः ।

देहपातेऽपि मोक्षः स्यात् समयाचारपालनात् ।। ७८ ।।

इति फलश्रुतेः वाक्यमपि ।

### अथ शिवाबलिः

विश्वसारे—

शिवाबलिं निवेद्याथ तोषयेद् जगदम्बिकाम् ।
न ददाति बलिं यस्तु शिवायाः शिवतासये ॥ ७९ ॥

स पापिष्ठो न सह्येत कुलदेव्याः प्रपूजने ।

इति यामलवचनात् । तथा च यामले—

पशुरूपां शिवां देवीं यो नाऽर्चयति निर्जने ॥ ८० ॥

शिवारावेण तस्याऽशु सर्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥ ८१ ॥

तन्त्रे—

कालिकालीति वक्तव्ये तत्रोमा शिवरूपिणी ।
शिवारूपधराऽऽयाति परिवारगणैः सह ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम् ॥ ८२ ॥

### शिवाबलेर्नित्यत्वम्

नित्यश्राद्धे यथा सन्ध्यावन्दने पितृतर्पणे ।
तथैव बलिदानेऽपि नित्यता कुलपूजने ॥ ८३ ॥

यामले—

बिल्वमूले नदीतीरे श्मशाने वापि साधकः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥ ८४ ॥

### शिवाबलिदानमन्त्रः

बलिमन्त्रमाह—

ॐ गृह्य देवि ! महाभागे ! शिवे ! कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्य बलिं तव ॥ ८५ ॥

एवमुच्चार्य दातव्यो बलिः कुलजनैः प्रिये ।
एकया भुज्यते यत्र साधकानां हिताय च ॥ ८६ ॥
तदैव सर्वशक्तीनां प्रीतिः परमदुर्लभा ।
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ॥ ८७ ॥
तदैव मङ्गलं देवि ! नान्यथा भवति ध्रुवम् ।
यदा न गृह्यते न्यूनं तदा नैव शुभं भवेत् ॥ ८८ ॥
एवं ज्ञात्वा महेशानि ! शान्तिस्वस्त्ययनं चरेत् ।
पशुशक्तिः पक्षिशक्तिर्नरशक्तिर्यथाक्रमात् ॥ ८९ ॥
पूजनाद् विगुणं कर्म सगुणं साधयेद् यतः ।
तेन सर्वप्रयत्नेन कर्तव्यं पूजनं महत् ॥ ९० ॥

## शिवपूजादिफलम्

पूजाजपादेः फलमाह—

दहेत् तृणं यथा वह्निस्तथा शत्रून् जयेत् सदा ।
स्वयं ब्रह्मा स्वयं विष्णुः स्वयं रुद्रो न संशयः ॥ ९१ ॥
अन्ते निरामयं ब्रह्म मन्त्री भवति नान्यथा ।
या नारी प्रजपेद् विद्यां सा भवेत् परमेश्वरी ॥ ९२ ॥
काकवन्ध्या च या नारी वन्ध्या वा मृतपुत्रिणी ।
पूजयित्वा लभेत् पुत्रं सत्यं सुचिरजीविनम् ॥ ९३ ॥
स्वामिनो दुर्लभा सा स्याद् धनधान्यसमन्विता ।
अन्ते च जायते गौरी सत्यं सत्यं न संशयः ॥ ९४ ॥

योगिनीहृदये—

महाविद्यां जपेन्नित्यं स्मरेद् वापि समाहितः ।
तस्य गेहे वसेल्लक्ष्मीर्जिह्वायां च सरस्वती ॥ ९५ ॥

हृदये च वसेद् देवो नारायण इति श्रुतिः ।
ब्रह्मास्ति कण्ठदेशे च अहं तिष्ठामि सम्मुखे ॥ ९६ ॥

एकीभूय समस्तैश्च देवी रक्षति साधकम् ।
लक्षमेकं जपन्मन्त्री महापापात् प्रमुच्यते ॥ ९७ ॥

लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।
हन्ति लक्षत्रयेणैव जन्म साहस्त्रिकाण्यपि ॥ ९८ ॥

चतुर्लक्षजपान्मन्त्री वागीश्वरसमो भवेत् ।
पञ्चलक्षाद् दरिद्रोऽपि साक्षाद् वैश्रवणो भवेत् ॥ ९९ ॥

जप्त्वा षड्लक्षकं देवि ! महाविद्याधरो भवेत् ।
प्रजपन् सप्तलक्षाणि खेचरी सिद्धिभाग् भवेत् ॥ १०० ॥

अष्टलक्षप्रमाणं तु जप्त्वा विद्यां महेश्वरि ।
अणिमाद्यष्टसिद्धीशो जायते नात्र संशयः ॥ १०१ ॥

नवलक्षजपाद् देवि ! रुद्रमूर्तिरिवाऽपरः ।
कर्त्ता हर्त्ता महादेवि ! लोकेऽप्रतिहतः प्रभुः ॥ १०२ ॥

दशलक्षफलं देवि ! वर्णितुं नैव शक्यते ॥ १०३ ॥

श्रीक्रमेऽपि—

मन्त्रपाशेन देवेशि ! देवतामानयेद् ध्रुवम् ।
साधकस्य कार्यसिद्धिं कृत्वा देवी गमिष्यति ॥ १०४ ॥

### अथ देवीप्रणामफलम्

अष्टोत्तरशतं कुर्यात् कालिकायाः प्रदक्षिणम् ।
सर्वकामं समासाद्य पश्चान्मोक्षमवाप्नुयात् ॥ १०५ ॥

अत्र पूर्वापरार्द्धयोर्यथाक्रमं यः स इति योज्यम् ।

ये नमन्ति नरा दुर्गां श्रद्धया परयाऽन्विताः ।
अश्वमेधफलं प्राप्य दुर्गालोकं व्रजन्ति ते ।। १०६ ।।

शाठ्येनापि नमस्कारं यः करोति सकृन्नरः ।
भगवत्यै तथाऽभक्त्या स गच्छति सुरालयम् ।। १०७ ।।

सर्वयज्ञोपवासेषु सर्वतीर्थेषु यत् फलम् ।
तत् फलं लभते लोकः प्रणम्य शिरसा सतीम् ।। १०८ ।।

संप्रसारितदेहो यो दण्डवत् पतितो भुवि ।
चाण्डिकापुरतो भक्त्या स याति परमां गतिम् ।। १०९ ।।

श्रीमद्भागवते दशमस्कन्धे रुक्मिणीवचनात्—

कात्यायनि ! महामाये ! महायोगिन्यधीश्वरि ।
नन्दगोपसुतं देवि ! पतिं मे कुरुते नमः ।। ११० ।।

हे कात्यायनि ! कात्यायनमुनिनिमित्तप्रादुर्भूते ! हे महामाये ! महती चासौ माया चेति महामाया ब्रह्मविष्णुशिवादीनामपि मोहहेतुत्वान्महामायेति ।

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ।। १११ ।।

इति मार्कण्डेय पुराणात् । हे महायोगिनि ! महायोगो जगत्सृष्ट्यादि करणम् । त्रिगुणात्मकमाया विद्यते यस्याः सा महायोगिनी । हे अधीश्वरि ! ईश्वराणां शिवशक्तिब्रह्मणामीश्वरी, 'सैव सर्वेश्वरेश्वरी'ति मार्कण्डेयवचनात् । नन्दगोपसुतं नन्दनन्दत्वेनाभिमतं परमेश्वरं श्रीकृष्णम्, तथैव देवतारूपं मे मम पतिं पाणिग्रहीतारं कुरु त्वत्प्रसादं विना किमपि कार्यं न सिध्येदतस्ते तुभ्यं नमः । कायिकवाचिकमानसिको नमस्कारः ।

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां जपादिफलनिर्णयोनाम पञ्चदशोल्लासः ।।

## षोडशोल्लासः

### जपादिफलाभावहेतुनिर्णयः

**श्रीदेव्युवाच**

महिषमर्दिनीतन्त्रे—

केन वा जप्यते विद्या केन वा न प्रजप्यते ।
फलभावाश्च नियतः कथं नाथ प्रजायते ॥ १ ॥

**श्रीमहादेव उवाच**

तवैव विदितं सर्वं जगदेतच्चराचरम् ।
तथापि शृणु चार्वङ्गि ! रहस्यं परमेश्वरि ॥ २ ॥

**संसर्गदोषः**

कलिकाले महेशानि ! पाषण्डा बहवो जनाः ।
सङ्गदोषान् महेशानि ! तत्क्षणाद्धानितां व्रजेत् ॥ ३ ॥

तस्मात् प्रयत्नतो देवि ! संसर्गं वर्जयेत् सुधीः ।
वरं चाण्डालसंस्पर्शं कुर्यात् तु साधकोत्तमः ॥ ४ ॥

तथाप्यसिद्धिजनकं सर्वदा तं परित्यजेत् ।
दूषिताः कालिकालेषु भारते विविधाः प्रजाः ॥ ५ ॥

अत एव महेशानि ! सर्वे संसर्गदूषिताः ।
घटकं ब्राह्मणं देवि ! संस्पर्शे यत्नतस्त्यजेत् ॥ ६ ॥

भारते बहवो दोषाः कलिकाले सुरार्चिते ।
ब्राह्मणाः कलिकाले तु शूद्रगेहे वराङ्गने ॥ ७ ॥

पुराणवाचनासक्ता दम्भमात्सर्यतत्पराः ।
पापिष्ठा ब्राह्मणास्ते तु चाण्डालसदृशाः प्रिये ॥ ८ ॥

न तूच्चरेत् पुराणानि कलौ शूद्रगृहे द्विजः ।
शूद्रगेहे महेशानि ! पुराणं प्रपठेद् यदि ॥ ९ ॥

एतस्य सङ्गमात्रेण सर्वावस्था भवन्ति हि ।
संसर्गात् सिद्धिहानिः स्यात् न सिध्यन्ति कदाचन ॥ १० ॥

कलौ च भारते देवि ! निन्दका बहवो जनाः ।
शिवनिन्दापरा केचिद् विष्णुनिन्दापराः परे ॥ ११ ॥

सर्वेषां दैवतानां च देवीनां च तथैव च ।
सततं कुर्वते निन्दां नात्र कुर्युर्विचारणाम् ॥ १२ ॥

परस्त्रीसङ्गमाच्चैव पुत्रमुत्पादयन्ति च ।
आत्मानं वैष्णवं मत्वा अधमा भारते कलौ ॥ १३ ॥

कर्णे कण्ठे तथा हस्ते हृदये नगनन्दिनि ।
विधृत्य तुलसीमालां तिलकं हरिमन्दिरम् ॥ १४ ॥

गृह्णीयुर्हरिनामानि सुस्वराणि गृहे गृहे ।
अन्नस्य सञ्चयं कुर्युः पाषण्डा मानवाऽधमाः ॥ १५ ॥

तेषां पापं महेशानि । वर्णितुं नैव शक्यते ।
स्वधर्मनिरतो भूत्वा हरेर्नाम वदेद् यदि ॥ १६ ॥

तदा पापान्यशेषाणि नाशयत्येव निश्चिम् ।
विहाय सन्ध्यां गायत्रीं हरिनाम स्मरेद् यदि ॥ १७ ॥

अन्यक्षराणि नामेत्र वसन्ति च शुचिस्मिते ।
तावत्संख्यान्यनेकानि पापानि च पदे पदे ॥ १८ ॥

अन्नं जलं तथा पुष्पं यद्दत्तं विष्णवे प्रिये ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम् ॥ १९ ॥

गेहे गेहे महेशानि ! वैष्णवी वैष्णवो जनाः ।
संकरा वैष्णवो यत्र स देशः पतितः सदा ॥ २० ॥

गीतमत्ता वाद्यमत्ता ब्राह्मणा नृत्यतत्पराः ।
गीतेषु जायते भावो ब्राह्मणानां गृहे गृहे ॥ २१ ॥

सद्भावो न हि चार्वङ्गि ! विष्णोरग्रे द्विजाधमाः ।
पादताडनसंख्यातांस्तत्पूर्वपुरुषान् बहून् ॥ २२ ॥

स्वर्गाच्च नरकं देवि ! पातयन्ति न चान्यथा ।
पूजाकाले तु चार्वङ्गि ! ध्यानानन्दो भवेद् यदि ॥ २३ ॥

तदैव गीतं नृत्यं च ये कुर्वन्ति द्विजातयः ।
विष्णुदुर्गाशिवाग्रे तु तदा पापं विनश्यति ॥ २४ ॥

गीतभावमयो भूत्वा यदि नृत्यं करोति हि ।
कोटिवंश्यान् समादाय न द्विजो नरकं व्रजेत् ॥ २५ ॥

कलिकाले भारते या ब्राह्मण्यो गीततत्पराः ।
तथा वाद्यरता भूत्वा नृत्यन्ति चाधमा द्विजाः ॥ २६ ॥

तासां संसर्गमात्रेण सर्वं च हानितामियात् ।
तस्मात् तु यत्नतो देवि ! संसर्गं तैर्नं कारयेत् ॥ २७ ॥

कलौ तु भारते वर्षे संसर्गान्नहि सिध्यति ।
यदि सिध्यति चार्वङ्गि ! तदा बहुदिने गते ॥ २८ ॥

भारतं कलिकाले च सर्वदोषमयं यतः ।
तत्रैकं चञ्चलापाङ्गि ! वर्त्तते मोक्षसाधनम् ॥ २९ ॥

महामाये ! महाविद्यामेकधा यदि चोच्चरेत् ।
सर्वपापविनिर्मुक्तो महामोक्षं स गच्छति ॥ ३० ॥

वर्णसङ्करजातीनां वैष्णवानां सह प्रिये ।
शक्तिः शैवो वैष्णवश्च संसर्गं यत्नतस्त्यजेत् ।। ३१ ।।

### अथ प्रायश्चित्तम्

पापमात्रनाशकं कर्म प्रायश्चित्तम् । यथाह तन्त्रे—

देहस्थसर्वपापस्य नाशनं यदि चेच्छति ।
कामं मायां तथा देवि ! मन्मथं परमेश्वरि ।। ३२ ।।
विद्यामेतां जपेद् देवि ! तत्पापस्यापनुत्तये ।
अष्टोत्तरशतं जप्त्वा तस्मात् पापाद् विमुच्यते ।। ३३ ।।

यामले च—

जाम्बूनदस्य मालिन्यं परिशुद्धं यथाऽग्निना ।
अनाचारस्य कलुषं प्रायश्चित्ताग्निना तथा ।। ३४ ।।
प्रायश्चित्तं तु पापानां मूलमष्टसहस्रकम् ।
गायत्रीं वा जपेद् देवि ! सर्वपापप्रणाशिनीम् ।। ३५ ।।

अष्टसहस्रकमिति अष्टोत्तरसहस्रमित्यर्थः । गायत्रीं वैदिकगायत्रीम् । शूद्रस्य तत्राऽनधिकारान्मूलमष्टोत्तरसहस्रं तान्त्रिकगायत्रीं वा जपेत् । स्त्रीणां तु शूद्रतुल्यत्वात् तथैवाचारः ।

### अथ धृतकवचनाशप्रायश्चित्तम्

यामले—

विधृतं कवचं देवि ! यदि नश्यति कर्हिचित् ।
तदुपायं प्रवक्ष्यामि शृणुष्व कमलानने ।। ३६ ।।
उपविश्य तथाचम्य भूतशुद्धिमथाचरेत् ।
षट्चक्राणि विचिन्त्याऽथ गुरुं शिरसि चिन्तयेत् ।। ३७ ।।
अनुलोमविलोमाभ्यां मातृकाबीजसम्पुटम् ।
कवचं तत् पठेद् देवि ! ह्यर्कावृत्तमनुक्रमात् ।। ३८ ।।

ततो जपेन्महाविद्यां सहस्रं वा शतं क्रमात् ।
विलिख्य कवचं देवि ! रक्तसूत्रेण वेष्टयेत् ॥ ३९ ॥
स्वर्णेनाऽपि पुनर्देवि ! वेष्टयेत् तत् सुदुर्लभम् ।
वेष्टयित्वा महादेवि ! स्वर्णैः परमदुर्लभम् ॥ ४० ॥
धारयेत् तत् प्रतिष्ठाप्य नूतनं कवचं ततः ।

**नष्टकवचप्रतिष्ठाक्रमः**

पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा शुभेऽहनि ॥ ४१ ॥
प्राणप्रतिष्ठामन्त्रेण प्राणांस्तत्र निवेशयेत् ।
संपूज्य देवतारूपं कवचं सर्वकामदम् ॥ ४२ ॥
ततो जपेन्महाविद्यां सहस्रं वा शतं क्रमात् ।
धारयेत् तन्महादेवि ! यथास्थानेषु साधकः ॥ ४३ ॥

इति कवचनाशप्रायश्चित्तम् ।

## अथ यन्त्रनाशप्रायश्चित्तम्

नवरत्नेश्वरे—

यदि प्रतिष्ठितं यन्त्रं दैवाद् देवि ! विनश्यति ।
उपोषणमहोरात्रमादरेण समाचरेत् ॥ ४४ ॥
येन स्वर्णादीना यन्त्रं द्रव्येण परिनिर्मितम् ।
विलिख्य यन्त्रं तत्पत्रे देवतां परिपूजयेत् ॥ ४५ ॥
उपचारैः षोडशभिः शक्तितः सुसमाहितः ।
अयुतं प्रजपेन्मन्त्रं पूजयित्वा यथाविधि ॥ ४६ ॥
मन्त्री विलोड्य तत्तोयं पीत्वा भक्षणमाचरेत् ।
तावत् कालं ब्रह्मचर्यं यावद् यन्त्रं न कारयेत् ॥ ४७ ॥
पुनर्यन्त्रं नरं रम्यमाहरेच्छुद्धयाऽन्वितः ।
आहृत्य च नवं यन्त्रं प्रतिष्ठां तस्य कारयेत् ॥ ४८ ॥

ततः प्रतिष्ठिते तस्मिन् पूर्ववत् पूजनं चरेत् ।। ४९ ।।

### अथ पूजाकाले यन्त्रादिपतनप्रायश्चित्तम्

यन्त्रं यदि पतेद् देवि ! पूजाकाले कदाचन ।
लिङ्गं वापि शिवो वापि तत्फलं शृणु पार्वति ।। ५० ।।

आयुर्हानिर्धनग्लानिर्बन्धुनाशस्तथैव च ।
भवतीति विनिश्चित्य प्रायश्चित्तमथाचरेत् ।। ५१ ।।

त्रिरात्रमेकरात्रं वा उपवासं समाचरेत् ।
मूलविद्यां जपेद् देवि ! सहस्रं साष्टकं तथा ।। ५२ ।।

जवापुष्पैश्च जुहुयाच्छतमष्टोत्तरं तथा ।
ब्राह्मणान् भोजयेद् भक्त्या जपेन् मन्त्रं समाहितः।। ५३ ।।

यन्त्रमिति शिवादेरप्युलक्षणम् ।

### मालापतनप्रायश्चित्तम्

माला यदि पतेद्धस्तात् तथैव च विनश्यति ।
सहस्रं तत्र संजप्य ब्राह्मणान् भोजयेत् ततः ।। ५४ ।।

भोजनं ब्राह्मणानां तु सर्वानिष्टस्य नाशनम् ।
गायत्रीं वा जपेद् देवि ! शतं साष्टं समाहितः ।। ५५ ।।

गायत्रीं जपेदिति तत्तद्देवताया गायत्रीं जपेदित्यर्थः ।

ततः संपूज्य तां मालां गृह्णीयात् पुनरेव हि ।
एवं कृते वरारोहे ! न विघ्नैरभिभूयते ।। ५६ ।।

### अथमालाविनाशप्रायश्चित्तम्

माला यदि विनष्टा स्यात् पूर्ववत् सकलं चरेत् ।
ततश्चाप्यपरां मालां तज्जातीयां वरानने ।। ५७ ।।

समाहृत्य प्रतिष्ठाप्य गृह्णीयात् पुनरेव हि ।

यामले—

महापातकयुक्तोऽपि गायत्रीं प्रजपेद् यदि ॥ ५८ ॥

सत्यं सत्यं महादेवि ! मुक्तो भवति तत्क्षणात् ।
अशुचिर्न स्पृशेन्मालां करभ्रष्टां न कारयेत् ॥ ५९ ॥

शब्दे जाते भवेद् रोगः करभ्रष्टा विनाशकृत् ।
छिन्ने सूत्रे भवेन्मृत्युस्तमाद् यत्नपरो भवेत् ॥ ६० ॥

तन्त्रान्तरे—

हस्तात् पतति चेन्माला न जप्तव्या तु सा बुधैः ।
प्रायश्चित्तं विधातव्यं जप्त्वा मन्त्रं सहस्रकम् ॥ ६१ ॥

सहस्रकमिति अष्टाधिकसहस्रमित्यर्थः ।

जीर्णे सूत्रे पुनः सूत्रैर्ग्रंथयित्वा शतं जपेत् ।

शतमिति मूलमन्त्रमष्टोत्तरशतं जपेदित्यर्थः ।

छिन्ना भवति चेन्माला पूजां कुर्यात् ततोऽधिकाम्॥ ६२ ॥
पुनर्ग्रंथित्वा तां मालां प्रतिष्ठां पूर्ववच्चरेत् ।
ततस्तु प्रजपेन्मालां न तत्र दोषभाग् भवेत् ॥ ६३ ॥

### अथगुरुक्रोधोपशमनप्रायश्चित्तम्

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।
उपवासं गुरुक्रोधे कृत्वा तं तु प्रसादयेत् ॥ ६४ ॥

यावत् प्रसादं नायाति तावद् वै भोजनं त्यजेत् ।
गुरौ प्रसन्ने भुञ्जीत एवं दोषो न जायते ॥ ६५ ॥

## अथाऽनिवेदितभोजनप्रायश्चित्तम्

मत्स्यसूक्ते—

अनिवेद्य न भुञ्जीत भक्ष्यभोज्यादिकं च यत् ।
अन्नं विष्ठा पयो मूत्रं यद् विष्णोरनिवेदितम् ॥ ६६ ॥

विष्णुपदं स्व स्वसाध्य देवतापरम् । अन्यत्रापि—

अदत्तं नैव भोक्तव्यमभक्ष्येण समं स्मृतम् ।
पत्रं पुष्पं फलं मूलमन्नपानौषधं प्रिये ॥ ६७ ॥
अनिवेद्य न भुञ्जीत भुञ्जीतैव निवेदितम् ।

कालिकापुराणे—

महाधीरो मुनिर्वापि ब्राह्मणश्चेतरोऽपि वा ॥ ६८ ॥
यद् यद् भक्ष्यं समर्थस्तु प्रकृष्टं स्याद् यथा तथा ।
प्रदद्यादिष्टदेवेभ्यो गृह्णीयाच्च तथा स्वयम् ॥ ६९ ॥

यामले—

यद् यथा भक्ष्यते भक्ष्यं तत् तथैव प्रदापयेत् ।
अन्यथा तत् प्रदानेन न तत्फलमवाप्नुयात् ॥ ७० ॥

यद् यद् द्रव्यं येन प्रकारेण भोक्तव्यं तद् द्रव्यमन्यथाप्रकारेण न दातव्यम् ।

अनिवेद्य हरेर्भुञ्जन् सप्तजन्मनि नारकी ॥ ७१ ॥

हरेरित्युपलक्षणम् । तथा चोक्तं कालिकापुराणे—

फलं पुष्पं च ताम्बूलमन्नपानादिकं च यत् ।
अदत्त्वा तन्महादेव्यै न भोक्तव्यं कदाचन ॥ ७२ ॥
अनिवेद्य न भुञ्जीत प्रायश्चित्तीभवेन्नरः ।
देव्याश्चाष्टशतं मन्त्रं जप्त्वा पूतो भवेन्नरः ॥ ७३ ॥

देव्या इत्युपलक्षणं स्व स्वोपासितदेवतानाम् । तथा चोक्तं यामले—

अनिवेद्य महेशानि ! भुञ्जानः पातकी भवेत् ।
इष्टमन्त्रं ततः जप्त्वा तस्मात् पापाद् विशुध्यति ॥ ७४ ॥

न च—"यो यद्देवार्चनरतः स तन्नैवेद्यभुग् भवेत्" इति वचनाद् देवतान्तरनैवेद्यभक्षणं न कर्त्तव्यमिति वाच्यम् ? "अग्राह्यं शिवनिर्माल्यम्" इति वचनमज्ञानिनाम्, ज्ञानिनां तु प्रसादभक्षणमेवावश्यकम् । तथा चोक्तं यामले—

शिवदत्तं विष्णुदत्तं गिरिजादत्तमेव च ।
प्राप्तिमात्रेण भोक्तव्यमन्यथा पातकी भवेत् ॥ ७५ ॥

अग्निपुराणे—

शिवदत्तं विष्णुदत्तं पार्वतीदत्तमेव च ।
नैवेद्यमुदरे कृत्वा नरः सायुज्यमाप्नुयात् ॥ ७६ ॥

लैङ्गे—

लिङ्गे त्यक्त्वा तु नैवेद्यं भुङ्क्ते मोहाद् विमूढधीः ।
कुम्भीपाके च नरके पच्यते नात्र संशयः ॥ ७७ ॥

एतत्तु शिवमस्तकदत्तनैवेद्यपरम् । स्कन्दपुराणे—

बाणलिङ्गे स्वयम्भूते स्फाटिके मृदि संस्थिते ।
अतः शतक्रतोः पुण्यं शम्भोर्नैवेद्यभक्षणात् ॥ ७८ ॥

आदित्यपुराणे—

निर्माल्यं धारयेद् यस्तु शिरसा पार्वतीपतेः ।
राजसूयस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ ७९ ॥

तथा च लिङ्गार्चनतन्त्रे—

ब्रह्मत्वं प्राप्तवान् ब्रह्मा योगं चान्ये महर्षयः ।
विष्णुत्वमपि विष्णुश्च शिवः केन न सेव्यते ॥ ८० ॥

निर्माल्यं हरते पापं शोकं च चरणोदकम् ।
नैवेद्यं सर्वपापानि शम्भोर्हरति निश्चितम् ।। ८१ ।।

निवेदितं च नैवेद्यं भुञ्जीत नात्र संशयः ।
नहि ये भुञ्जते मूर्खा नरकं तैः प्रपद्यते ।। ८२ ।।

नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ।
अन्यथा नैव सिद्धिः स्यादर्चको नरकं व्रजेत् ।। ८३ ।।

इत्यादि नानातन्त्रपुराणवचनैर्निवेदितमात्रं भोक्तव्यम्, न तु अनिवेदितमिति निश्चयः ।

नैवेद्यनिन्दकं दृष्ट्वा नृत्यन्ति योगिनीगणाः ।
रक्तपानोद्यताः सर्वा मांसास्थिचर्वणोद्यताः ।। ८४ ।।

तस्मान्निवेदितं देव्यै दृष्ट्वा श्रुत्वा च मानुषः ।
न निन्देन्मनसा वाचा कुष्ठव्याधिपराङ्मुखः ।। ८५ ।।

इति कालीकुलसर्वस्ववचनात् । कुमारीतन्त्रे—

देवतानां च नैवेद्यं स्त्रीभ्यो दद्यान्न कुत्रचित् ।

तन्त्रे—

स्वशक्तिभ्योऽन्यशक्तिभ्यो दत्त्वा च स्वयमाहरेत् ।। ८६ ।।

यामले—

अनेकधा पशोरन्नं भुञ्जते ये च साधकाः ।
तेभ्यः प्रकुप्यते देवी तत्संसर्गं न कारयेत् ।। ८७ ।।

तन्त्रे—

अनस्थिप्राणिसंघातं हत्वा च दशकं जपेत् ।
हत्वा च पक्षिणं सर्वं त्रिरेकादशकं जपेत् ।। ८८ ।।

यामले—

पर्वण्यपूज्य देवेशीं गुरुं शक्तिं च शक्तितः ।
अदत्त्वा[1] च बलिं तत्र मूलमष्टशतं जपेत् ।। ८९ ।।

वर्णसङ्करजातीयैर्वैष्णवस्तु सह प्रिये ।
शाक्तः शैवो वैष्णवश्च संसर्गं यत्नतस्त्यजेत् ॥ ९० ॥
तेषां मुखं समालोक्य सूर्यदर्शनमाचरेत् ।
इष्टमन्त्रं शतं जप्त्वा तस्मात् पापाद् विशुध्यति ॥ ९१ ॥

वैदिककर्ममात्रम् इष्टदेवताप्रीत्यर्थं कार्यम् । तन्त्रे—

देवताप्रीतिकामस्तु कर्म कुर्यात् सदाशिवे ।
अन्यकामस्तु चेत् कर्म करोति विधिमोहितः ॥ ९२ ॥
फलं न जायते तस्य दिवस्तस्मै प्रकुप्यति ।

अन्यच्च—

ये त्वकामा नराः सम्यग् कर्म कुर्वन्ति शोभने ॥ ९३ ॥
तेषां ददाति विश्वेशो भगवान् मुक्तिमीश्वरः ।

सकामानां सायुज्यादिमुक्तिः, सायुज्यं न परामुक्तिः, शरीरसम्बन्धात् । अकामानां निर्वाणमेव मुक्तिः, परमपुरुषार्थत्वात् । "न च पुनरावर्त्तते", इति श्रुतेः । ननु—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥ ९४ ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।

इति वचनान् कर्ममात्रस्य भोगनाश्यत्वे बहुजन्मार्जितानन्तकर्मणां भोगेन विनिवर्त्तनासम्भवाद् जीवस्य कथं मुक्तिरिति चेदुच्यते—

देवताप्रीतिकामस्तु कर्मं कुर्यात् सदाशिवे ॥ ९५ ॥
देवस्तु प्रीतिमापन्नो भुक्तिमुक्तिफलप्रदः ।
अकामः सात्त्विको लोके यत्किञ्चिद् विनिवेदयेत् ॥ ९६ ॥
स तत्स्थानमवाप्नोति यत्र गत्वा न शोचति ।
अत्यन्तदुःखविरहो मुक्तिरित्युच्यते बुधैः ॥ ९७ ॥

यामले—

धर्माधर्माविति प्रोक्तौ द्वौ पाशौ कर्मसंज्ञितौ ।
देवताप्रीतिकर्माणि न बन्धाय विमुक्तये ॥ ९८ ॥

मूर्द्ध्नां प्रतीच्छते देवस्तत्कामेन कृतं तु यत् ।

इत्यादिवचनाद् वर्त्तमानकर्मणाम् ईश्वरप्रीतिमात्रसाधकत्वेनाऽदृष्टाजनकत्वात् प्रारब्धातिरिक्तकर्मणामीश्वरप्रसादलब्धज्ञानेन नाशात् प्रारब्धानां च भोगादेव क्षयाल्लिङ्गदेहनाशे विमुक्तिः स्यादिति । लिङ्गदेहमाह गान्धर्वे—

पञ्चप्राण मनोबुद्धिर्दशेन्द्रियसमन्वितम् ॥ ९९ ॥
शरीरं सप्तदशकं सूक्ष्मं तल्लिङ्गमुच्यते ।

श्रीमद्भागवते द्वादशे—

घटे भिन्ने घटाकाशमाकाशं स्याद् यथा पुरा ॥ १०० ॥
एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ।

'देहे मृते' लिङ्गदेहे ध्वस्ते इत्यर्थः । अन्यथा पुनः पुनर्जन्ममृत्युर्भवत्येव । तथा चोक्तं विष्णुधर्मोत्तरे—

तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् ॥ १०१ ॥
केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ।
ततः सपिण्डीकरणे बान्धवैः स कृते नरः ॥ १०२ ॥
पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते ।
ततः स नरके याति स्वर्गे वा स्वेन कर्मणा ॥ १०३ ॥

तत्क्षणात् मृत्युक्षणात् । प्रेतशरीरं च पूर्वदेहरूपमत्यन्तगतिमत् । तदाह मार्कण्डेयपुराणे—

वायुप्रसारिते देहमतोऽन्यं प्रतिपद्यते ।
तत्प्रमाणवयोवस्थसंस्थानं प्राग्भवं यथा ॥ १०४ ॥

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां संसर्गदोषादिनिर्णयो नाम षोडशोल्लासः ॥

## सप्तदशोल्लासः

### अथ कुण्डविधिः

### ईश्वर उवाच

गोविन्दवृन्दावने—

भूमेः परिग्रहं कुर्याद् यावदायतनं भवेत् ।
गुरुराचम्य विधिवदासने उपविश्य च ॥ १ ॥

माषभक्तबलिं दद्याद् यथोक्तविधिना ततः ।
ॐ स्वर्गपातालमध्ये च ये सन्ति वास्तुदेवताः ॥ २ ॥

गृह्णन्त्विमं बलिं दत्तं तुष्टा यान्तु स्वमन्दिरम् ।
मातरो भूतवेताला ये चान्ये बलिकाङ्क्षिणः ॥ ३ ॥

देव्या पारिषदा ये च ते च गृह्णन्त्विमं बलिम् ।
एवं बलिद्वयं दत्त्वा मण्डपं कारयेद् बुधः ॥ ४ ॥

### अथमण्डपनिर्माणम्

शारदायाम्—

पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् ।
पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मितान्तरम् ॥ ५ ॥

षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ।
अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाऽभितः ॥ ६ ॥

चतुर्विंशाङ्गुलं हस्तं तन्त्रवेदविदो विदुः ।
गृहादिकुण्डकरणे वेदिकामण्डपे तथा ॥ ७ ॥

मानाङ्गुलेन कर्त्तव्यं नान्यैर्वापि कदाचन ।

### मानाङ्गुलिलक्षणम्

मनाङ्गुलिमाहतन्त्रे—

कर्त्तुर्दक्षिणहस्तस्य मध्याङ्गुलिपर्वण: ॥ ८ ॥
मध्यस्य दैर्ध्यमानेन मानाङ्गुलिरुदाहृता ।

### मण्डपस्थानपरिमाणम्

सिद्धान्तशेखरे—

स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थानमीरितम् ॥ ९ ॥
नारिकेलदलैर्वंशैश्छादयेन्मण्डपं ततः ।
चतुर्द्वारैः समायुक्तं कदलीस्तम्भसंयुतैः ॥ १० ॥
आम्रपत्रसमायुक्तरज्जुभिः परिवेष्टितम् ।
अष्टदिक्षु ध्वजानष्टौ चतुर्दिक्पालवर्णतः ॥ ११ ॥

### दिक्पालवर्णः

दिक्पालवर्णमाह शारदायाम्—

पीतो रक्तो सितो धूम्रः शुक्लो धूम्रः सितावुभौ ।
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्त्तिताः ॥ १२ ॥

### कुण्डशरीरम्

नास्ति होमो विना कुण्डं तस्मात् कुण्डं प्रशस्यते ।
कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुः ॥ १३ ॥
प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥ १४ ॥

### चतुरस्रकुण्डलक्षणम्

पूर्वापरायतं सूत्रं विन्यसेद्धस्तमानतः ।
दक्षिणोत्तरगं सूत्रं तथैव च प्रविन्यसेत् ॥ १५ ॥

तदग्रयोः प्रविन्यस्य तथा सूत्रचतुष्टयम् ।
चतुरस्रं महाकुण्डं सर्वयोगे प्रकीर्त्तितम् ॥ १६ ॥
मुष्टिमात्रमितं कुण्डं शतार्द्धे संप्रचक्षते ।
शतहोमेहरलिमात्रं हस्तमात्रं सहस्रके ॥ १७ ॥
द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।
नियुते षट्करं प्रोक्तं कोट्यामष्टकरं स्मृतम् ॥ १८ ॥

### खातपरिमाणम्

यावान् कुण्डस्य विस्तारः खननं तावदीरितम् ।
चतुर्विंशत्यङ्गुलञ्च यवशून्यं सहस्रके ॥ १९ ॥
ततो द्विहस्तमाने तु त्रिंशदङ्गुलकं स्मृतम् ।
चतुर्हस्ते मध्यमानमष्टत्रिंशत् प्रकल्पितम् ॥ २० ॥
अङ्गुलं यवशून्यं स्याल्लक्षहोमे प्रकीर्त्तितम् ।
ऋतुहस्ते तथामानं चत्वारिंशत् त्रयाधिकम् ॥ २१ ॥
अङ्गुलं नियुते प्रोक्तमधिकं यवचतुष्टयम् ।
चत्वारिंशदष्टयुतं यवसप्तसमन्वितम् ॥ २२ ॥
वसुहस्ते तथा मानमङ्गुलं कथितं बुधैः ।
शोभनं कमलं कुर्यात् कुण्डमध्ये सरन्ध्रकम् ॥ २३ ॥
सर्वेषामेव कुण्डानां मेखलास्तिस्र एव च ।
एकाङ्गुलं विहायाऽन्ते मेखलास्तस्य कारयेत् ।
अर्द्धाङ्गुलप्रमाणेन कण्ठञ्च वर्द्धयेत् क्रमात् ॥ २४ ॥

तन्त्रान्तरे—

कोणसूत्रप्रमाणेन द्विहस्तं कुण्डमुद्धरेत् ।
एवं लाक्षाधिके ज्ञेयं कुण्डं तत्र विधानतः ॥ २५ ॥

एकहस्तकुण्डस्य कोणसूत्रेण ईशानकोणसूत्रेण परितो यन्मानं तदेव पारिभाषिकं द्विहस्तादिकुण्डमानं नतु प्रकृतहस्ताद्वैगुण्यादिकमिति भावः।

## मेखलानिरूपणम्

इदानीं मेखलादीनां मानं तस्य निगद्यते।
कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम् ॥ २६ ॥
कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात्।
उत्सेधायामतो ज्ञेया द्व्येकार्द्धाङ्गुलिसम्मिताः ॥ २७ ॥
युग्गङ्गुलं योनिमानं योन्यग्रमेकमङ्गुलम्।
युगङ्गुलं नाभिपद्मं शतार्द्धे संप्रचक्षते ॥ २८ ॥
अरत्निमात्रकुण्डे तास्त्रिशद् द्वेकाङ्गुलिकात्मिकाः।
कर्तव्या मेखला योनिश्चतुरङ्गुलसम्मिता ॥ २९ ॥
एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम्।
अङ्गुलित्रितयं चैव नाभिपद्मं सुशोभनम् ॥ ३० ॥
एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः।
कर्तव्या मेखला योनिं कुर्याच्चैव षडङ्गुलम् ॥ ३१ ॥
वेदाङ्गुलं नाभिपद्मं योन्यग्रैकाङ्गुलं स्मृतम्।
कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ॥ ३२ ॥
योनि सप्ताङ्गुलोपेता योन्यग्रं चाङ्गुलिद्वयम्।
पञ्चाङ्लं नाभिपद्मं कुर्याच्चैव मनोहरम् ॥ ३३ ॥
चतुर्हस्तमिते कुण्डे वसुतर्कयुगाङ्गुलाः।
कर्तव्या मेखलास्तिस्रो योन्यग्रं चाङ्गुलित्रयम् ॥ ३४ ॥
योनिरष्टाङ्गुलोपेता नाभिपद्म षडङ्गुलम्।
कुण्डे रसकरे ताः स्युर्वंशाग्न्यर्काङ्गुलान्विताः ॥ ३५ ॥

योनिर्नराङ्गुलोपेता योन्यग्रं चतुरङ्गुलम् ।
सप्ताङ्गुलं नाभिपद्मं कुर्याच्च सुमनोहरम् ॥ ३६ ॥
अष्टहस्तमिते कुण्डे भानुपङ्क्त्यष्टकाङ्गुलाः ।
योनिर्दशाङ्गुलोपेता कर्तव्याऽधोमुखी तथा ॥ ३७ ॥
पञ्चाङ्गुलं तु योन्यग्रं कुर्यादष्टाङ्गुलं तथा ।
नाभिपद्मं लक्षहोमे तन्त्रवित्परिकल्पितम् ॥ ३८ ॥
होतुरग्रे तु तां योनिं मेखलानां परिस्थिताम् ।
गजकुम्भवदाकारां कुर्यादीषदधोमुखीम् ॥ ३९ ॥
पश्चिमाभिमुखीं योनिं कुण्डकोणेषु नार्चयेत् ।
एवं समस्तकुण्डानां व्यवस्थेयं प्रकीर्त्तिता ॥ ४० ॥

## नालनिरूपणम्

स्थलादारभ्य नालं स्याद् योन्या मध्ये सरन्ध्रकम् ।

सरन्ध्रकमित्युभयत्र सम्बध्यते । तथाचोक्तं रुद्रयामले—

योन्या मध्ये बिलं कुर्यात् तदाज्यग्राहिसञ्ज्ञकम् ॥ ४१ ॥

स्थलनियममाह क्रियासारे—

होमस्थानाद् बहिः स्थानं स्थलमित्यभिधीयते ।

गौतमीये च—

सूक्ष्माग्रं स्थूलमूलञ्च सरन्ध्रं नालमिष्यते ॥ ४२ ॥

सम्मोहन तन्त्रे—

मूलं मध्यं तथा चाग्रं क्रमाच्च षट्चतुस्त्रिकम् ।

तथा च त्रयोदशाङ्गुलीदीर्घं नालमित्यर्थः ।

नालमेखलयोर्मध्ये परिधेः स्थापनाय च ॥ ४३ ॥

रन्ध्रं कुर्याद् ततो विद्वान् द्वितीयमेखलोपरि ।

## अथकुण्डदोषाः

कुण्डदोषमाह विश्वकर्मा—

खाताधिके भवेद् रोगी हीने चैव धनक्षयः ।। ४४ ।।

वक्रकुण्डे च सन्तापो मरणं छिन्नमेखले ।
मेखला रहिते शोको ह्यधिके वित्तसंक्षयः ।। ४५ ।।

भार्याविनाशकं कुण्डं प्रोक्तं योन्या विना कृतम् ।
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम् ।। ४६ ।।

कुण्डमेवविधं न स्यात् स्थण्डिलं वा समाश्रयेत् ।

## स्थण्डिललक्षणम्

यामले—

नित्यं नैमित्तिकं काम्यं स्थण्डिलं वा समाचरेत् ।। ४७ ।।

हस्तमात्रे तु तत् कुर्याद् बालुकाभिः सुशोभनम् ।
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ।। ४८ ।।

चतुरस्रं चतुष्कोणमित्यर्थः ।

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां शाक्तानन्दतरङ्गिण्यां कुण्डनिर्णयोनाम सप्तदशोल्लासः ।

## अष्टादशोल्लासः

### अथ होमविधिः

### ईश्वर उवाच

अथाऽग्निजननं वक्ष्ये सर्वतन्त्रानुसारतः ।
गोमयेन समालिप्य कुण्डं सर्वत्र मन्त्रवित् ॥ १ ॥

सामान्यार्घ्यं प्रकल्प्याऽथ पञ्चगव्यैर्विशोधयेत् ।

### अथाष्टादशकुण्डसंस्काराः

शारदायाम्—

अष्टादशोक्ताः संस्काराः कुण्डानां तन्त्रदेशिताः ॥ २ ॥

वीक्षणं मूलमन्त्रेण शरणे प्रोक्षणं मतम् ।
तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं स्मृतम् ॥ ३ ॥

अस्त्रेण खननोद्धारौ हृन्मत्रेण प्रपूणम् ।
समीकरणमस्त्रेण सेचनं वर्मणा मतम् ॥ ४ ॥

कुहनं हेति मन्त्रेण वर्ममन्त्रेण मार्जनम् ।
विलेपनं कलारूपकल्पनं तदनन्तरम् ॥ ५ ॥

त्रिसूत्रीकरणं पश्चाद् हृदयेनाऽर्चनं मतम् ।
अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः ॥ ६ ॥

चतुष्पथं तनुत्रेण तनुयादक्षपाटनम् ।
यागे कुण्डानि संस्कुर्यात् संस्कारैरभिरीरितैः ॥ ७ ॥

अस्यार्थः—कुहनं दृढीकरणम् । विलेपनं गोमयोदकेन । कलारूपकल्पनं सोमसूर्याग्निकलात्मकचिन्तनम् । त्रिसूत्रीकरणं रक्तसूत्रेण त्रिः परिवेष्टनम् । वज्रीकरणं वज्ररूपेण चिन्तनम् । चतुष्पथं चतुस्त्रीकरणम् । अक्षपाटनमिन्द्रियोद्घाटनमिति ।

### अथ प्रकारान्तरसंस्कारः

अथवा तानि संस्कुर्याच्चतुर्भिर्वीक्षणादिभिः ।
तिस्रस्तिस्रो लिखेल्लेखा हृदा प्रागुदगग्रिकाः ॥ ८ ॥

प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ।
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥ ९ ॥

अथवा त्रिकोणं, तद्बहिः षट्कोणं, तद्बहिरष्टदलञ्च परिकल्पयेदित्यर्थः ।

चतुरस्रं चतुर्द्वारमेवं वा वह्निमण्डलम् ।
कुण्डस्योत्तरभागे च त्रिरेखा हस्तमानतः ॥ १० ॥

दक्षिणोत्तरतस्तद्वल्लिखेद् रेखात्रयं शुभम् ।
अर्घ्यादिभिः प्रोक्ष्य सर्वं हि पशुशुद्धिं समाचरेत् ॥ ११ ॥

सर्वाणि तारेणाऽभ्युक्ष्येति शेषः ।

### अथ पञ्चशुद्धिः

पञ्चशुद्धिमाह शारदायाम्—

वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ।
ताडनं हेतिमन्त्रेण कवचेनाऽथ लेपयेत् ॥ १२ ॥

अस्त्रेण रक्षणं कृत्वा ततः संस्कारमाचरेत् ।
ततो वह्नेर्योगपीठमर्चयेत् कर्णिकोपरि ॥ १३ ॥

धर्मं ज्ञानञ्च वैराग्यमैश्वर्यमग्नितो यजेत् ।
पूर्वादिदिक्षु चापूर्वानथ धर्मादिकान् यजेत् ॥ १४ ॥

मध्ये च पूजयेद् वह्नेर्नवशक्तीर्विधानवित् ।
पीताश्वेताऽरुणाकृष्णाधूम्रातीव्रास्फुलिङ्गिनी ॥ १५ ॥

रुचिरा ज्वालिनी प्रोक्ता क्रमशो नव शक्तयः ।
पूजयेन्मण्डलं तेषां कलाभिः सह मन्त्रवित् ॥ १६ ॥

अं अर्कमण्डलं ङेन्तं तथा डं सोममण्डलम् ।
मं वह्निमण्डलं तद्वदर्चयेद् गन्धपुष्पकैः ॥ १७ ॥

वागीश्वरीमृतस्नातां नीलेन्दीवरसन्निभाम् ।
वागीश्वरेण सहितामुपचारैः समर्चयेत् ॥ १८ ॥

## अथाग्निप्रणयनम्

विहिताग्निमाह तन्त्रे—

सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् ।

अग्निप्रणयनमाह—

प्राणान्तरेण पिहिते ताम्रपात्रादिके शुभे ॥ १९ ॥

अग्निप्रणयनं कुर्याच्छरावे वापि तादृशे ।

यत्तु स्मृतिसारे—

शरावे भिन्नपात्रे वा कपाले वोल्मुकेऽपि वा ॥ २० ॥
नाग्निप्रणयनं कुर्याद् व्याधिहानिभयावहम् ।

इति तस्य मुख्यपात्रसम्भवे शरावे न ग्राह्यमित्यत्र तात्पर्यम् ।

आनीयास्त्रेण नैर्ऋत्यां क्रव्यादांशं परित्यजेत् ॥ २१ ॥

अस्त्रेणैव च तत्काष्ठं नैर्ऋत्यां वर्जयेत् प्रिये ।

शारदायाम्—

संस्कुर्यात् तं यथा न्यायं देशिको वीक्षणादिभिः ॥ २२ ॥
औदर्यबैन्दवाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः ।
यो जपेद् वह्निबीजेन चैतन्यं पावके तदा ॥ २३ ॥

तारेण मन्त्रितं कृत्वा धेनुमुद्रामृतीकृतम् ।
अस्त्रेण रक्षितं पश्चात् तनुत्रेणाऽवगुण्ठितम् ॥ २४ ॥

अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः ।
प्रदक्षिणं तदा तारमन्त्रोच्चारणपूर्वकम् ॥ २५ ॥

आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ।
शिवबीजधिया देव्या योनावेव विनिक्षिपेत् ॥ २६ ॥

समयातन्त्रे--

कुशेनाच्छाद्य तद्योनिं चतुष्कोणं पटं न्यसेत् ।
ततो देवाय देव्यै च दद्यादाचमनीयकम् ॥ २७ ॥
गर्भनाड्या धृतं ध्यायेद् वह्निरूपं हरिं गुरुः ।

हरिरित्युपलक्षणं स्वस्वेष्टदेवानाम् । अत उक्तं समयातन्त्रे--

देव्या वामकरे दद्याद् रक्षार्थं धर्मकङ्कणम् ।
भूषाभिर्भूषयेद् देवीं त्रैलोक्योत्पत्तिमातृकाम् ॥ २८ ॥

अथ जिह्वामन्त्रः

रेफवाय्वधीशैर्युक्ता नादबिन्दुविभूषिताः ।
सादियान्ताश्च जिह्वानां मनवः परिकीर्त्तिताः ॥ २९ ॥

पायौ लिङ्गे च नाभौ च हृदये कण्ठमूलतः ।
लम्बिकायां भ्रुवोर्मध्ये जिह्वा ज्वालारुचो न्यसेत् ॥ ३० ॥

जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभिन्नेषु कर्मसु ।
हिरण्या गगना रक्ता कृष्णाऽन्या सुप्रभा मता ॥ ३१ ॥

बहुरूपाऽतिरक्ता च सात्त्विक्यो यागकर्मसु ।
पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ॥ ३२ ॥

लोहिताऽनन्तरं श्वेता धूमिनी च करालिका ।
राजस्यो रसना वह्नेर्विहिता काम्यकर्मसु ॥ ३३ ॥

विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा।
लोहितान्या करालास्या काली तामस ईरिताः ॥ ३४ ॥

एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः।

अथ जिह्वाधिपतिदेवताः

आमर्त्त्यपितृगन्धर्वयक्षनागपिशाचकाः ॥ ३५ ॥

राक्षसा सप्त जिह्वानामीरिता ह्यधिदेवताः।
वह्नेरङ्गमनुं न्यस्येत् तनावुक्तेन वर्त्मना ॥ ३६ ॥

सहस्रार्चिः स्वस्तिपूर्णं उत्तिष्ठपुरुषस्तथा।
धूमव्यापी सप्तजिह्वो धनुर्द्धर इतीरिताः ॥ ३७ ॥

षडङ्गमनवः प्रोक्ता जातिभिः सह संयुताः।

अथ मूर्त्तिन्यासः

शारदायाम्—

मूर्त्तिरष्टौ तनौ न्यस्येद् देशिको जातवेदसः ॥ ३८ ॥

मूर्द्ध्नि स्कन्धे वामपार्श्वे कट्यन्धुकटिपार्श्वके।
तथा स्कन्धे च विन्यस्येत् प्रादक्षिण्यक्रमेण तु ॥ ३९ ॥

जातवेदाः सप्तजिह्वो हव्यवाहनसङ्ज्ञकः।
अश्वोदरजसङ्ज्ञोऽन्यः पुनः वैश्वानराह्वयः ॥ ४० ॥

कौमारतेजाः स्याद् विश्वमुखो देवमुखः स्मृताः।
ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः ॥ ४१ ॥

एवं विन्यस्तदेहः सन् ज्वालयेन्मनुनाऽमुना।

ज्वालयेदिति ज्वालिनीमुद्रां प्रदर्शयेदित्यर्थः। तल्लक्षणं राघवीये—

मणिबन्धौ समौ कृत्वा करौ तु प्रसृताङ्गुली ॥ ४२ ॥

मध्यमे मिलिते कृत्वा अन्तरङ्गुष्ठको क्षिपेत् ।
मुद्रा सा ज्वालिनी प्रोक्ता वह्नेर्ज्वालनकर्मणि ॥ ४३ ॥

### अथ वह्निप्रज्वालनमन्त्रः

शारदायाम्—

चित्पिङ्गलं हनदहपचयुग्मानुदीर्घ्यं च ।
सर्वज्ञाज्ञापय स्वाहा मन्त्रोऽयं परिकीर्त्तितः ॥ ४४ ॥
अग्नि प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ ४५ ॥
उपतिष्ठेत् विधिवन्मनुनाऽनेन पावकम्।

शारदायाम्—

परिषिञ्चेत् ततस्तोयैर्विशुद्धैर्मेखलोपरि ॥ ४६ ॥
दर्भैः काष्ठैश्च शुद्धैश्च मूलमध्याग्रच्छादितैः ।
संस्तरेद् विधिवन्मन्त्री प्रदक्षिणावसक्ततः ॥ ४७ ॥
एवं संस्तरणं कुर्याद् वर्जयित्वात्मनो दिशम् ।

गणेश्वरविमर्शिण्याम्—

प्रागग्रैरुदगग्रैश्च दर्भैर्वह्नि परिस्तरेत् ॥ ४८ ॥
यज्ञवृक्षोद्भवं तद्वत् काष्ठैश्च परिधित्रयम् ।
मध्ये तु मेखलायान्तु संस्तरेत् तन्त्रवित्तमः ॥ ४९ ॥
अथ चेत् स्थण्डिले मन्त्री भूमौ सर्वं परिस्तरेत् ।

### अथ परिधिलक्षणम्

यज्ञकाष्ठसमुद्भूतं प्रादेशप्रमितः शुभः ॥ ५० ॥
परिधिः कथितः सर्वैर्देशिकैस्तन्त्रवित्तमैः ।
निक्षिपेद् दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः ॥ ५१ ॥

प्रादक्षिण्येन संपूज्यास्तेषु ब्रह्मादिमूर्त्तयः ।
गन्धादिभिः समभ्यर्च्य वह्निदेवं विभावयेत् ॥ ५२ ॥

## अथ वह्निध्यानम्

वह्नेर्ध्यानं यथा—

त्रिनयनमरुणाभं बन्धमौलिं तु शुक्लं,
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्ति स्वस्तिकाभीतिमुच्चै-
र्नमत कमलमालालङ्कृतांशं कृशानुम् ॥ ५३ ॥

एवं हि मनसा ध्यायेच्छान्तिकादौ गुरूत्तमः ।
कृष्णं कृष्णगतेर्वर्णं ध्यायेन्मारणकर्मणि ॥ ५४ ॥

मूर्त्तिरष्टौ समभ्यर्च्य षट्कोणे तु षडङ्गकम् ।
मध्ये षट्स्वपि कोणेषु जिह्वा ज्वालारुचो यजेत् ॥ ५५ ॥

केशरेषूक्तमार्गेण पूजयेदङ्गदेवताः ।
दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः ॥ ५६ ॥

लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान् ।

शारदायाम्—

ध्यातं वह्निं यजेन्मध्ये गन्धाद्यैर्मनुनाऽमुना ॥ ५७ ॥

वैश्वानरजातवेदपदे पश्चादिहावह ।
लोहिताक्षपदस्याऽन्ते सर्वकर्माणि साधय ॥ ५८ ॥

वह्निजायावधिः प्रोक्तो मन्त्रः पावकवल्लभः ।

कुलार्णवे—

ब्रह्माणं दक्षिणेभ्यर्च्य घृतस्थालीं प्रपूजयेत् ॥ ५९ ॥

आज्यस्थालीं समानीय क्षालयेदस्त्रमन्त्रतः ।
कुण्डाङ्गारान् समुत्तोल्य न्यसेत् तत्रोऽस्त्रमन्त्रतः ॥ ६० ॥
तस्यामाज्यं विनिक्षिप्य जानीयात् तापनं हि तत् ।

शारदायाम्—

तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः ॥ ६१ ॥
निरुह्यवायव्येऽङ्गारान् हृदा तेषु निवेशयेत् ।
इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः ॥ ६२ ॥

अर्णवे—

प्रज्वाल्य कुशगुच्छन्तु आज्ये क्षिप्त्वाऽनले क्षिपेत् ।
अभिद्योतनमित्युक्तं सर्वत्र सर्वकर्मसु ॥ ६३ ॥

शारदायाम्—

दीप्तेन दर्भयुग्मेन नीराज्याज्यं स वर्मणा ।
अग्नौ विसर्जयेद् दर्भमभिद्योतनमीरितम् ॥ ६४ ॥
पुनः कुशान् समुज्ज्वाल्य निक्षिपेदाज्यमध्यतः ।
मूलमन्त्रेण मतिमानाज्यसंस्कार ईरितः ॥ ६५ ॥
सन्दीप्य दर्भयुगलमाज्ये क्षिप्त्वाऽनले क्षिपेत् ।
गुरुर्हृदयमन्त्रेण पवित्रीकरणं त्विदम् ॥ ६६ ॥
अभिमन्त्र्य च मूलेन रक्षयेदस्त्रमुच्चरन् ।
प्रदर्श्य धेनुयोनीं च तदाज्यममृतात्मकम् ॥ ६७ ॥

### अथ होमविधिः

प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे ।
निक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लतरो स्मरेत् ॥ ६८ ॥
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ।
सुषुम्नां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि ॥ ६९ ॥

स्रक्स्रुवौ च समादाय विधिना निर्मितौ गुरुः ।
पश्चादादाय पाणिभ्यां स्रक्स्रुवौ ताव(द)धोमुखौ ॥ ७० ॥

त्रिशः प्रतापयेद् वह्नौ दर्भानादाय देशिकः ।
तदग्रमध्यमूलानि शोधयेत् तैर्यथाक्रमम् ॥ ७१ ॥

गृहीत्वा वामहस्तेन प्रोक्षयेद् दक्षिणेन तौ ।
पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत् ॥ ७२ ॥

स्रुवमादय मतिमान् धारयेत् तु विभागतः ।
वेदाङ्गुलं परित्यज्य धारयेच्छङ्खमुद्रया ॥ ७३ ॥

शारदायाम्--

स्रुवेण दक्षिणाद् भागादादाज्यं हृदा गुरुः ।
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने ॥ ७४ ॥

वामतस्तद्वदादाय वामे वह्निविलोचने ।
जुहुयादथ सोमाय स्वाहेति हृदयाणुना ॥ ७५ ॥

मध्यमाज्यं समादाय वह्नेर्भालविलोंचने ।
जुहुयादग्नीषोमाभ्यां स्वाहेति मनुना गुरुः ॥ ७६ ॥

हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय दक्षिणात् ।
जुहुयादग्नये स्विष्टकृते स्वाहेति तन्मुखे ॥ ७७ ॥

इत्यग्नेर्नेत्रवक्त्राणां कुर्याच्चोद्घाटनं गुरुः ।
सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः ॥ ७८ ॥

वैश्वानरेण मन्त्रेण त्रिवारं जुहुयाद् गुरुः ।

समयातन्त्रे—

एकैकाहुतिभिः कुर्याद् गर्भाधानादिकाः क्रियाः ॥ ७९ ॥

क्रमेण देवदेवेशि ! स्वाहान्तमूलविद्यया ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ॥ ८० ॥
जातकर्मं नामकृतिरुपनिष्क्रमणं तथा ।
चूडोपनयनं भूयो वेदाध्ययनमेव च ॥ ८१ ॥
गोदानं च विवाहश्च संस्काराः शुभकर्मणि ।
ततश्च पितरौ वह्नेः सम्पूज्य हृदयं नयेत् ॥ ८२ ॥
वह्निमन्त्रेण विधिवत् कुर्यादाहुतिपञ्चकम् ।
जुहुयात् समधिः पञ्च मूलाग्रघृतसम्प्लुताः ॥ ८३ ॥
गुरुर्हृदयमन्त्रेण विधिवत् स्वाहया विना ।

शारदायाम्—

मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद् वह्नेर्यथाविधि ॥ ८४ ॥
प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ।
अवदाय स्रुवेणाज्यं चतुः स्रुचि विधाय ताम् ॥ ८५ ॥
स्रुवेण तिष्ठन्नेवाग्नौ देशिको यतमानसः ।
जुहुयाद् वह्निमन्त्रेण वौषडन्तेन सम्पदे ॥ ८६ ॥

माधवीयसंहितायाम्—

पलाशस्यापरा वापि यज्ञीया द्वादशाङ्गुलाः ।
अवक्राश्च स्वयं शुष्काः सत्वचो निर्व्रणाः समाः ॥ ८७ ॥
दशाङ्गुला वा विहिताः कनिष्ठाङ्गुलि सम्मिताः ।
प्रादेशमात्रस्याऽलाभे होतव्याः सकला अपि ॥ ८८ ॥

गौतमीये—

महागणेशमन्त्रेण हुनेदेकादशाहुती ः ।
सामान्यं सर्वदेवानामेतदग्निमुखं स्मृतम् ॥ ८९ ॥

बहुरूपाख्यजिह्वायामाज्यञ्च परमेश्वरि ।
गन्धादिभिः समभ्यर्च्यं जुहुयात् शोडशाहुतीः ॥ ९० ॥
मूलमन्त्रेण विधिवद् वक्त्रैकीकरणं त्विदम् ।

शारदायाम्—

ततः पीठं समभ्यर्च्य देवताया हुताशने ॥ ९१ ॥
अर्चयेदग्निरूपां तां देवतामिष्टदायिनीम् ।
तन्मुखे जुहुयामन्त्री पञ्चविंशति सङ्ख्यया ॥ ९२ ॥
आज्येन मूलमन्त्रेण वक्त्रैकीकरणं त्विदम् ।
वह्निदैवतयोरैक्यमात्मना सह भावयन् ॥ ९३ ॥

मूलमन्त्रेण जुहुयादाज्यैनैकादशाहुतीः ।
नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ॥ ९४ ॥

अङ्गादि परिवाराणामेकैकामाहुतिं हुनेत् ।
पुनर्व्याहृतिभिर्हुत्वा होमं कृत्वा यथाविधि ॥ ९५ ॥

तिलेनाज्येन जुहुयात् सहस्रादि यथाविधि ।
अनुक्ते तु हरिर्द्रव्ये तिलाज्यं हविरुच्यते ॥ ९६ ॥

अल्पं तु जुहुयाद् वह्नेः पण्डितः सर्वकर्मसु ।
तथासम्पातयेद् भागेष्वाज्यस्यान्वाहुतिं क्रमात् ॥ ९७ ॥

विशेषमाह तन्त्रान्तरे—

अग्नौ स्वाहेति तद्भागे शेषमग्नौ विनिःक्षिपेत्।

ॐ भूरग्नये पृथिव्यै महते च स्वाहा। ॐ भुवो वायवे अन्तरीक्षाय च दिवे महते च स्वाहा। ॐ स्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते च स्वाहा। ॐ भूर्भुवः स्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते च स्वाहा। एवञ्च—

स्रुवञ्चैव समादाय घृतेनापूर्यते पुनः ॥ ९८ ॥

होमद्रव्याणि निक्षिप्य नाभौ संस्थाप्यते पुनः ।
अग्नेर्नामकृतिं कृत्वा दद्यात् पूर्णाहुतिं प्रिये ।। ९९ ।।
ब्रह्मार्पणेन मनुना दद्यात् पूर्णाहुतिं पुनः ।
योजयेद् हृदये धाम्नि स्वेष्टं साधकसत्तमः ।। १०० ।।

### अथाग्निमुखनिरूपणम्

शारदायाम्—

यतः काष्ठं ततः श्रोत्रं यतो धूम्रेऽत्रनासिका ।
यत्राऽल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ।। १०१ ।।
यत्र प्रज्वलितो वह्निस्तन्मुखं जातवेदसः ।

### अथ श्रोत्रादिषु होमफलम्

फलमाह शारदायाम्—

वधिरत्वं कर्णहोमे नेत्रे क्षतमवाप्नुयात् ।। १०२ ।।
नासिकायां मनः पीडा शिरो होमो हि शूलदः ।
मुखे सिन्दूरबालार्कं वह्नेर्होमः शुभावहः ।। १०३ ।।
भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभप्रदः ।
चन्द्रचन्दनकुन्दाभो धूमः सर्वार्थसिद्धिदः ।। १०४ ।।
खरवायसवच्छब्दो वह्निः सर्वविनाशकृत् ।
कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् ।। १०५ ।।
नागचम्पकपुन्नागपाटलायूथिका निभः ।
पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलसन्निभः ।। १०६ ।।
पावकस्य शुभो गन्ध इत्युक्तस्तन्त्र वेदिभिः ।
पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ।। १०७ ।।
एवं विधेषु दोषेषु प्रायश्चित्ताय देशिकः ।
मूलेनाज्येन जुहुयात् पञ्चविंशतिकाहुतीः ।। १०८ ।।

इति होमविधिनिर्णयः

## अथ सर्वमङ्गलादीनामर्थाः

इदानीं सर्वमङ्गलादिनाम्नां योगार्थानाह—

मङ्गलाऽर्हसि सर्वेषां तेन त्वं सर्वमङ्गला ।
वरदाऽसि च मर्त्यानां वरदा तेन कीर्त्यसे ॥ १०९ ॥

अशेषं जयसे दुर्गं दुर्गा तेन निगद्यसे ।
भक्तानां शं करोसीति शङ्करी त्वं तु गीयसे ॥ ११० ॥

संसारार्णवमग्नानां सर्वेषां प्राणिनामिह ।
दुर्गैका हि परः पोतो नराणां मुक्तये सदा ॥ १११ ॥

संसारार्णवमग्नानां दुर्गैका परमं पदम् ।
दुर्गैका देवताः सर्वा दुर्गैका कर्म वैदिकम् ॥ ११२ ॥

दुर्गैका परमं ज्ञानं दुर्गैका परमं बलम् ।
न त्वया रहितं किञ्चिद् भूतं स्थावरजङ्गमम् ॥ ११३ ॥

दुर्गैका परमा देवी दुर्गैका परमं पदम् ।
दुर्गैका परमं ज्ञानं दुर्गैका ज्ञानमेव च ॥ ११४ ॥

दुर्गैका परमं सत्यं दुर्गैका परमा गतिः ।
दुर्गैका परमं दैवं दुर्गैका परमौषधम् ॥ ११५ ॥

दुर्गैका सुखमत्यन्तं दुर्गैका निर्वृतिः परा ।
दुर्गैका परमा तुष्टिः दुर्गैका परमं यशः ।
दुर्गैका परमं तत्त्वं दुर्गाभिन्नमिदं जगत् ॥ ११६ ॥

प्राणप्रयाणपाथेयं संसारव्याधिभेषजम् ।
दुर्गार्णवपरित्राणं दुर्गानामाक्षरद्वयम् ॥ ११७ ॥

इति परिव्राजकाचार्यपरमहंसतीर्थावधूतश्रीमद्ब्रह्मानन्दगिरिकृतायां
शाक्तानन्दतरङ्गिण्यां होमादिनिर्णयोनामाष्टादशोल्लासः ॥

॥ समाप्तश्चायं शाक्तानन्दतरङ्गिणीत्याख्यो ग्रन्थः ॥

# परिशिष्टम्–1

## ग्रन्थे उद्धृतग्रन्थानुक्रमणिका

—: ० :—

# परिशिष्टम्–२

## श्लोकार्धानुक्रमणिका

## ए

झ



ड



त

द

### श

# ग्रन्थे शुद्धाशुद्धिप्रदर्शनम्

| अशुद्धयः | शुद्धयः |
|---|---|
| दीक्षा = | दीक्षां (पृ २, श्लो० १) |
| द्विपः = | द्वीपः (७,४८) |
| व्याधिर्वंद्धनापथ्यं = | व्याधिवर्द्धनापथ्यं (१२,९९) |
| प्राणप्रिष्ठां = | प्राणप्रतिष्ठां (२०,४०) |
| तात्तीयं = | तार्तियं (२४,७७) |
| निष्फलस्य = | निष्कलस्य (३६,२) |
| निष्कालो = | निष्कलो (३७,६) |
| परिव्रजकाचार्यं = | परिव्राचकाचार्यं (४३, अन्ते) |
| ब्रह = | ब्रह्म (४५-१४) |
| भाव चिन्ता = | भावचिन्ता (५३-९१) |
| व्रजासनं = | वज्रासनं (६८-२२) |
| संकुर्यात् = | संस्कुर्यात् (७४-३९) |
| वर्णोज्ज्लां = | वर्णोज्ज्वलां (१०५ = ७६) |
| वशेषसेतुमाह = | विशेषसेतुमाह (१२२-११) |
| शरणे = | शरेण (१४१ = ३७) |
| तत्पन्याः = | तत्पत्न्याः (१४७ = ९४) |
| एक्षद्वयं = | लक्षद्वयं (१४८ = २०८) |
| साष्टरत्ति द्विमासकम् = | साष्टरत्तिर्द्विमासकम् (१५७-२५) |
| दक्षिणां = | पक्षिणां (१६३ = ८५) |
| लामदाहोद्भूवं = | लोमदाहोद्भूवं (१६३-८५) |
| पुरुषेण = | पुष्पेण (१७० = ५५) |
| देवि ! = | देर्वि (१७२ = ७७) |
| त्र = | च (१७७ = १२२) |
| तिस्रोतः = | त्रिस्रोतः (१८२ = १४) |
| कृशोदारि ! = | कृशोदरि ! (१८५ = ३७) |

| | |
|---|---|
| काक्यमपि = | वाक्यमपि (१८८ = ७८) |
| पञ्चाङ्लं = | पञ्चाङ्गलं (२०८ = ३३) |
| शरणे = | शरेण (२११ = ३) |
| अन्तरीक्षाय = | अन्तरिक्षाय (२५२१ = ०८), |



# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
## नूतनानि प्रकाशनानि

१. **ऋग्वेदप्रातिशाख्यम्**—ग्रन्थरत्नमिदं विविधैः पाठान्तरैः संशोध्य उवटाचार्यकृत-भाष्यसहितं प्रकाशितम्— ५६-००

२. **संस्कारसारः**—श्रीदलपतिमहाराजप्रणीतोऽयं धर्मशास्त्रीयो ग्रन्थो विभिन्नैः परिशिष्टैः सम्भूष्य प्रकाशितः—

३. **अद्वैतदीपिका**—श्रीनृसिंहाश्रमविरचितेयमद्वैतदीपिका श्रीनारायणाश्रमविरचिता-द्वैतदीपिकाविवरणाख्यटीकया सनाथीकृत्य प्रकाशिता—द्वयोर्भागयोः— १०३-००

४. **न्यायमञ्जरी**—श्रीमज्जयन्तभट्टप्रणीतेयं न्यायमञ्जरी श्रीचक्रधरविरचितया 'ग्रन्थिभङ्ग' व्याख्यया समलङ्कृत्य प्रकाशिता—त्रयाणां भागानाम्— १५२-००

५. **व्योमवती**—व्योमशिवाचार्यविरचितमिदं ग्रन्थरत्नं विविधैः पाठभेद-परिशिष्टा-दिभिः सह प्रकाशितम्—द्वयोर्भागयोः— ७७-००

६. **तत्त्वचिन्तामणौ प्रामाण्यवादः**—तत्त्वचिन्तामणिग्रन्थस्य प्रामाण्यवादपर्यन्तोऽयं ग्रन्थः श्रीगौरीनाथशास्त्रिविरचितया 'प्रभा'ख्यव्याख्यया युतः सन् प्रकाशितः १५-००

७. **प्रगल्भी**—तत्त्वचिन्तामणिग्रन्थस्योपमानखण्डात्मकमिदं पुस्तकं श्रीप्रगल्भाचार्य-प्रणीतया 'प्रगल्भी'व्याख्यया समलङ्कृत्य प्रकाशितम्— १५-००

८. **अभावविमर्शः**—श्रीदीपकघोषप्रणीतमिदं ग्रन्थरत्नं नानाशास्त्रनिष्कर्षभूतं चकास्ति—१६-००

९. **दीधितिकारोपज्ञविचाराणामालोचनम्**—अनुसन्धानप्रबन्धोऽयं दीधितिकार-सिद्धान्तानां भृशं समालोचनां विदधाति— ५०-००

१०. **नित्याषोडशिकार्णवः**—तन्त्रशास्त्रस्य प्राणभूतमिदं ग्रन्थरत्नं शिवानन्दकृतया 'ऋजुविमर्शिन्या', विद्यानन्दकृतया 'अर्थरत्नावल्या' च टीकया सनाथीकृत्य प्रकाशितम्— ७६-००

११. **परमानन्दतन्त्रम्**—तन्त्रशास्त्रीयोऽयं ग्रन्थो विविधैः पाठभेद-परिशिष्टादि-भिरानुसन्धानिकफलश्रुतिभिः सम्भूष्य प्रकाशितः— ९५-००

१२. **शिवमहिम्नस्तोत्रम्**—स्तोत्रमिदं **'मधुसूदनी'**, **'नारायणी'** प्रभृतिभिः संस्कृत-टीकाभिः, अथ च हिन्दीपद्यानुवाद-हिन्दीव्याख्यादिभिः सनाथीकृत्य प्रकाशितम् २०-००

१३. **अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्**—अग्निपुराणस्य काव्यालङ्कारभाग-पर्यंतमिदं ग्रन्थरत्नं **'काव्यप्रभावृत्ति'** संस्कृतटीकयाऽथ च हिन्दीव्याख्याया सम्भूष्य प्रकाशितम्— ५६-००

१४. **पाणिनीयधातुपाठसमीक्षा**—(द्वितीयं संस्करणम्) व्याकरणशास्त्रीयोऽयं ग्रन्थः स्वीयैर्गवेषणाभरिततत्त्वैः कामं बिभर्ति महनीयामभिख्याम् । प्रथमभागस्य— ८५-००

१५. **वाल्मीकिरचनामृत**—वाल्मीकिरामायणस्य विविधान् प्रसङ्गान् उपजीव्यत्वे-नाङ्गीकृत्य विदुषा पण्डितश्रीकुबेरनाथशुक्लेन मार्मिकं तात्त्विकञ्च विवेचनमनुष्ठितम्—५६-००

**प्राप्तिस्थानम् :—विक्रयविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१००२.**